(३) साग्रिमा

**श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा ॥ १ ॥**

अग्रिमा पूर्णा । यथेववादिशब्दा यत्परास्तस्यैवोपमानताप्रतीतिरिति यद्यप्युपमानविशेषणान्येते, तथाऽपि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत् सबन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा । तथैव, "तत्र तस्येव-" (पा० सू० ५।१।११६) इत्यनेनेवार्थे विहितस्य वतेरुपादाने । 'तेन तुल्यं मुखम्'—इत्यादावुपमेये एव, 'तत्तुल्यमस्य'—इत्यादौ चोपमाने एव, 'इदं च तच्च तुल्यम्' इत्युभयत्रापि तुल्यादिशब्दाना विश्रान्तिरिति साम्यपर्यालोचनया तुल्यताप्रतीतिरिति साधर्म्यस्यार्थत्वात्तुल्यादिपदोपादाने आर्थी; तद्वत्, "तेन तुल्य क्रिया चेद्वतिः" (पा० सू० ५।१।११५) इत्यनेन विहितस्य वतेः स्थितौ आर्थी ।

---

The former could be Explicit or again Implicit, occurring in a sentence, a compound, or a Taddhita derivative, alike

*Gloss* —The former i e the Full-fledged Though words like Yathā, Iva, Vā, etc , are adjuncts (विशेषणानि) of the Upamāna, in so far as that word alone after which they occur is apprehended to be the Upamāna, yet, thanks to the magnitude of the power of words, they convey just like the genitive, on a bare hearing of them, a connection (with the Upameya also) Therefore, when they occur, there results the Explicit Upamā Likewise, it results where Vat is used in the sense of Iva, as laid down in the Sūtra, *tatra tasyeva*

Since words like Tulya etc depend on the Upameya *only in instances like* तेन (कमलेन) तुल्य मुख, or on Upamana only in instances like तद् (कमल) तुल्य अस्य (मुखस्य), *or on both, in instances like* इद (मुख) च तद् (कमल) ■ तुल्यम्, *it follows that the apprehension of their comparability* (तुल्यत्व) *becomes possible by our recalling the similarity of attributes* (*between the Upamana & Upameya*) *Thus the similarity of attributes being implied there results the Implicit Upamā when words like* तुल्य *are used*

*Similarly there results Implicit Upamā when there occurs Vat* (*in the sense of Tulya*) *as laid down in the Sūtra, tena tulyam kriyā ched vatih* (*Vat is affixed to a noun provided the action is comparable to that of the noun*)

---

प्रदीपः – यथादिशब्दानां धर्मविशेषसंबन्ध एव शक्तत्वात् । तुल्यादिशब्दास्तु नैवम् ।

प्रदीपः–'पद्मेन तुल्यं मुखम्' इत्यादावुपमेये, 'पद्मं तुल्यं मुखस्य' इत्यादावुपमाने, 'मुखं पद्मं च तुल्यम्' इत्यादावुभयत्रापि सामान्यतस्तुल्यत्वं बोधयित्वा विश्रान्तेषु तेषु धर्मविशेषं विना कथं तुल्यतेति प्रतीतानुपपत्त्या धर्मविशेषसंबन्धप्रतीतेरिति।

उ०:–षष्ठ्या एव विशिष्य दृष्टान्तत्वेनोपादाने बीजं चिन्त्यम्। नन्वेवं तुल्यादिपदैरपि चन्द्रेण तुल्यमित्यादौ तृतीयार्थान्वयद्वारा श्रुत्यैवोपमानत्वोपमेयत्वयोर्बोधात् श्रौती स्यादित्यत आह **तस्मादिति**। **प्रतीत्यनुपपत्त्येति**। अयं भावः। सादृश्यप्रयोजकसाधारणधर्मसंबन्धो ह्युपमा। सादृश्यं चातिरिक्तं पदार्थः। धर्मविशेषश्च क्वचिदुपात्तः क्वचिदाक्षिप्त इत्यन्यत्। यथादयश्च तत्प्रयोजकधर्मविशेषसंबन्ध एव शक्ता न तुल्यादयः। ते हि सदृशमात्रवाचका इति। **उपमेय इति**। समानविभक्तिकपदोपस्थाप्यत्वादिति भावः। **उपमाने इति**। तत्त्वादेवेति भावः। एवं च सादृश्यादिपदयोगेऽप्यार्थ्येव। अपरे तु 'तत्र साधारणधर्मसंबन्ध उपमा'। उपमानत्वं च साधारणधर्मवत्त्वेनेतरपरिच्छेदकत्वम्। तद्धर्मवत्तया परिच्छेद्यत्वं चोपमेयत्वमित्युपमानानीति (पा. सू. २।१।५५) सूत्रे भाष्ये स्पष्टम्। उपमानविशेषणानि ते इति। उपमाननिष्ठसाधारणधर्मबोधकानीत्यर्थः। एवमुपमानत्वमपीवाद्यर्थः। यदोपमानविशेषणोपमानत्वद्योतकास्ते इत्यर्थः। **उपमाने तत्संबंधमिति**। उपमानत्वस्वरूपस्य साधारणधर्मघटितत्वात्तत्र तत्संबन्धबोधोऽस्त्वित्यर्थः। **षष्ठी हीति**। सा हि राज्ञः पुरुष इत्यादौ स्वस्वामिभावसंबन्धबोधिका, प्रकृत्यर्थस्य विशेषणत्वबोधिका च। सा च विशेषणस्येतरविशेषणत्वार्थं संबन्धस्याऽऽकाङ्क्षणात्तन्निष्ठविशेषणत्वस्य तन्निष्ठस्वामित्वस्य बोधकत्वेऽपि पश्चात्प्रधाने पुरुषे संबन्धस्य द्विष्ठतास्वभावत्वात् संबन्धघटकं स्वत्वं बोधयति। तदाह **यदनंतरमुपात्तेति**। राज्ञ इत्यतश्च राजस्वामिकमिति बोधः। पुरुषपदेन च तद्विशेषसमर्पणमिति

प्रभा–त्वया मुखमित्यादौ यादृशधर्मवांश्चन्द्रस्तादृशधर्मवन्मुखमित्युभयविशेष्यकबोधवच्चन्द्र इव मुखमित्यादावपि तथैव बोधः। अत एव दृष्टीधवलश्चन्द्र इत्यादौ भिन्नलिङ्गत्वादेर्दोषत्वम्। मुखत्वान्वितधवलत्वस्य हंस्यामन्वयायोगात्। अन्यथा तु हंसीमरालश्चन्द्रो धवल इत्यन्वयसंभवाद्दोषत्वं न स्यात्। एवं चोपमानोपमेययोर्द्वयोरपि साधर्म्यस्य शब्दादेवान्वयबोधाच्छ्रौतीत्वम्। चन्द्रेण तुल्यं मुखं मनोहरमित्यादौ, मुखस्य तुल्यश्चन्द्र इत्यादौ च भिन्नविभक्तिकत्वेनोपमानोपमेयपदयोर्द्वयो

**प्रदीप.**–केचित्तु—'उपमानोपमेयभावरूपसंबन्धस्य श्रौतत्वार्थत्वाभ्यां विशेष' इति व्याचक्षुस्तदयुक्तम्। 'साधर्म्यस्याऽर्थत्वात्तुल्यादिपदोपादाने आर्थी' इति प्रकाशविरोधात्। यस्यैव ह्यार्थतया उपमाया आर्थत्वं तस्यैव श्रौततया श्रौतत्वौचित्यात्। किं च साधर्म्यमेवोपमेति तस्यैव श्रौतत्वार्थत्वाभ्यामुपमाभेदो युक्त। अत एव 'यथादिना सादृश्यरूप संबन्ध एव साक्षादभिधीयते षष्ठीवत्, तुल्यादिभिस्तु धर्म्यपि' इति व्याख्यानमनुपादेयम्। ननु तथा प्यनुपपन्नो विभाग। पूर्णायां द्योतकोपमानयोरेव हि समास संभवति। न च यथादिभि सममसौ दृश्यते येन समासे श्रौती स्यादिति चेत्, न। 'इवेन नित्यसमासो

**उ०**:–'षष्ठी शेषे' (पा. सू. २-३ ५०) इति सूत्रे भाष्ये स्पष्टम्। एवमिवादिभि स्वसमभिव्याहृतचन्द्रादावुपमानत्वं तन्निर्वाहक आह्लादकत्वादिसाधारणधर्मसंबन्धश्च बोध्यते। तत्र साधारणधर्मवत्त्वेनेतरपरिच्छेदकत्वरूपोपमानत्व प्रतीतिस्तद्धर्मवत्परिच्छेद्यप्रतीतिं विनाऽनुपपन्नेति तमपि बोधयतीति भाव। एवं च चन्द्र इवेयत आह्लादकोपमानभूतचन्द्राभिन्नमाह्लादकमुपमेयं मुखमिति बोध। अत एवेवादिसमभिव्याहारे उपमानोपमेययो समानविभक्तिकत्वनियम। साधारणधर्मसंबन्धश्च क्वचिद्विशेषणतया यथा चन्द्र इव मुखमाह्लादकमित्यादौ। क्वचिद्विशेष्यतया यथा चन्द्र इव मुखमाह्लादयतीत्यादौ। अत्र ह्युपमानचन्द्रकर्तृकाह्लादाभिन्न उपमेयमुखकर्तृकाह्लाद इति बोध। अतोऽत्रापि तयो समानविभक्तिकत्वैव। ये त्वत्र चन्द्रसादृश्यप्रयोजको मुखकर्तृक आह्लाद इति बोधं वदन्ति तेषां तयो समानविभक्तिकत्वनियमे मानं चिन्त्यम्। यत्तु वाचनिकी समानविभक्तिकतेति। तन्न। व्याकरणे तादृशवचनानुपलम्भात्। एवं गज इव गच्छति देवदत्त इत्यादौ बोध्यम्। वनगज इव शूर समरभूमिं गच्छती-

*प्रभा*–*साधर्म्यस्य शब्दादप्रतीतेस्तुल्यादिपदप्रयोगे आर्थी।* पद्मं मुखं च तुल्यमित्यादावुभयत्र साधर्म्यप्रतीतावप्युपमानोपमेयभावसंबन्धस्य प्रमाणान्तरेणैवावगमेनार्थत्वादार्थीत्वमिति व्याचख्यु। तत्रोपमानोपमेयत्वस्य श्रौतत्वार्थत्वाभ्यां व्यवस्थां तदुक्तां ग्रन्थस्वविरोधेन तावद्दूषयति—**साधर्म्यस्येति**। युक्तिविरोधमप्याह—**किं चेति**। हंसीव धवल इत्यादौ चोपात्तधर्मस्येवादिना बोधननियमेन धुरस्य विशिष्टभावस्यस्य हंस्यामन्वयासंभवेन लुप्तोपमात्वं समतमिति ज्ञेयम्। अत एव उपरी पादेय। साक्षाद्विशेष्यतया सादृश्यविशिष्टधर्मप्रतिपादकैस्तुल्यादिभिस्तु विशेषणतया सादृश्याभिधानादार्थीत्वमित्यर्थ। **अनुपादेयमिति**। एवमपि तुल्यादिपदे सादृश्योक्तित्वेनेति नैपुण्यमित्यर्थ। **पूर्णायामिति**। श्रौत्यामिति शेष। आर्थ्यां

"इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च" इति नित्यसमासे इवशब्दयोगे समासगा ।

क्रमेणोदाहरणम् ।

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति ।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥ १ ॥(—)

चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारिकान्ति ।
सरसिजमिदमाननं च तस्याः सममिति चेतसि समदं विधत्ते ॥२॥ (—)

---

When there is a necessary compound, characterised by the presence of Iva, in accordance with the Vartika, 'With Iva, is compounded necessarily (the preceding word), the case-termination (of the preceding word) not being dropped, and the original accent of the preceding word being retained," there results Upama (Explicit) in Compound Illustrations in due order —

Even in the dream (of your foes), the Glory of Triumph does not forsake you, the fountainhead of prowess in battles, just as a woman who holds the husband under her sway does not forsake him, her beloved, the fountainhead of ardent love (prabhava), even in her dream (1)

At his heart, he is exulting in the thought that this (red) lotus and the face of hers the beauty of which is as charming (hāri) and bright (tara) as of the young dawn,—while she, with eyes tremulous like those of a startled deer, is in a rage—are equals (2)

---

प्रदीपः—विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इत्यनेनेवशब्देन सह समासविभक्त्यलोपयोः सम्भवात्। विभक्त्यलोपदर्शनाच्च तत्रासमासव्यवहारो मूढानाम्। तत्र वाक्ये श्रौती यथा—स्वप्नेऽपीति।

अत्र विजयश्रीरुपमेया। स्वाधीनपतिका उपमानम्। न मुञ्चतीति साधारणो धर्मः। यथेत्युपमाप्रतिपादकं विवक्षितम्। एवमग्रेऽप्यूह्यम्। न चैतेषां द्वयोरपि समास इति वाक्यगा श्रौती। वाक्यगा आर्थी यथा—चकितेति। इयं समशब्दप्रयोगादार्थी। समासे श्रौती यथा—

---

उ०: — त्वादावुपमानगजकर्तृकगमनाभिन्नमुपमेयपुरुषकर्तृकं समकर्मकं गमनमिति बोधः। साधारणधर्मरूपगमनस्य विधेयतयोपमानविधेयिकाऽत्र धीः। व्याघ्र इव य पुरुषः ■ गच्छतीत्यादावुपमानशूरत्वाद्यभिन्नपुरुषकर्तृकगमनमिति धीः। शूरत्वादिसाधारणधर्मस्योद्देश्यतयोपमोद्देश्यिकाऽत्र धीः। अत एव भेदाभेदप्रधा-

उ०: – नोपमेति प्राञ्च । यद्यपि चन्द्रमुखयोस्तत्त्वेन भेदस्तथापि साधारणधर्मवत्त्वेनाभेदान्वययोग्यता बोध्येति । अधिकं मञ्जूषायां द्रष्टव्यम् । **धर्मविशेषसंबंध एवेति ।** अस्य शक्त्या स्वसामर्थ्येन बोधन तदन्वयता पर्यग्राहकतया बोध्यम् । तत्कृतोपमानत्वस्य तु द्योतका इति बोध्यम् । **तुल्यादिशब्दास्त्विति ।** ते च सदृशवाचका । सादृश्यं च साधारणधर्मप्रयोज्यो धर्मविशेष इत्याहु । न चेदशश्रौत्यार्थीविवेको विफल । आर्थ्यामुपमानोपमेयनिर्णयविलम्बेनाऽऽस्वादविलम्ब, तदभाव श्रौत्यामिति तत्साफल्यादिति बोध्यम् । **उपमेय इति ।** समानविभक्त्यन्तपदोपस्थाप्यत्वादिति भाव । **उपमान इति ।** तत्त्वादेवेति भाव । **संबंधस्येति ।** स संबन्ध एवेनार्थ । **अनुपादेयमिति ।** धर्मनोनेऽपि यावद्भास तावद्विधीयत इति सादृश्यस्यैव विधेयत्वादित्यपि बोध्यम् । **न च यथादिभिरिति ।** असादृश्य एव यथाशब्देन समासविधानादिति भाव । **इवेन नित्यसमास इति ।** व्याकरणे वैकल्पिकत्वागीनाराद्वार्तिके तथाऽपाठाच्च नित्यपदप्रक्षेपोऽप्रामाणिक । **स्वप्नेऽपीति ।** वैरिभि स्वप्नेऽपि तव विजयानुभवादित्यर्थ । प्रभावात्तपोविशेषात्प्रभव उत्पत्तिर्यस्य तमित्यर्थ । ( 'प्रभावस्य प्रभव उत्पत्तिहेतु त्वामित्यन्वय ' इति चन्द्रिका । ) समेषु न तु समरे । अत्र वत्तपदप्रकृतिकप्रकारवाचियाल्प्रत्ययांतयथाशब्दादियोगे यद्धर्मवती स्वाधीनपतिका तद्धर्मवती विजयश्रीरिति उभयविशेष्यको बोध । पश्चात् यत्तद्भ्यां धर्मस्यैक्यबोधात्सादृश्य फलति । राज्ञ प्रतापस्य च विम्बप्रतिबिम्बभाव । तदालिङ्गितस्वभाधिकरणपत्याभावोऽनुगामी साधारणो धर्म इति बोध्यम् । **चकितेति ।** ( सखी प्रति नायिकासौभाग्य वर्णयाञ्चिन्निवेद्यते । ) भीतहरिणस्येव चलनेत्राया इत्यर्थ । कुचिघोषे । तत्रापि कातमित्याह—तरुणेति । तरुणाश्चरणस्तारा पुष्पा हारिणी मनोहरा कान्तिर्यस्य तदिति आननविशेषणम् । समदं हर्षम् । ( पुष्पिताग्रा छन्द । ) सरसिजमाननं च समामित्यत्र प्रथमं सादृश्यवदभिन्नमिदं द्वयमिति बोधे पश्चान्मनसा व्यञ्जनया वा परस्परनिरूपितसाधारणधर्मप्रतीतिरिति ध्येयम् । अ-

---

प्रभा – पूर्णायां सदृशादिपदवाच्यैरेव समग्रात् । द्योतकेति वा सामान्यवाचकपरम् । **नित्यसमास इति ।** अत्र 'उद्बाहुरिव वामन' इत्यादौ विशेषणबोधकत्वोद्बाहुपदेन नैराकाङ्क्ष्याद्समासेऽपि वाननपदे नैव समास इति ज्ञेयम् । इवेन समास इत्येव

अत्यायतैर्नियमकारिभिरुद्धतानां
दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो
लक्ष्मीविलासभवनैर्भुवनं बभार ॥ ३ ॥ (—)

अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर न कस्य ॥४॥ (—)

गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजंगवत् । ०८ सहिते श्रौती
दुरालोकः स समरे निदाघाम्बररत्नवत् ॥ ५ ॥ (—) ०८ तद्धिते

---

(The king) who sustained this world with the four expedients (of statecraft), that were far-reaching (in their consequences) and curbed the unruly, that were exalted (divyaih) and glorious (प्रभाभि sc सम्पन्नै), that never came to a standstill (अनपायमयै) and were an abode of the free play (विलास) of wealth, just as Viṣṇu (शौरि = कृष्ण = विष्णु) sustains this world with his four arms, that are very long and curb the unruly (demons), that are divine and glorious that never come to a standstill and are a place for the free play of Lakṣmi. (3)

O Lord of Earth, who would not long for you, who are like the divine tree (i e कल्पवृक्ष), in that like it your wealth is lauded in virtue of the exuberance (गरिमन्) of its great capacities (प्रगुण) for enlarging the range of aspirations never unfulfilled? (4)

*The magnitude of his depth is indeed (सत्य) like that of the lover* of the Ganges (i e Ocean), on the battlefield, his sight is unbearable like that of the sun (अम्बररत्न) in summer (5)

---

प्रदीप.—अत्यायतैरिति। अत्रैवेन समास । समासे आर्थी यथा—अवितथेति । अत्र सुरतरुसदृश इत्युपमानद्योतकयो समास । तद्धिते श्रौत्यार्थी च यथा—गाम्भीर्येति । अत्र गङ्गाभुजंगवदिति श्रौती । 'तत्र तस्येव' इत्यनेन इवार्थे वतेर्विधानात् । निदाघाम्बर-रत्नवदित्यार्थी । 'तेन तुल्यम्—'इत्यर्थ वते प्रयोगात् ।

---

उ०:—रणसदृशावगतिमत्त्व साधारणो धर्म । अत्यायतैरिति । आयति (आयन) उदर्कशुद्धिर्दीर्घता च । उद्धताना गर्वितता दानवानां च । दिव्यैरुत्कृष्टै स्वर्गीयैश्च । प्रभाभि प्रकृष्टशोभावद्भि । भाने कर्तरि क्विप् । अनपायमयै,

**प्रदीपः** – शंदेवात्र चारुताप्रतीतिः, अपि तु वाच्योपमामात्रपरामर्शादेव। चारुत्वहेतुश्चालंकारः। अवर्जनीयसंनिधेश्च व्यङ्ग्यस्यास्फुटतरतया न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारप्रवर्तकतेति न कश्चिद्दोषः। नन्वेवमप्युदाहृते रसादिरूपव्यङ्ग्यसद्भावाच्चित्रत्वानुपपत्तिः। किं चानुप्रासाद्यलंका-

**उ०** : – प्रयोजकत्वायतत्वादिधर्मवद्भिरित्यादिरेव बोधः। गजो वनं गच्छतीव शूरः समरभूमिं गच्छतीत्यादौ क्रियासमभिव्याहृतेवादेरुत्प्रेक्षाद्योतकत्वमेवेति न तत्रोपमालंकारः। स्पष्टं चेदं संनिधायके भाष्ये। **अवितथेति**। अभ्यर्थवाञ्छितविपर्यस्तसंबंधिमार्गसंपादनेषु प्रकृष्टगुणानां गरिम्णा गीता श्रीर्यस्य। (गीतिश्छन्दः।) **द्योतकयोरिति**। द्योतकपदम् बोधकपरम्। **गांभीर्येति**। गांभीर्यं दुर्ज्ञेयांतःकरणत्वं अतलस्पर्शित्वं च। भुजंग उपपतिः समुद्रः। शंतनोरेव पतित्वात्। दुरालोकः दुःखेनालोकयितुं शक्यः। अंबररत्नं सूर्यः। अत्र बोध उक्तदिशोह्यः। उत्तरत्र निदाघांबररत्नतुल्याभिन्नो दुरालोक इति बोधः। तुल्यत्वप्रयोजकं च दुरालोकत्वमिति पश्चान्मनसा व्यंजनया वा बुध्यते। स चेत्थम्। उपमानदुरालोकनिदाघांबररत्नाभिन्नो दुरालोको राजेत्येवमिति बहवः। अत एवाऽऽर्थीत्वम्। नामार्थयोरभेदान्वयस्यैतद्विग्रहवाक्ये श्रुतनिर्वाहाय अस्य वतेरपि धर्मिवाचकतैवोचिता। अनुशासनस्य तथैव शक्तिग्राहकत्वाच्च क्रियायोस्तुल्यत्व एव तेन तुल्यमिति वतिः साधुः। अत एव ब्राह्मणवदधीत इत्यत्र ब्राह्मणपदस्य तत्कर्तृकाध्ययने लक्षणेति भाष्यकृतः। एवं च चंद्रवन्मुखमित्यादौ भवतिक्रियामध्याहृत्य चंद्रभवनसदृशं मुखभवनमित्येन वाच्योऽर्थः। चंद्रमुखयोः सादृश्यं तु व्यंजनयैवेति बोध्यम्। गंगाभुजंगवदित्यत्र गंगाभुजंगपदस्य तत्संबंधिगांभीर्यगरिमलक्षकत्वेन गंगाभुजंगसंबंधिगांभीर्यसदृशमेतत्संबंधिगांभीर्यमिति बोधः। तदनंतरं गांभीर्ययोः सादृश्यमूलाभेदाध्यवसायेनाभिन्नधर्ममूला पश्चाद् गंगाभुजंगराज्ञोरुपमाप्रतीतिः। गंगाभुजंगस्येवास्य गांभीर्यगरिमेत्यादिवाक्ये षष्ठ्युपपत्तये गांभीर्यगरिमेत्यस्याऽऽवृत्त्या गंगाभुजंगेऽप्यन्वयेन तादृशबोधस्यैवानुभवेन वृत्त्याऽपि तत्रौचित्यात्। एवमसाविन्दुतुल्यो भातीत्यस्यासाविन्दुतुल्यकर्तृकं भानमिति वाच्योऽर्थः। भानमेव च साधारणो धर्मः। एवं चोपमाविषयिका धीः। यदा तु धर्मांतरेण तुल्यत्वं तदोपमाया उद्देश्यतावच्छेदकत्वमिति दिक्।

तु उदाह्रियमाणा विरसतामावहन्तीति पूर्वापरविरुद्धाभिधानमिति न चोदनीयम्।

## (४) तद्वद्धर्मस्य लोपे स्यान्न श्रौती तद्धिते पुनः।

about insipidity (of instances) Hence it should not be urged (against us) that *we are indulging in statements, the later of which conflict with* the earlier ones

Likewise would there be (the different divisions) when the (*common*) property is omitted There cannot be, however, the Explicit variety with a Taddhita derivative

**प्रदीपः**–रान्तरसद्भावात्त्वन्यालङ्कारोदाहरणान्येतानि युक्तानि, न तु शुद्धाया उपमाया इति चेत्, न। रसादिरूपव्यङ्ग्योऽलङ्कारान्तरं चैतेष्वव्यभिचारीति तत्रौदासीन्यमालम्ब्योपमालङ्कारोऽयमीदृश इत्यभिप्रायेणालङ्कारमात्रमुदाहृतं न तु चित्रकाव्यम्। अत्र 'चन्द्रधवल पट' इत्यादिको रसालङ्काराभ्यामसम्भिन्न एव विषय किमिति नोदाह्रियत इति चेत्, तदुदाहृतत्वेनोदाहरणे वैरस्यप्रसङ्गात्। तादृशवाक्यस्याकाव्यत्वेन तस्या अप्यनुपमात्वात्। )

अथ लुप्ता विभजनीया। सा च सप्तधा। तत्रैकस्य लोपे त्रिधा। उपमानस्य साधारणधर्मस्य द्योतकस्य च लोपात्। उपमेयमात्रस्य लोपादर्शनात्। द्विलोपेऽपि त्रिधा। धर्मवाद्योर्धर्मोपमानयोर्वाद्युपमेययोश्च लोपात्। अन्यस्य द्विकस्य लोपासम्भवात्। त्रिलोपे त्वियमेका। उपमेयं विनाऽन्येषामेकैकमात्रसत्त्वे उपमाया असम्भवादिति दर्शयन्नेव यथासम्भवं तासां सप्तविधानामपि विभागमाह—**तद्वदिति**।

**उ०**:–**न खलु व्यंग्येति**। सत्यपि व्यङ्ग्ये समुत्कटयालङ्कारकृतचारुतया प्रथमतश्चित्ताकर्षणादिति भाव। विद्यमानव्यङ्ग्यस्य ध्वन्यादिप्रयोजकता नेत्याह **अव्रर्जनीयेति**। **अस्फुटतरतयेति**। अत्रालङ्कारवैचित्र्यप्रतीतिव्यवहितप्रती-

**प्रभाः**–**एवमपीति**। उक्तव्यञ्जकस्य ध्वनित्वाद्यप्रयोजकत्वेऽपीत्यर्थ। ननु तात्पर्यविषयव्यङ्ग्यराहित्यं मुख्यतश्चमत्कारिव्यङ्ग्यशून्यत्वं वा चित्रत्वमिहास्त्येवेत्यत आह—**इहेति**। **औदासीन्येति**। तद्विषयविवेकमकृत्वेत्यर्थ। तथा च क्वचिच्चि[illegible]चेऽपि न क्षतिरित्याह—**न त्विति**। वस्तुतस्तूपमाप्राधान्यादस्त्येव चि[illegible]ज्ञेयम्। **अकाव्यत्वेनेति**। काव्येऽलङ्कारा उपमादय इति तत्परिच[illegible] काव्यरूपमेवोचितं न त्वन्यदित्यर्थ। उपमानस्येत्यादि सावधारणम्। [illegible]त्यादि। अत एवाह—**उपमेयमात्रस्येति**। धर्मवाद्यो धर्म [illegible] वाशब्दप्रभृतिरिवादिस्तयो। **विभागमाहेति**। व्यवस्थामाहेत्यर्थ [illegible]

धर्मः साधारणः। तद्धिते कल्पबादौ त्वार्थ्येव। तेन पञ्च।

उदाहरणम्,

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः।
करणीयं वचश्चेतः सत्यं तस्यामृतं यथा॥ ६

आकृष्टकरवालोऽसौ संपराये परिभ्रमन्।
प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः॥ ७॥

करवाल इवाचारस्तस्य वागमृतोपमा।
विषकल्पं मनो वेत्सि यदि जीवसि तत्सखे॥ ८॥

---

*Gloss*—Property, viz, the common one. With a Taddhita derivative such as with the affix Kalpap etc, there can be only the Implicit variety Thus five (varieties of धर्मलुप्ता) To illustrate.—

Like nectar as it is, the word of him who is blessed and graced by an uncommon profusion of gentleness should, O Heart, be carried out (6)

As he moved about in the battle, with the sword drawn, that sovereign was looked upon by the hostile army as an equal of Death. (7)

You will survive, O friend, (only) if you are aware of the fact that his demeanour is like a sword, his speech like nectar, his mind almost like venom. (8)

---

प्रदीपः—धर्मस्य साधारणस्य। तद्धितसमासे वाक्ये तद्धिते च श्रौती आर्थी चेत्यर्थः। तत्र विशेषमाह—'न श्रौती तद्धित-' इति। इवार्थ एव हि तद्धिते सा श्रौती भवेत्। इवार्थश्च वतिरेव। स च 'तत्र तस्येव' इत्यर्थकतया नित्यं धर्मसाकाङ्क्ष इति धर्मानुपादाने श्रौती तद्धिते न भवत्येव। आर्थी तु यद्यपि वतिरूपे तद्धिते न संभवति 'तेन तुल्यम्-' इत्यर्थे उक्तन्यायेन नित्यं तुल्यक्रियाकाङ्क्षत्वेन धर्मलोपे तदसंभवात्, तथापि कल्पप्-देश्य-देशीयर्-बहुच्-रूपे संभवत्येवेति पञ्चधा धर्मलोपोपमेत्यर्थः। तत्र वाक्ये श्रौती यथा—धन्यस्येति। अत्रामृतवचसोः परिणाममधुरत्वादिसाधर्म्यं, तच्च नोपात्तम्। आक्षेपात्तु तस्य संबन्धो यथाशब्देन तद्बोधं विनाऽपर्यवसानेन श्रुत्यैव बोध्यत इति धर्मलोपे श्रौतीयम्। एवमेमेऽप्यूह्यम्। वाक्ये आर्थी यथा—आकृष्टेति। आकृष्टकरवालत्वं च न साधारणो धर्मः। यमस्य दण्डायुधत्वेन प्रसिद्धेः। अन्त्यत्रयं यथा—करवाल इवेति। अत्र करवाल इवेति

---

उ०:—तिरस्कृतवाऽस्फुटतरत्वम्। यत्र वाच्यप्रतीत्यव्यवधानेन व्यंग्यप्रतीतिस्तत्र तदुभयमिति भावः। अस्फुटतातिरिक्तव्यंग्यप्राधान्येनाव्यंग्यचमत्कृति रहस्यम्।

## (५) उपमानानुपादाने वाक्यगाथ समासगा ॥ २ ॥

सअलकरणपरवीसामसिरिविअरण ण सरसकव्वस्स ।
दीसइ अहव णिसम्मइ सरिसं अससमेत्तेण ॥ ९ ॥ (—)

कव्वस्सेत्यत्र कव्वसममिति, सरिसमित्यत्र च णूणमिति पाठे एषैव समासगा ॥

When the Upamāna is not stated, there becomes possible (1) Upamā in a sentence, or again (2) that in a compound

*Gloss* —Neither is seen nor heard *anything* that would be comparable, by the least fraction, to poetry of sentiment, that confers the wealth of supreme relief on senses one and all (9)

The same Upamā will turn into one in a compound with the reading कव्वसमम् (काव्यसमम्) instead of कव्वस्स (काव्यस्य), and णूणम् (नून) instead of सरिसम् (सदृशम्)

प्रदीपः—समासे श्रौती। अमृतोपमेति समासे आर्थी। विपस्त्यमिति तद्धितगा आर्थी। उपमानेति। अत्र तद्धितगा न सम्भवति। उपमाप्रतिपादकस्य तद्धितस्य वतिकरपवादेरुपमानादेव विधानेन उपमानानुपादानेऽसम्भवात्। न वा श्रौती। इवादीनामुपमानमात्रान्विततया तदनुपादाने तेषामप्यनुपादानात्। अतो वाक्यसमासयोरेव। तयोरप्यार्थ्येवेति द्विप्रकारा लुप्तोपमानोपमा। तत्र वाक्यगा यथा—सअलेति। अत्र विशेषत उपमानं नोपात्तम्। चिन्त्यमेतत्। इदमेव 'कव्वस्स' इत्यत्र 'कव्वसमम्,' 'सरिस' इत्यत्र 'णूण' इति पाठे समासगोदाहरणम्।

उ०:—नन्वेवमिति। राजविषयकरतिभावस्य भकारानुप्रासस्य च स्वमतेऽपीति पद्ये सत्त्वादित्याशय। तस्या अप्यनुपमात्वादिति। उपमालंकारत्वाभावादित्यर्थः। वाचकतानाच्योपस्कारद्वारा रसाद्युपकारकत्वेनालंकारत्वादिति भाव। नीरसेऽपि स्ववैचित्र्येणाऽऽपाततश्चमत्कारमात्रं नत्वलंकारत्वमिति तात्पर्यम्। एकस्य लोप इति। लोपोऽत्रानुपादानम्। ननु चन्द्रत्वमुखत्वादिधर्मप्रतीतेर्न धर्मलोप इत्यत आह साधारणस्येति। नित्यं धर्मेति। इतस्य साधारणधर्मसंबन्धे शक्ते-

प्रभा०—काङ्क्ष इति। न च कुशाग्रीया बुद्धिरित्यादौ 'इवे प्रतिकृतौ' इत्यधिकारविहितच्छप्रत्ययतद्धितस्य धर्मसाकाङ्क्षत्वाभावादिवार्थकत्वाच्च तद्धिते श्रौती सम्भवत्येवेति वाच्यम्। इवादेरिव धर्मविशेषसम्बन्ध विना पर्यवसानाभावस्य तत्राभावेन श्रौतीत्वाभावात्। अत एव सादृश्यपदप्रयोगेऽपि न श्रौतीत्वम्। यथा 'परस्पराक्षिसादृश्यात्' इति

**उ०ः**—स्तदुपादानं विना तदर्थबोधाभावात्। किंच षष्ठीसप्तम्यन्तात्तद्विधानेन षष्ठ्याद्यर्थस्य धर्मोपादानं विनाऽन्वयासंभवादिति भावः। **धर्मलोपे तदसंभवादिति।** इदमपि व्यङ्ग्योपमामादायैव। **धन्यस्येति।** अनन्यसामान्यस्येति (न विद्यते अन्यत् सामान्यं सादृश्यं यस्य इति) बहुव्रीहिः। चेत इति संबोधनम्। **आकृष्टेति।** (करवालः खड्गः।) संपराये युद्धे। प्रत्यर्थिसेनया शत्रुसेनया। कृतान्तो यमः। क्रूरत्वमत्र साधारणो धर्मः। **करवाल इवेति।** तत् तदा। यदि वेत्सि तर्हि जीवसीत्यन्वयः। अथ वा यदि जीवसि तर्हि वेत्सि इत्यन्वयः। तत्समीपावस्थाने तत्र जीवनमेव दुर्लभमिति भावः। अत्र घातकत्वमाधुर्यनाशकत्वानि क्रमेण साधारणा धर्माः। उपमाशब्दस्य सदृशमात्रवाचकत्वेऽपि साधारणधर्मसंबन्धे नित्यसाकाङ्क्षत्वाभावाच्छक्तत्वाभावाद्वाऽऽर्थीत्वम्। **विपकल्पमिति।** ईषदसमाप्तौ विधीयमानस्य कल्पपः सादृश्ये पर्यवसानादिति भावः। **उपमानमात्रान्विततयेति।** उपमानानन्तर्यनियमेनेत्यर्थः। **सकलेति।** 'सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य। दृश्यतेऽथवा निशम्यते सदृशमंशांशमात्रेण'॥ अपिरवगम्यः। करणं चक्षुरादि। परविश्रामो विषयान्तरवैमुख्यम्। तज्जन्यशोभादावित्यर्थः। (आर्या मुखविपुला।) **अत्र विशेषत इति।** अत्रारम्भदर्शनश्रवणाविषयत्वेन दुर्लभतयोत्कृष्टगुणमस्मदगोचरं किंचिदुपमानं भविष्यतीति सादृश्यपर्यवसानादुपमानलुप्तोपमैवेयम्। एतेनासमालङ्कारोऽयमुपमातिरिक्त इति रत्नाकराद्युक्तमपास्तम्। अत एवोपमानानुपादानमित्युक्तं न त्वसत्त्वमिति। वस्त्वन्तरस्य विशिष्यानुपादानमात्रेणोपमानलोपव्यवहारः। एतेनाऽनन्वयोऽयमित्यप्यपास्तम्। अनन्वये उपमानासत्त्वस्यैव विवक्षितत्वात्। **चिन्त्यमेतदिति।**

**प्रभाः**—रघौ प्रथमे सर्गे इत्यादिषु बोध्यम्। **सकलेति।** 'सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य। दृश्यतेऽथवा निशम्यते सदृशमंशांशमात्रेण॥' इति संस्कृतम्। **विशेषत इति।** उपमानतावच्छेदकाद्भुततादिरूपेणेत्यर्थः। **चिन्त्यमिति।** विचार्यमित्यर्थः। अयमाशयः—अत्र हि न दृश्यते न वा श्रूयत इत्युपमानाभावकथनात्तन्मात्रस्वरूपाया उपमाया असंभवादसमालङ्कार उपमातिरिक्त एवालङ्काररत्नाकरादिभिरुक्त इत्युपमाभेदोदाहरणत्वमयुक्तमिति प्रतिभाति। विचार्यमाणे तु समर्थ्येयम्। अस्मद्दर्शनाद्यगोचरत्वेऽप्युत्कृष्टं किंचिदुपमानं भविष्यतीत्युपमायामेव पर्यवसाना

**( ६ ) वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि ।**
**कर्मकर्त्रोर्णमुलि,**

वाशब्दः उपमाद्योतक इति वादेरुपमाप्रतिपादकस्य लोपे षट्,—समासेन, कर्मणोऽधिकरणाच्चोत्पन्नेन क्यचा, कर्तुः क्यङा, कर्मकर्त्रोरुपपदयोर्णमुला च भवेत् ।

उदाहरणम्:—

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥ १० ॥ ( म भा द्रो प )

With the omission of the Vadı, ıt ıs possible, (1) ın a compound, (2-3) ın a Kyach derivative of an object or abode, (4) ın a Kyan derivative, (5-6) ın a Namul gerund with the object or subject prefixed

*Gloss* —The word Vā indicates *Upamā* Vādeh, therefore, means of the *word conveying Upamā On its omission, six varieties may be* possible – (1) ın a compound, (2-3) ın a Kyach formed from a noun signifying an object or abode, (4) ın a Kyan formed from a noun *signifying the subject, (5-6) and ın a Namul with the subject or object* prefixed.

To illustrate —

*Then the Eastern Quarter ( Lit the Quarter of the Great Indra )* was graced with the moon, the lord of moon-lotuses that was pale white like the cheek of a love lorn lady ( Kamını ), and that was the delight *of the eye* (10)

**प्रदीपः**—द्योतकलोपे वाक्यगा तावन्न सम्भवति । 'मुख चन्द्रो रमणीयम्' एतावन्मात्रेणो पमाप्रत्ययाभावात् । नापि तद्धितगा । वते कल्पबादीना च द्योतकतया तत्प्रयोगे द्योतकलोपस्यैवासंभवात् । न वा श्रौतीत्यन्यथा विभजते—वादेरिति । वाशब्द उपमाद्योतक इति वादेरुपमाद्योतकस्येत्यर्थः । तस्य लोपे समासे क्यचि क्यङि णमुलि चोपमा । तत्र क्यचि द्विधा । कर्मणोऽधिकरणाच्च विधानेन तस्य द्वैविध्यात् । क्यङि त्वेकैव । कर्तुरेव

**उ०**:—तद्बीज तु काव्यमेवात्रोपमानम् । चन्द्रस्य सदृश मुखमित्यादौ चन्द्रस्यैवोपमानतानुगमात् । एव चोपमेयलोप इति वक्तुमुचितमिति । उद्धारस्तु काव्यस्य समभित्यस्य काव्यनिष्ठसादृश्यप्रतियोगीत्यर्थः । काव्यस्य वर्णनीयतयोत्कर्षायोपमेयस्य विवक्षितत्वादित्याह । **तद्विधानादिति** । एव च सादृश्यबोध-

तथा

असितभुजगभीषणासिपत्रो रुहरुहिकाह्वितचित्ततूर्णचारः ।
पुलकिततनुरुत्कपोलकान्तिः प्रतिभटविक्रमदर्शनेऽयमासीत् ॥ ११ ॥ (—)

पौरं सुतीयति जन समरान्तरेऽसा-
वन्तःपुरीयति विचित्रचरित्रचुञ्चुः ।
नारीयते समरसीम्नि कृपाणपाणे-
रालोक्य तस्य चरितानि सपत्नसेना ॥ १२ ॥ (—)

मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे ।
स पुनः पार्थसंचारं संचरत्यवनीपतिः ॥ १३ ॥ (—)

---

Again,

At the sight of valour on the part of (his) adversaries, the sword (असिपत्र) of this (hero) grew fierce like a black cobra, his movements became swift owing to the mind being pre-occupied with a keen anxiety (to fight) His body thrilled into horripilation, and (eventually) the beauty of his cheeks rose up (11)

He looks after the citizen as after his own son, renowned (चुञ्चु) for marvellous deeds he deports himself in the midst of battle, (as freely) as in his harem The hostile army behaves like a woman at the sight of the exploits of him, armed with a sword, in the van (सीमन्) of the battle (12)

The enemies look at him, in the battle, as at the summer sun, but the king stalks about as Pārtha (अर्जुन) did (quite unconcerned) (13)

---

प्रदीपः — तद्विधानात् । णमुल्यपि द्विधा । कर्मकर्त्रोस्तद्विधानात् । तत्र समासे द्विधा । द्वयोस्त्रयाणामपि वा उपमानादिपदानां समासात् । तयोराद्या यथा—ततं इति । अत्र गण्डपाण्डुरेति द्वयो. समास । द्वितीया यथा–असितेति । अत्रासितभुजगेत्यादावुपमानधर्मोपमेयशब्दाना त्रयाणामपि समास । क्यच्क्यङोर्भेदनय यथा—पौरमिति । अत्र पौरं सुतीयतीत्यत्र 'उपमानादाचारे' (पा सू ३-१-१०) इति कर्मण क्यच् । समरान्तरेऽन्तःपुरीयतीत्यत्र सु

---

उ० : — क्यादिलोपे षड्विधेत्यर्थ । तत इति । (महाभारते द्रोणपर्वणि रात्रियुद्धे १८४ अध्याये चन्द्रोदयवर्णनम् ।) कुमुदनाथश्च तद्विकासित्वात् । गड इव पाण्डुरिति उपमानानीति समास । नेत्रानन्देन तज्जनकेन । माहेन्द्री प्राची । असितेति । असितभुजगस्तीक्ष्णविष सर्पजातिभेद । तद्वद्भीषणस्तीक्ष्णधारत्वादसिरेव पत्र यस्य स । रुहरुहिका रभसोत्कंठा तदाह्वितश्चित्र आश्चर्यभूतस्तूर्णस्त्वरितश्चारो

## (७) एतद्विलोपे क्विप्समासगा ॥ ३ ॥

एतयोर्धर्मवाद्योः। उदाहरणम्:—

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ॥
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥ १४ ॥ (—)

परिपन्थिमनोराज्यशतैरपि दुराक्रमः। समरे इव
संपरायप्रवृत्तोऽसौ राजते राजकुञ्जरः ॥ १५ ॥ (—)

When these two are omitted, we get an Upamā (1) in a Kvip derivative or (2) in a compound

*Gloss* —Of these i e of property and Vadi

To illustrate—

According as the mind is under the sway of joy or grief, the sun acts like the moon, or, (otherwise), even the moon acts like the sun, the nights act like days, or, (otherwise), the days act like nights (14)

That elephant like king looks radiant as he becomes prepared for the battle, *hard to be vanquished, even in their high-soaring aspirations*, (मनोराज्य)—hundreds of them,—on the part of the antagonists (15)

प्रदीप:—'अधिकरणाच्च' इत्यनेनाधिकरणात्। नारीयते इति 'कर्तुः क्यङ् सलोपश्च' (पा सू ३-१-११) इत्यनेन कर्तुः क्यङ्। णमुलि भेदद्वय यथा—मृधे इति। अत्र निदाघघर्मांशुदर्शमिति कर्मणि णमुल्। निदाघघर्मांशुमिव पश्यन्तीत्यर्थात्। पार्थसंचारमित्यत्र कर्तरि। 'उपमाने कर्मणि च' (पा सू ३-४-४५) इति सूत्रे चकारात्।

उ०: —गमन यस्य स। उद्गतकपोलशोभ। (पुष्पिताग्रा छंद।) यत्तु पूर्वोदाहरणे उपमानानीति समासाच्छ्रौती, अत्र त्वसितभुजगवद्भीषण इति मध्यमपदलोपिसमासादार्थीति भेदमाहु, तन्न। विनिगमनाविरहात्। पौरं सुतीयति इति। पौर नागरजन सुतमिवाऽऽचरतीत्यर्थे उपमानादाचार इति क्यच्। उपमानवाचकात्कर्मण आचारेऽर्थे क्यजिति सूत्रार्थ। उपमानादित्यनेन इवार्थस्य वृत्तौ प्रवेश सूचित। अत्राऽऽचार स्नेहपालनादिरूप। एव चोपमानभूतसुतकर्मकाचाराभिन्न पौरकर्मकाचार इति बोध। एवमत पुर इवाचरतीत्यर्थकात् पुरीयतीत्यत्रापि बोध ऊह्य। अत्राऽऽचार स्वच्छदगमनादि। विचित्रेति। विचित्रचरित्रैरित्त इत्यर्थ। तेन

प्रभा:—दतो नालकारान्तरमिति। पौरमिति। अत्र क्यच्क्यङोराचारमात्रमर्थं। प्रकृतिभूतसुतादिपदानां तत्सादृश्ये लक्षणेति सादृश्यवाचकाभावाद्वाचकलोप। एव णमु

## (८) धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते ।

When the property and the Upamāna happen to be omitted, the Upamā is in evidence in (1) a compound (वृत्ति) and (2) a sentence.

**प्रदीपः**–अथ द्विलोपे विभजनीया । तत्र धर्मवाद्योर्लोपे वाक्यगा न संभवति । शिष्टयोर्मुखं चन्द्र इत्येतावन्मात्रयोरुपादाने उपमाऽनवगमात् । नापि तद्धितगा । तद्धितस्यापि वत्यादिरूपत्वेन तत्सत्त्वे द्विलोपाभावात् । नापि श्रौती । इवाद्यभावादित्यन्यथा विभजते—**एतद्विति** । एतद्विलोपे एतयोर्द्वयोर्धर्मवाद्योर्लोपे । क्विपा यथा—**सवितेति** । यद्यप्याचारे क्विब्विधानात्तस्यैव च समानधर्मरूपत्वेन क्विपि धर्मलोपो नास्ति तथापि क्विप एव लोपाद्धर्मलोपव्यवहारः । अत एव समानार्थत्वेऽपि क्यङत्र नोपात्तः । तस्याल्लुप्तत्वेन धर्मलोपाभावात् । समासगा यथा—**परिपन्थीति** । अत्र राजायं कुञ्जर इवेत्युपमा । **धर्मेति** ।

**उ:०**–विन्तश्चुंचुप्चणपाविति (पा. सू. ५-२-२६) चुंचुप्प्रत्ययः । नारीवाऽऽचरति नारीयते । कर्तुः क्यङ् । आचारोऽत्र विनयादिः । (वसन्ततिलका छन्दः ।) अत्र सादृश्यसदृशैतन्मात्रबोधकाभावात् वाचकलुप्ता बोध्या । यत्तु सुतपदस्य सुतसादृश्यलक्षकत्वेऽपि सादृश्यवाचकाभावाद्वाचकलुप्तेति, तन्न । चंद्रप्रतिपक्षमाननमित्यादावपि वाचकलुप्तापत्तेः । **मृधे इति** । रणे इत्यर्थः । (परे शत्रवः । निदाघघर्मांशुदर्शं पश्यन्ति । ग्रीष्मसम्बन्धिसूर्यमिव पश्यन्तीत्यर्थः । पार्थसंचारं संचरति । पार्थ इव संचरतीत्यर्थः ।) णमुल्प्रकृतिः साधुत्वमात्रार्था । णमुलर्थो भावः । अव्ययकृतां भावे एव विधानात् । तस्मात् कर्मणोरेव कर्त्रोरेव चोपमानोपमेयभाव इति लुप्तोपमैवेयं इति । **सवितेति** । सुखिते मनसि सूर्यश्चंद्रसदृशः । आह्लादकत्वात् । दुःखिने चंद्रः सूर्यसदृशः । दुःखदत्वात् । एवमुत्तरत्र । (विधवति विधुरिवाऽऽचरति । सवितरति सवितेवाऽऽचरति । दिनन्ति दिनानीवाऽऽचरन्ति । यामिनयन्ति यामिन्य इवाऽऽचरन्ति । आर्या छन्दः ।) **क्विप एवेति** । यद्यपि क्विप्प्रकृतेः कर्तृभूतस्य सादृश्यप्रयोजकाचारलक्षणेति कथं धर्मलोपः । तथापि तन्मात्रबोधकाभावाल्लोपव्यवहारः । **परिपंथीति** । शत्रुमनोराज्यैरपीत्यर्थः । साक्षाद्दुराक्रम एवेति किं वक्तव्यमिति भावः । संपरायो युद्धम् । **राजाऽयं कुंजर**

**प्रभा:**–लोऽपि भावेभावे धातुसंबन्धे च विधानाद्गोपमावाचकत्वमित्यूह्यम् । **कुञ्जर इवेत्युपमेति** । परसेनाविद्रावकत्वादेः सामान्यस्याप्रयोगादुपमितसमासगबोध्येत्यर्थ । परिप-

दुण्दुण्णन्त मरीहसि कण्टअकलिआँइ केअइवणाइ ।
मालइकुसुमसरिच्छं भमर भमन्तो ण पाविहिसि ॥ १६ ॥ (—)

कुसुमेण सममिति पाठे वाक्यगा ।

(९) क्यचि वाद्युपमेयासे

आसे निरासे ।

अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥ १७ ॥ (—)

अनात्मा उपमेयः ।

---

*Gloss* – As you hover about the clumps of Ketakī that bristle with thorns, you will perish, o bee! Never will you come across *anything* comparable to the Mālatī blossom (16) *The same will be an instance of Vākyagā with reading कुसुमेण समम्।*

In a Kyach derivative, when the Vādi and the Upameya are dropped

*Gloss* – आसे i e when they are dropped

With the eyes dilated (विकस्वर) at the sight of the valour of the foe, he, with his massive arm rendered terrible by a sword, demeans (himself) like the thousand weaponed (कार्तवीर्य अर्जुन) (17)

Here the Upameya is आत्मन् (self)

---

**प्रदीपः** – तद्धिते तु नेयम् । उपमानलोपे तद्धितस्यैवाभावात् । नापि श्रौती । उपमानाप्रयोग इवादेरप्रयोगात् । तत्र समासगा यथा–**दुंदुण्णन्त इति** । कुसुमसरिच्छमित्यत्र ' कुसुमेण सम ' इति पाठे इयमेव वाक्यगा । **क्यचीति** । आसे निरासे । उदाहरणम्—**अरातीति** । अत्र यद्यपि विशेषणद्वारोपात्त कर्तैवोपमेयस्तथापि न तथात्वेन, किं तु कर्मत्वेन । अन्यथा क्यचोऽसंगतत्वापत्ते । तथा चाऽऽत्मानं सहस्रायुधीयतीत्यर्थ इत्युपमेय आत्मा

---

**उ०ः – इवेति** । उपमितं व्याघ्रादिभिरिति (पा. सू. २–१–५६) समासः । दुराधर्षत्वस्य समानधर्मस्य प्रसिद्धत्वात् न न्यूनपदत्वम् । औपम्यं समासगम्यम् । अत्र रूपकं तु न । मनोराज्यशतैरित्यादेरनन्वयादित्याहुः । **दुंदुण्णन्त इति** । दुंदुलायमानो मरिष्यसि कण्टककलितानि केतकीवनानि । मालतीकुसुमसदृशं भ्रमर भ्रमन्नपि न

---

**प्रभाः** – न्यूनेत्यादि न सामान्यपरमिति भाव । **दुण्दुण्णन्त इति** । 'अन्वेषयन्मरिष्यसि कण्टककलितानि केतकीवनानि । मालतीकुसुमसदृशं भ्रमर भ्रमन्नपि न प्राप्स्यसि ॥' इति संस्कृतम् । अत्रापि दुर्लभतयोत्कृष्टं कुसुमान्तरमप्रकृतं प्रकृतमालत्युपमानतया विवक्षितमिति ज्ञेयम् । **अत्र यदीति** । शक्त्या लक्षणया वा उपमाना-

(१०) त्रिलोपे च समासगा ॥ ४ ॥

त्रयाणां वादिधर्मोपमानानाम्। उदाहरणम्—

तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा।
स्मरशरविसराचितान्तरा मृगनयना हरते मुनेर्मनः ॥ १८ ॥ (—)

अत्र सतम्युपमानेत्यादिना यदा समासलोपौ भवतः, तदेदमुदाहरणम्।

क्रूरस्याऽऽचारस्याय:शूलतयाऽध्यवसायात्, अय:शूलेनान्विच्छति 'आय:शूलिकः'—इत्यतिशयोक्तिर्न तु क्रूराचारोपमेय-तैक्ष्ण्यधर्म-वादीनां लोपे त्रिलोपेयमुपमा। एवमेकोनविंशतिर्लुप्ता। पूर्णाभिः सह पञ्चविंशतिः।

---

And with the omission of three, it (i e Upamā) becomes possible in a compound.

*Gloss* – Of three, viz of the Vādi, (the common) property and the Upamana. To illustrate —

The deer eyed one ravishes the mind of the hermit she who has just begun peeping into youth, who has given a corporate form (in the shape of herself) to graceful amours, and whose heart bristles with a swarm of Cupid s arrows (18)

This becomes an (appropriate) instance, provided (यदा) there are assumed to take place a compound and omission, in accordance with the Vārtika सतम्युपमान etc.

'आयःशूलिक' which is explained as अय शूलेन अन्विच्छति (one who seeks to gain his point by the *steel-spike*) is an instance of अतिशयोक्ति, since there in we have the supersession of 'cruel conduct' by the idea of its being the 'steel-spike' It should not, however, be taken as an instance of Upamā with the three constituents dropped, i e in which the Upameya क्रूर आचार, the property तैक्ष्ण्य, and the Vadi are omitted

Thus there become possible nineteen varieties of the Elliptical, which, with the six ones of the Full fledged, make *twenty five* in all

---

प्रदीपः—लुप्त इति यथोक्तोदाहरणमेतत्। हंसायत इत्यादौ कर्त्रैवोपमेय। तस्य चानुपादाने वाक्यमेव न पर्याप्यत इति विशेषात् क्यङि नेय संभवति। यद्यपि द्विलोपेऽन्यदपि भेदत्रय

---

उ०:—प्राप्स्यसि ॥ ढुंढुल्यायमान अन्वेषमाण इत्यर्थ। एवकारशब्देन प्रार्थ-मनित्यर्थ इत्यन्ये। कामिन् सौभाग्यमात्मन सूचयंती प्रियसन्निधौ भ्रमर प्रत्येवमाह।

**प्रदीपः**—सम्भवति, यथा उपमानोपमेययोः, उपमानवाचकयोः, उपमानधर्मयोरिति, तथापि तेषूपमाया प्रसङ्ग एव नास्तीति न न्यूनत्वमाशङ्कनीयम्।

*त्रिलोपे तूपमेयातिरिक्तत्रितयलोप एव सम्भवतीत्युक्तम्। सापि समासमात्रे। अन्यत्र बोधकाभावात् तत्राऽर्थेव इवादेर्लोपात्, इत्येकविधैवेत्याह*—**त्रिलोप इति**। *यथा*—**तरुणिमनीति**। *अत्र यदि मृगशब्देन लक्षणया तल्लोचने विवक्ष्येते तदा नेदमुदाहरणम्। यदा तु मृगलोचने इव नयने यस्या इत्यर्थो विवक्ष्यते तदा 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च' इत्यनेन मृगलोचनेत्युपमानपूर्वपदस्य नयनशब्देन बहुव्रीहावुपमानवाचिनि मृगलोचन इति पूर्वपदे उत्तरपदभूतस्य लोचनशब्दस्य लोपे उपमेयभूतस्य नयनमात्रस्योपादानादिदमुदाहरणम्।*

केचित्तु "उपमानमात्रोपादानेऽपि त्रिलोपा सम्भवति। यथा 'अयमाय शूलिक' इति। अत्राय शूलपदेन क्रूर आचार उपमेय। तीक्ष्णत्वादिक च साधारणो धम। न च तयोरेकमप्युपात्तम्। नापीवादि" इति मन्यन्ते। तन्न युक्तम्। यत क्रूरस्याचारस्याय शूलतयाऽध्यवसानादतिशयोक्तिरिय न तूपमा। अन्यथाऽध्यवसानमूलातिशयोक्तेर्निर्विषयत्वापत्ते।

---

**उ०ः**—(गाथा छन्दः।) अत्र प्रकृतत्वान्मालती उपमेया। कुसुमान्तरस्याप्राप्त्युपदेशेन त्वदप्राप्यमुत्कृष्टगुणमस्योपमानमिति प्रतीतेरस्त्युपमितिक्रियानिष्पत्तिरिति बोध्यम्। **क्यचीति**। विषयसप्तमी। **निरास इति**। वाद्युपमेययोर्लोपे इत्यर्थः। **अरातीति**। मदमेऽपि वैरिविक्रम इति नयनविन्यास। कृपाणेनोदग्रो भीषणो बाहुर्यस्य स। सहस्रमायुधानि यस्य तमिवात्मानमाचरतीति कर्मणि क्यच्। आयुधसहस्रनिर्वाह्यस्य प्रतिपक्षोत्सारणस्यैकेन कृपाणेन निर्वाहाद्वीरप्रकर्ष। सहस्रारायुधीयतीति पाठे सहस्रार चक्रमायुधमस्य विष्णोस्तमिवाऽऽचरतीत्यर्थ। **विशेषणद्वारेति**। सहस्रारायुधीयतीति पाठे इदम्। स सहस्रायुधीयतीति पाठे साक्षादुपात्त इति बोध्यम्। **अन्यथा क्यच इति**। इच्छाक्यच् तु नायम्। अरातीत्यादिविशेषणासामञ्जस्यात्। तथाऽपीत्यत्र प्रागुपमेयधर्मयोरिति पाठ। उपमानधर्मयोरिति पाठस्त्वयुक्त। तल्लोपेऽनुपदमेव ढुण्ढुणत इत्यस्योदाहरणात्। *तरुणिमनीति*। तरुणिमनि सति मृगनयना मुने मनो नयते हरतीत्यन्वय। ललिताय विलासाय च वितीर्णो दत्तो विग्रह शरीर यया। स्मरशरैर्विशीर्णीकृतमान्तर यस्या सा (अपरवक्त्र छन्द।) नेदमुदाहरणमिति।

अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता ।
मम्लौ साथ विषादेन पद्मिनीव हिमाम्भसा ॥ १९ ॥ (—)

इहाभिन्ने साधारणे धर्मे,

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥ २० ॥ (—)

इति भिन्ने च तस्मिन्, एकस्यैव बहूपमानोपादाने मालोपमा । यथोत्तरमुपमेयस्योपमानत्वे ( पूर्ववदभिन्नभिन्नधर्मत्वे ),

---

Mālopamā that results when with reference to the same object, several Upamānas come to be stated, the common property being the same, as in

> Thereupon she withered away through sadness, like the prosperity of the kingdom through unjust rule, like spirited nature through proverty, like the lotus plant through frost, (19),

or different, as in

> The lovely woman (lit with lovely hips) is, like moon light, a delight to the eyes, like wine, a source of ravishment; like sovereignty, she has drawn together, under her sway, all the people. (20),

---

**प्रदीपः**—तदेवं धर्मलोपे पञ्च। उपमानलोपे द्वौ। द्योतकलोपे षट्। धर्मवाचोर्लोपे द्वौ। धर्मोपमानयोर्लोपे द्वौ । द्योतकोपमेयलोपे चैकः । त्रिलोपे त्वेकः। इत्यूनविंशतिर्लुप्ताभेदाः। पूर्णाभेदाश्च षट्। इत्येवं पञ्चविंशतिः।

---

**उ०**:—अत्र स्वमात्रबोधकपदाभावात्त्रयाणां लोपसंभवेन चिन्त्यमेतदित्याहुः । **अन्याय:शूलेति**। अयःशूलपदेन स्वार्थसदृशो लक्ष्यते इति भावः। **अतिशयोक्तिरिति**। अयःशूलशब्दादयःशूलत्वेन स्वार्थसदृशक्रूराचारलक्षकात्तेनान्विच्छतीति ठक्प्रत्यये उक्तरूपसिद्धेरिति भावः । **निर्विषयत्वापत्तेरिति** । कमलमर्नभसीत्यादावपि कमलादिपदे स्वार्थसदृशमुखादेर्लक्षणादेतद्भेदापत्तेरिति भावः । वस्तुतोऽयं पूर्णालुप्ताविभागो वाक्यसमासप्रत्ययविशेषगोचरतया शब्दशास्त्रव्युत्पत्तिकौशलप्रदर्शनपरत्वादत्र शास्त्रे न व्युत्पाद्यतामर्हति । सा चेयमुपमा वस्त्वलङ्कारस्वरूपाणां व्यंग्यानां वस्त्वलङ्कारयोर्व्यङ्ग्योपमात्वादलङ्काराङ्गत्वं भजते ।

---

**प्रभा**:—तुर्ये ह्युपमानलुप्तेति नोदाहरणमिदमित्यर्थः । लुप्ताभेदानुपसंहरति—तदेवमिति । चित्रमीमांसायां त्वन्येऽपि लुप्ताभेदा दर्शिताः । तथाहि—"वाचकलुप्ता षड्विधा

अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थितते: ।
भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला ॥२१॥ (—)
मतिरिव मूर्तिर्मधुरा मूर्तिरिव सभा प्रभावचिता ।
तस्य सभेव जयश्री: शक्या जेतुं नृपस्य न परेषाम् ॥ २२ ॥ (—)

(इत्यादिका) रशनोपमा च न लक्षिता । एवंविधवैचित्र्यसहस्रसम्भवात् । उक्तभेदानतिक्रमाच्च ।

---

and Raśanopamā which results when, in a regular succession, the Upameya of the preceding Upamā becomes the Upamāna of the following one, (the common property being the same or different, as above,) ■ g

Of him (the king), towards whose hand, filled with drops of water for making unceasing gifts of gold, surges the queue of supplicants, are like the words the thoughts, like the thoughts the acts, like the acts the fame, extremely stainless (21),

Like the thoughts of that king is his figure pleasing, like the figure is his council swelling with prowess, like his council his triumphal glory cannot be won over by the enemies (22),

have not been defined. For, it is possible to have thousands of such variations, and yet they do not go beyond the varieties specified.

---

प्रदीप: — नन्वन्येऽप्युपमाभेदा सम्भवन्ति। तथाहि—एकस्यैवोपमेयस्य बहूपमानसबन्धो मालोपमा । सा च द्विधा–साधर्म्यस्याभेदात्तद्भेदाच्च । तत्राद्या यथा—

---

उ० : — न चैवमन्यानुपस्कारकसादृश्यनिबन्धने 'स च्छिन्नमूल क्षतजेन रेणुस्तस्योपरिष्टात् पवनावधूत । अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवाऽऽबभासे' इत्यादौ अलङ्कारव्यवहारानापत्ति । आपणे विक्रीयमाणतादृशाया तादृक्षादे-

---

प्रभा : — इहोक्ता । 'कर्तर्युपमाने' इति णिनौ सप्तम्यपि दृश्यते कोकिल इवालपति कोकिलालापिनीति । तथा 'इवे प्रतिकृतौ' इति कन्प्रत्यये 'लुम्मनुष्ये' इति लुपि चेवेत्यर्थे 'चञ्चापुरुष सोऽय य स्वहित नैव जानाति' इत्यष्टमी । एवम् 'यद्भक्ताना सुखमय संसारोऽप्यपवर्गेति' इत्यत्र धर्मस्य सुखमयत्वस्य पदान्तरेणोपादाने क्विपि नवमी । तथा उपमानलुप्ता वाच्यसमासयोर्द्विविधोक्ता तृतीयापि दृश्यते—'यच्चोराणामस्य च समागमो यच्च तैर्वधोऽस्य कृत । उपनतमेतदकस्मादासीद्धत काकतालीयम् ॥' अत्र काकतालपदयोर्लक्षणया काकागमनतालपतनपरयोरिवार्थे 'समासाच्च तद्विषयात्' इति ज्ञापकात्काक इव ताल इव काकतालमिति समासे काकतालसमागमसदृशश्चौराणामस्य च समागम इत्यर्थ । तत काकतालमिवेति पुनरिवार्थ तेनैव सूत्रेण च्छप्रत्यये

---

**प्रदीपः**—**अनयेनेवेति**। अत्र म्लानिरेव सर्वोपमानसाधर्म्यम्। अन्त्या यथा—**ज्योत्स्नेवेति**। अत्र ज्योत्स्नादीनां नयनानन्दहेतुत्वादयः साधारणधर्मा भिन्नाः। पूर्वपूर्वोपमेयस्योत्तरोत्तरमुपमानत्वे रशनोपमा। सापि द्विधा—साधर्म्याभेदात्तद्भेदाच्च। तत्राद्या यथा—**अनवरतेति**। अत्र विमलत्वमेव सर्वासूपमासु साधारणो धर्मः। अन्त्या यथा—**मतिरिवेति**। अत्र मूर्त्यादीनां मधुरत्वादयो धर्मा भेदवन्तः। त एते भेदाः किमिति नोक्ता इति चेत्, उक्ता एव। उक्तभेदान्तर्भावात्। तथापि तेन तेन रूपेण किं नोक्ता इति चेत्,

---

**उ०**:—नायिकाद्यर्णाद्यनुपस्कारकत्वेऽपि अलंकारव्यवहारवदुपपत्तेः। कदाऽप्यलंकारभावमप्राप्य मञ्जूषादिगतकटकादिवत् अलंकुर्वाणगतधर्ममात्रसंस्पर्शनिबन्धनत्वाच्च। एतेन यत्र सकलवाक्येन प्राधान्येन व्यङ्ग्योपमा तत्राप्यलंकारध्वनिव्यवहारो व्याख्यातः। इयं चोपमा यथेवसदृशतुल्यादिशब्दोपादाने वाच्यालंकारः। सुहृत्प्रतिपक्षादिशब्दोपादाने लक्ष्या। **साधर्म्यस्याभेदादिति**। एकशब्दबोध्यत्वेन सर्वोपमानगतत्वादित्यर्थः। **तद्भेदादिति**। प्रत्युपमानं विश्रान्तेरित्यर्थः। यथा माला काचिदेकजातीयैः कुसुमैः काचिद्विजातीयैस्तथेयमपि सजातीयैर्विजातीयैर्वा बहुभिरुपमानैर्घटितेति द्विविधा मालोपमेत्यर्थः। **अनयेति**। मनस्विता पाण्डित्यम्। इतरत्स्पष्टम्। **ज्योत्स्नेवेति**। पद्यं स्पष्टार्थम्। **अनवरतेति**। निरन्तरस्वर्णदानाय जललवभृते तत्सबद्धे करे तरंगिता पूर्वपश्चाद्भावेन श्रेणीभूय मिलिता अर्थितततिर्यस्य। भणितिर्निवचनम्। (गीतिश्छन्दः।) **मतिरिवेति**। चिता व्याप्ता। तस्य नृपस्य सभेव तस्य जयश्रीः परेषां जेतुं शक्या नेति संबन्धः। (उद्गीतिश्छन्दः।)

---

**प्रभा**।—तालपतनजन्यकाकवधसदृशश्चोरकर्तृकदेवदत्तवध इति बोधः। अत्र च्छप्रत्ययार्थे द्वितीयोपमायामुपमानभूतस्य तालपतनजन्यकाकवधस्यानुपादानादुपमानलुप्तेयम्। तथा प्राथमिकोपमावाचकोपमानोभयलुप्ता। इयमेव उपनतमकस्मादित्यनुक्तौ धर्मोपमानलुप्ता। एवं वाचकधर्मयोः क्विप्समासयोरिव (?) षष्ठीपुरुष इति कनो लोपे धर्मानुपादाने च भवतीति द्वात्रिंशल्लुप्ताभेदाः।" इति। अत्रेदं बोध्यम्—पूर्णायां साधारणो धर्मः क्वचिदनुगतः। यथा स्वप्नेऽपीत्यत्र न मुञ्चतीति। क्वचिद्वस्तुप्रतिवस्तुभावापन्नः। यथा—'यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या। दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः॥' इत्यत्र भिन्नाभ्यां वलितावृत्तशब्दाभ्यामेकस्य धर्मस्य बिम्बप्रतिबिम्बभावापन्नकंधरावृन्तविशेषणतयोपादानात्तथात्वम्। कंधरावृन्तयोस्तु सादृश्यादभेदेनाध्यवसानाद्बिम्बभावः। बिम्बप्रतिबिम्बभावापन्नधर्मं प्रति विशेष्यतया वस्तुप्रतिवस्तुरूपो धर्मः क्वचित्। यथा—'सा

## ( ११ ) उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।
### अनन्वयः ।

उपमानान्तरसंबन्धाभावोऽनन्वयः ।

## 2 ANANVAYA

When in one and the same sentence, one and the same thing stands both as the Upamana and the Upameya, there results "Ananvaya"

*Gloss*.—'Ananvaya (want of connection) is so called because it consists in the negation of connection with any other Upamana (but itself)

**प्रदीपः**—एवंविधवैचित्र्यसहस्रसंभवात्सर्वेषामाख्यातुमशक्यत्वात् । **उपमानेति** । उपमानान्तरव्यवच्छेदाय यदेकस्यैवोपमानोपमेयत्वे भेदोपचारेणैव निबध्येते सोऽनन्वयः । तदेतदुक्तम् 'उपमानान्तरसंबन्धाभावोऽनन्वयः' इति बहुव्रीहिसमासात् । यद्वा संज्ञा योगनिर्वचनं तत् । अनन्वयः संबन्धाभावः । स चार्थादुपमानान्तरेण उपमेयभिन्नेनेति । एवकारो वैचित्र्यविशेषस्फोरणार्थं । एकवाक्यगे इति विपर्यासोपमाव्यावर्तनाय । तत्र हि

**उ०**:—**वैचित्र्यसहस्रेति** । बिंबप्रतिबिंबभावादिभेदेन लोकसिद्धकविकल्पितादिभेदेनोपस्कार्यभेदेन निरवयवादिभेदेन अन्योन्योपायत्वरूपपरपरितत्वे उपायत्वस्यानुकूल्यप्रातिकूल्यादिभेदेन तेषां परस्परं गुणने इयत्ताया वक्तुमशक्यत्वादिति भावः । **इत्युपमालंकारः** । **उपमानेति** । न विद्यतेऽन्वयः संबधोऽर्थादुपमानांतरेण यत्र सोऽनन्वय इति अन्वर्थमलंकारनामेदम् । तत्रान्वर्थसंज्ञाबललब्धमर्थमाह **उपमानांतरेति** । **भेदोपचारेणेति** । भेदेऽसत्यपि तद्घटितसा-

**प्रभाः**—तेन जगृहे साध्वी हठात्साध्वसकम्पिता । वानरेणातिलोलेन वाताधूतेव वल्लरी ॥' इत्यत्र साध्वसवातयोर्बिम्बप्रतिबिम्बभावापन्नयोः कम्पिताधूतशब्दाभ्यामेको धर्मो विशेष्यतयोक्तः । एवमन्यत्रापि बिम्बप्रतिबिम्बभावसंकीर्ण एव वस्तुप्रतिवस्तुभावो न केवलः । केवलबिम्बप्रतिबिम्बभावेन साधारण्यं यथा—'पाण्ड्योऽयम्—' इति रघौ । अत्र हि हरिचन्दनबालातपौ हारनिर्झरौ ( बिम्बप्रतिबिम्ब भावापन्नौ ? । ) क्वचित् श्लेषेण साधारण्यं यथा—'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव' इत्यादौ । क्वचिदुपचारेण यथा—'पङ्कजैरिव कुमारमीक्षणैर्विस्मयेन विकचैः पपुर्जनाः' इत्यत्र विकासस्य पुष्पधर्मस्य नेत्रेषु । समासभेदाश्रयणेन यथा—'तया विवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षुःकुमुदः कुमार्या । प्रसन्नचेतः सलिलः शिवोऽभूत्संसृज्यमानः शरदेव लोकः ॥' इत्यादावाननमेवचन्द्र इत्युपमेये चार्थान्वीकरणात् । पूर्वोक्तश्लेषः सभङ्गोऽयं त्वभङ्ग इति भेद इति दिक् । अथोपमायां शाब्दबोधप्रकारः कथ्यते—

उदाहरणम्—

न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव।
यावद्विलासायुधलासवासास्ते तद्विलासा इव तद्विलासाः ॥ २३॥ (—)

## ( १२ ) विपर्यास उपमेयोपमा तयोः ॥ ५ ॥

To illustrate—

That beautiful lady of superb charms looks splendid like herself alone —not this much only,—also her amours, the very abodes of Cupid's (विलासायुध) gentle frolics (लास), are (only) like themselves (23)

### 3 UPAMEYOPAMĀ

When there takes place an exchange of places of them two (i. e. the Upamāna and the Upameya), there results "Upameyopamā."

---

प्रदीपः—वाक्यद्वये तथाभाव । उदाहरणम् न केवलमिति । अत्र दशाविशेषादिभेदाद्भेदोपचार । विपर्यास इति । तयोरुपमानोपमेययोर्विपर्यास उपमेयोपमानभाव । अर्था-

---

उ०:—द्दयोपचारेणेत्यर्थ । आपातत शाब्दबोधोपपत्तये उपमानान्तरव्यवच्छेदबोधाय च आहार्यस्तदुपचार । एतेन देशकालादिभेदाद्भेदोऽत्रेति परास्तम्। तथा सत्युपमाया एवाऽऽपत्ते । गगन गगनाकारमित्यादौ तद्युगे तद्देशे वा यथा गगन तथैतद्युगे एतद्देशेऽपीति बोधात् । अनन्वये तु निरुपमानत्वनिमित्तोत्कर्षाय स्वयमेव स्वस-

---

प्रभा:—तत्र सादृश्य पदार्थान्तरमिति प्राचा मतम्। साधारणधर्मरूपमेव तदिति नव्या नाम्। तत्राद्यमते तावदुच्यते—तत्र चन्द्र इवाह्लादक मुखमित्यादाविवार्थ सादृश्ये चन्द्रादेर्निरूपितत्वससर्गेणान्वय । सादृश्यस्य च प्रयोजकतासंसर्गेण आह्लादकत्वादौ साधारणधर्मे पदार्थैकदेशेऽप्यनुभवबलादन्वय तद्विशिष्टस्य चाभेदेन मुखाद्युपमेये । तेन चन्द्रनिरूपितसादृश्याप्रयोजकाह्लादकत्वविशिष्टाभिन्न मुखमिति बोध । इवाद्युक्तसादृश्यस्योपमानविशेषणत्वमते तु बोध प्रागुक्त । समानधर्माप्रयोगे तु सादृश्यस्योपमेय एवान्वय । निपातार्थतया भेदे नानार्थान्वये बाधकाभावात् । चन्द्रसुन्दरमिति समासे तु चन्द्रनिरूपितसादृश्यप्रयोजके चन्द्रपदस्य लक्षणा । तस्या भेदेनार्थे पदार्थैकदेशेऽपि सौन्दर्येऽन्वय । तदनङ्गीकारे तु चन्द्रपदस्यैव तादृशसौन्दर्यवति लक्षणेति पूर्ववदेवान्वयबोध । चन्द्र इव भाति मुखमित्यादौ चन्द्रनिरूपितसादृश्यस्य प्रकारतासंसर्गेण धात्वर्थे भानेऽन्वयाच्चन्द्रनिरूपितसादृश्यप्रकारकभानविषयो मुखमिति बोध । अत्रैव सौन्दर्येणेत्युक्तौ तृतीयार्थ प्रयोज्यत्व भाने सादृश्य एवान्वेति । तेन सौन्दर्यप्रयोज्यचन्द्रनिरूपितसादृश्यप्रकारकभानविषयो मुखमिति धी । गज इव

उ०:—मानधर्मेत्युक्त्या परो नैतत्समानधर्मेति प्रतीयते । **बहुव्रीहीति ।** उपमानांतरसंबंधाभावपदं बहुव्रीहिणाऽनन्वयमाहेत्यर्थः । **यद्वा संज्ञेति ।** संज्ञाभूतस्यापि योगकथनमित्यर्थः । तथा च योगरूढोऽयमिति भावः । **उपमानांतरेणेति ।** नन्विदमयुक्तम् । कस्याप्युपमानस्याभावेनांतरशब्दप्रयोगासंगतेरत आह **उपमेयभिन्नेनेतीति ।** एकस्येत्युपमान्यवच्छेदाय । **एवकार इति ।** एकस्यैवेति भिन्नशब्दबोध्यत्वव्यवच्छेदकैवकार इत्यर्थः । **वैचित्र्येति ।** यद्यप्यस्या वदनमिव वक्त्रमित्यत्रानन्वय एव तथापि स दुष्ट इति वैचित्र्यस्फोरणायेत्यर्थः । एकवाक्यगे इत्यस्य एकौपम्यबोधकशब्दप्रतिपाद्येत्यर्थः । तत्फलमाह **विपर्यासेति ।** उपमेयोपमेत्यर्थः । वस्तुतस्तु तत्र द्वितीयसदृशव्यवच्छेदफलकत्वाभावेन योगलब्धार्थेनैव वारणसंभवान्नेदमस्य व्यावर्त्यम् । किं तु तादृशस्थले एव तस्य फलस्य संभवात् स्वरूपकथनमिति ध्येयम् । **न केवलमिति ।** नितांतकांति अतिशयितकांति । यावतो विलासा आयुधानि यस्य स कामस्तस्य लास्यवासा नृत्यस्थानानि । (एवकारो भिन्नक्रमो नितम्बिनीशब्देन सम्बध्यते । यावत् 'अपि तु' इत्यर्थे इत्युदाहरणचन्द्रिका । उपजातिश्छंद । ) अत्र साधर्म्यमात्रमिवार्थः । न तु भेदांशो बाधात् । रूपके चंद्राद्यभेदबुद्धिः फलं, तत्कृत एव चमत्कारः, अत्र तु पर-

प्रभा:—गच्छति, पिक इव रौतीत्यादाविवार्थसादृश्यस्य धात्वर्थे गमनाद्यन्वयासंभवात्तस्य गमनादिकर्तर्येवान्वयः । गजसदृशो गमनानुकूलकृतिमानिति बोधः । कुतः सादृश्यस्य धात्वर्थेनान्वय इति चेत्, घटो न पश्यतीत्यत्र घटान्विताभावस्य दर्शने कर्मतासंसर्गेणान्वयवारणाय धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेणान्वयबोधे विशेष्यतया विभक्तिजन्योपस्थितेर्हेतुत्वादिति तार्किकाः । अन्ये तु गजसदृशो यः स गच्छतीत्यत्रेव गज इव गच्छतीत्यत्रापि सादृश्यस्य विधेयत्वेनाप्रतीतेस्तदनुभवोपपत्त्यर्थं गजनिरूपितसादृश्यप्रयोजकगमनाश्रय इत्येव गज इव गच्छतीत्यादौ बोधः । घटो न पश्यतीत्यादावनुपबोधापत्तिस्तु धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेणान्वयबुद्धिं प्रति तज्जन्योपस्थितेः प्रतिबन्धकत्वकल्पनयैव निरसनीया । घन गज इव समरे शूरो गच्छतीत्यादौ तु गजादिपदानां गजकर्तृकगमनादौ लक्षणा । तत्सादृश्यस्य धात्वर्थगमनाद्यन्वयः । तेन घनकर्मकं यद्गजकर्तृकं गमनं तत्सदृशसमरकर्मकगमनाश्रयः शूर इति धीरित्याहुः । ननु सिंहतुल्यो भातीत्यत्र सिंहमानसदृशभानस्य बोधो दुर्घटः । तुल्यत्वस्य निपातभिन्नार्थत्वेन धात्वर्थभेदेन साक्षादन्वयायोगात् । सिंहतुल्यो यो देवदत्तः स भातीत्युद्देश्यतावच्छेदकत्वेन मुख्यबोधे तु

**तयो॰ उपमानोपमेययो॰ परिवृत्ति॰, ( अर्थात् ) वाक्यद्वये, इतरोपमानव्यवच्छेदपरा ( उपमेयेनोपमा इति ) उपमेयोपमा ।**

*Gloss* —Of them two i e. of the Upameya and the Upamāna Exchange of places–of course–in two sentences, designed for excluding any other Upamana ( but itself ) Upameyopama is so called because it consists of an Upamā with the Upameya ( as an Upamana )

उ॰ः –स्मिन् स्वसाधर्म्याभावकृत । न तु स्वाभेदबुद्धिकृत तस्या सिद्धत्वादिति ततो भेद । एतदभेऽत्र दशाविशेषादिभेदात् भेदोपचार इति क्वचित् पठ्यते सोऽपपाठ । तथा सत्युपमाया एवाऽऽपत्ते । देशकालभेदेनाप्ययमेव तत्तुल्य इति प्रतीतेस्तत्राप्यनन्वय एवेत्याशय इत्यन्ये । ननु 'भुवनत्रितयेऽपि मानवै परिपूर्णे विबुधैश्च दानवै । न भविष्यति नास्ति नाभवन्नृप यस्ते भजते तुला पदम्' ॥ इत्यादौ सर्वथैवोपमाननिषेधात्मकोऽसमालङ्कार प्राचीनैरुक्त । उपमानलुप्तोपमाऽतिव्याप्तिवारणाय सर्वथैवेति । एव च तद्ध्वनिनैव चमत्कारोपपत्तौ अनन्वयस्य पृथगलङ्कारत्व किमर्थम् । यदि तु रत्यनुकूलतया कुतश्चिदङ्गात् भूषणापसारण यथा चमत्काराय, तथा प्रकृते उपमालङ्काराभाववर्णनमेव चमत्काराय न तु तत्रासमनामा पृथगलङ्कार इत्युच्यते । तर्हि तद्ध्वनिनैवोपपत्तिरिति चेन्न । पर्यायोक्तसादृश्यमूलाप्रस्तुतप्रशसादौ ध्वन्यमानार्थसत्त्वेऽपि वाच्यार्थकृतचमत्कारमादायालङ्कारत्ववदुपपत्ते । अन्यथा दीपकादावपि उपमाभिव्यक्त्यैव चमत्कारोपपत्तौ तेषामपि पृथगलङ्कारत्व न स्यादित्याहु । केचित्तु सर्वेभ्य उत्कृष्टगुणत्वमिति प्रतीतेर्व्यतिरेकालङ्कारध्वनिरेवात्रेति वदन्ति । तच्चिन्त्यम् । इत्यनन्वयः । **विपर्यास इति** । तयो काव्यनिबद्धोप-

प्रभा॰–तस्य विधेयत्व विवक्षित न सिध्येत् । न च तुल्यपदेन तुल्यत्वप्रकारक लक्ष्यते तस्याभेदेन भानेऽन्वेतीति वाच्यम् । तथा सति क्रियाविशेषणत्वेन नपुंसकत्वापत्तेरिति चेत्, अत्राहु —'क्रियाव्ययविशेषणाना क्लीबतेष्यते' इत्यनुशासन सिद्धार्थानुवादकत्वात्स्तोक पचतीत्यादिमात्रपर न सार्वत्रिकमिति न दोष इति । धातोरेव लक्षणया सर्वार्थबोधकत्वमन्यस्य तात्पर्यग्राहकत्वमित्यपि केचित् । चन्द्रवत्सुन्दरमिति 'तेन तुल्य–' इत्यादिविहितवते सादृश्यवदर्थकत्वेऽपि सादृश्ये लक्षणा । तस्य सुन्दरपदार्थैकदेशेन सुन्दरत्वेनान्वयादिवादिप्रयोगस्थल इव बोध । लक्षणया सादृश्यबोधनात्परमार्थित्वम् । एव चन्द्रवन्मुखमित्यादौ चन्द्रनिरूपितत्वर्थैकदेशे सादृश्येऽन्वयाच्चन्द्र

उदाहरणम्—

**कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः ।**
**धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत यस्य ॥ २४ ॥ (—)**

To illustrate :—

Whose wealth ever shines bright like his thoughts, and whose thoughts (shine) like his wealth; whose glory ever shines bright like his figure and whose figure like his glory, whose courage ever shines bright like his realm, whose realm like his courage. How gratifying indeed (बत) ! (24)

---

**प्रदीपः**—द्वाक्यद्वये । एकवाक्ये तथाऽसंभवात् । मुखमिव चन्द्र इत्यस्य निन्दाभिव्यक्तौ प्रतीपरूपत्वात् । उपमेयोपमेति यौगिकी संज्ञा । विपर्यासश्चायमुपमानान्तरव्यवच्छेदार्थः । उदाहरणम्—**कमलेवेति** ।

---

**उ०ः**—मानोपमेययोरित्यर्थः । **विपर्यास इति** । स च वाक्यद्वये एव संभवति । तत्र वाक्यद्वयं शाब्दमार्थं वा । तेन 'रामरावणौ मिथस्तुल्यौ' इत्यादौ नाव्याप्तिः । तत्रापि रामो रावणतुल्यो रावणो रामतुल्य इति वाक्यार्थभेदप्रतीतेः । **यौगि-**

---

**प्रभाः**—निरूपितसादृश्यवदभिन्नमिति बोधः । चन्द्रवत्सौन्दर्यमस्येतीवार्थे 'तत्र तस्येव' इति विहितवतेः प्रयोगे तु चन्द्रपदस्य तत्सौन्दर्ये लक्षणया चन्द्रसौन्दर्यनिरूपितसादृश्यवन्मुखसंबन्धि सौन्दर्यमिति सौन्दर्ययोः सादृश्यबोधोत्तरं तयोरभेदाध्यवसायादेकधर्ममूला पश्चान्मुखचन्द्रयोरपि सादृश्यधीरित्याहुः । अरविन्देन तुल्यं मुखमित्यत्र निरूपितत्वं तृतीयार्थः पदार्थैकदेशसादृश्यान्वयी । अत्रैव सौन्दर्येणेत्युक्तौ प्रयोज्यत्वं तृतीयार्थस्तत्रैवान्वेति । मुखमरविन्दं च सममित्यत्र प्रथमं शब्दादुभयं सदृशमिति बोधे पश्चान्मानसी वैयञ्जनिकी वा परस्परनिरूपितसादृश्यप्रतीतिः । प्रसिद्धनिरूपितसादृश्यस्य च 'पाण्ड्योऽयमंस—' इत्यादिबिम्बप्रतिबिम्बभावस्थले हारहरिचन्दनविशिष्टो राजा बालातपनिर्झरविशिष्टपर्वतसदृश इति बोधोत्तरं सादृश्यप्रयोजकधर्माकाङ्क्षायां बालातपाद्युपमानोपमेयधर्माणां सादृश्यमूलाभेदाध्यवसानेन साधारणधर्मत्वसिद्धिः । हारहरिचन्दनाभ्यामुक्तरूपाद्रिरिव राजेत्युक्तौ प्रयोजकत्वं तृतीयार्थः सादृश्यान्वयी । उक्तरीत्या सादृश्यस्य तत्प्रयोज्यत्वादिति दिक् । सादृश्यस्य समानधर्मरूपत्वे तु चन्द्र इव सुन्दरं मुखमित्यादौ चन्द्रवृत्तिसमानधर्माभिन्नसौन्दर्यवदभिन्नं मुखमिति धीः । चन्द्रसुन्दरमिति समासे तु चन्द्रपदस्य तद्वृत्तिसमानधर्मवन्मुखमिति धीः । एवं तुल्यादिपदोपादानेऽप्यूह्यम् । एवं क्यजादावप्युपमानपदानां तत्सादृश्ये लक्षणा । तस्य प्रयोजकतया अभेदेन वा क्यजाद्यर्थाचारविशेषत्वं स चोपमेये आश्रयतयान्वेतीत्यलम् । इत्युपमालङ्कारः ॥ १ ॥ ननु 'पितुर्नियोगाद्वनवासमेव

## (१३) संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्।

समेन उपमानेन।

### 4 UTPREKSA

Further, what consists in *fancying* the matter under description to be the same as its equal is "Utprekṣā"

*Gloss* —Its equal i. e. the Upamāna

**प्रदीपः**—सम्भावनमिति। समेनेत्यत्र सह एकरूपतयेति शेषः। तेन प्रकृतस्य सभविनोऽर्थस्य समेनासभविना सहैकरूपतया यत्सभावन तदुत्प्रेक्षालंकार इत्यर्थः। सा चेय हेत्वादिसभावनाभेदाद्बहुप्रकारा। तत्र हेतूत्प्रेक्षा यथा—

**उ०ः**—**कीर्ति**। उपमेयेनोपमा यत्रेति यौगिकीत्यर्थः। एकस्य साधारणधर्मत्वे इयमिति बोध्यम्। तदाह। **विपर्यासश्चायमुपमानांतरव्यवच्छेदार्थ इति**। एकेन हि धर्मेण तत्साम्ये एकत्र वर्णिते तेन धर्मेणापरस्य साम्यमर्थप्राप्त पुनः शब्देनोच्यमान तृतीयसदृशव्यवच्छेदफलकमिति भाव। अत एवात्रोपमा न। साधारणधर्मसबधकृतचमत्काराभावात्। **कमलेवेति**। (कमला लक्ष्मी। विभा कान्ति। धृति धैर्यम्। वत हर्षे। गीतिश्छन्द) अत्रातिस्पृहणीयत्वप्रचितत्वविरतृत-

**प्रभाः**—निस्तीर्य राम प्रतिपन्नराज्य। धर्मार्थकामेषु समां प्रपेदे यथा तथैवावरजेषु वृत्तिम्॥' इत्यत्रैकस्यैव रामस्योपमानत्वमुपमेयत्वमेकवाक्यगतमस्तीत्यतिव्याप्तिः। वृत्तिसाम्यमात्रस्यैव प्रतिपाद्यतया सदृशान्तरव्यवच्छेदाप्रतीतेरिष्टापत्त्यसभवात्। अत आह—**उपमानान्तरेति**। एव च तत्रैतत्फलाभावान्नातिव्याप्तिरिति भाव। उक्तार्थस्य प्रकाशाननुगत्व दर्शयति—**तदेतदिति**। कथमनेनोक्तार्थलाभस्तत्राह—**यद्युपमीहीति**। उपमानान्तरसबन्धस्याभावो यत्रार्थाद्गम्यते इत्यर्थोऽस्माकम् इति भाव। एवं तु सति एकवाक्यगत इत्यस्य वैयर्थ्यम्। उपमेयोपमादेरफलविशेषणेनैव व्यावृत्तेरत आह—**यत्रेति**। एव च नैतल्लक्षणान्तर्गत किं [illegible] संज्ञाप्रवृत्तिनिमित्तकथनमिति नो कदोष इति भाव। कथ तर्हि 'पितुर्नियोगात्–' इत्यादावतिव्याप्तिवारणमिति चेत्, तत्र वृत्त्योरेव साम्यविवक्षणात्र तु रामेणैव रामस्येत्यवधेयम्। यत्र [illegible] 'लोहितपीतैः कुसुमैराननमाभाति भूरुत शिरारम्। दावज्वलनज्वालैः कदाचिदाकीर्णमिव सततम्॥' इत्यादौ ह्यसादेरेकस्यैवोपमानोपमेयत्व बिम्बप्रतिबिम्बभावापन्नधर्मेण 'पाण्ड्योऽय–' इत्यादिवदनुभविकम्। तत्रावस्थाभेदमवेक्ष्य तात्पर्यविषयसाम्योक्तेर्नातिव्याप्तिः। एकस्यैवैवकारेण देशकालादिभेदेन तात्पर्यम्। विपयन्यन्यव्यवच्छेदस्य प्रयमानस्य च लक्षणे प्रवेशात्। तदाह—**पयकार इति**। वैबिम्बमितरा

**उ०:**—त्वानि त्रिषु साधारणधर्मा । **इत्युपमेयोपमा ।** वाच्यसाधर्म्यालंकार निरूप्य व्यंग्यसाधर्म्येषु निरूपणीयेषु प्रथम प्राधान्यात् उत्प्रेक्षामाह—**संभावन-मिति ।** उत्कटकोटिक संदेह । अथ वाच्यसाधर्म्यालंकारनिरूपणोत्तरम् । उत्प्रेक्षा निरूप्यत इति शेष । **समेन ।** प्रकृतमात्मन सम करोतीति सममुपमानम् । उत्कटा प्रकृष्टस्योपमानस्येक्षा ज्ञान उत्प्रेक्षा । एव चोत्कटोपमानकोटिकप्रकृतविषयकसंभावनमुत्प्रेक्षेत्यर्थ । **समेनासंभविनेति ।** अलोकसिद्धेन कविकल्पितेनेत्यर्थ । तदुक्त चक्रवर्तिना । 'यदाऽयमुपमानांशो लोकत सिद्धिमृच्छति । तदोपमैव येनेवशब्द साधर्म्यवाचक ॥ यदा पुनरय लोकादसिद्ध कविकल्पित । तदोत्प्रेक्षैव येनेवशब्द संभावनापर ॥' इति । इद येनशब्दसमभिव्याहारे एव । अन्यत्र संभविनाऽपि । तेन मुख चन्द्र मन्ये इत्यादे संग्रह । चन्द्र इव मुखमित्यादौ तु उपमैव । **एकरूपतयेति ।** तादात्म्येनेत्यर्थ । एव चासदृशयो संभावन नोत्प्रेक्षालंकार । सादृश्यातिरिक्तमूलकस्मरणादिवत् । किं तु वस्तुमात्रम् । तेन 'वदनकमलेन बाले स्मितसुषमालेशमातनुहसि यदा । जगदिह तदैव जाने दशार्धबाणेन विजितमिति ॥' इत्यादौ नोत्प्रेक्षा । अत्र स्मितस्य ■

**प्रभा:**—लकाराद्विशेषो निरपेक्षतारूप इत्यर्थ । **विपर्यासेति ।** उपमेयोपमेत्यर्थ । तत्र विपर्यासोपमायाम् । तथाभाव उपमानोपमेयभाव । एकस्यैव कथमुपमानोपमेयभाव इत्यत आह—**अत्रेति ।** एव सति 'लोहितपीतै –' इत्यादित कोऽत्र विशेष इति चेत्, अय विशेष —यत्तत्रावस्थाभेदोपादानेन साम्यबोधने तात्पर्य न त्वत्र । किं तु स्तुतिपरार्थवादवाक्यार्थवत्तात्पर्यविषयीभूत साम्यमनौपम्यपरमिति । **तयोरिति ।** अनेन च 'भणितिरिव मति –' इत्यादिरशनोपमाव्यावृत्ति । तत्रोपमेयाया मतेरेवोपमानतारूपविपर्यासेऽपि भणितेरुपमानभूताया उपमेयत्वरूपतद्भावात् । **असंभवादिति ।** न च मुखमरविन्द च परस्परेण समसित्यादावेकवाक्येऽप्युपमेयोपमास्त्येवेति कथमसंभव इति शङ्क्यम् । तत्राप्यरविन्देन मुख समं मुखेन चारविन्दमित्यर्थतो वाक्यभेदसत्त्वादित्याशयात् । नन्वेवं सति मुखमिव चन्द्र इत्यत्रोपमेयोपमाया अभावात्कथमलंकार स्यादत आह—**मुख्यमिवेति ।** ननु 'रजोभि स्यन्दनोद्धूतै' इति रघुचतुर्थसर्गे, 'सविता विधवति विधुरपि सवितरति –' इत्यादावतिव्याप्ति । तृतीयसदृशव्यवच्छेदाप्रतीत्या तत्रोपमेयोपमात्वानङ्गीकारात् । अत आह—**विपर्यासश्चायमिति ।** व्यवच्छेदार्थं इत्यनन्तरं लक्षणे निवेशित इति शेष ।

उ०ः—भावनोत्थापकत्वेऽपि जगद्विजितरूपविषयविषयिसाधारणत्वाभावात्। सभावना च रमणीयधर्मनिमित्तिका ग्राह्या। तेन 'नून स्थाणुनाऽनेन भाव्यम्' इत्यादौ निश्चलत्वादिसाधारणधर्मनिमित्तकसभावनाया नातिव्याप्तिः। रूपकवित्तावतिव्याप्तिवारणाय सभावनमिति। प्रकृतस्येत्यस्य च प्रकृततावच्छेदकरूपेण ज्ञातस्येत्यर्थः। तेन यत्राऽऽहार्यसभावन तत्रैवोत्प्रेक्षा। तेन 'राम स्निग्धतरश्याम विलोक्य वनमडले। प्रायो धाराधरोऽय स्यादिति नृत्यन्ति केकिन॥' इत्यत्रानाहार्यसभावनाया नातिव्याप्तिः। अत्र तेषा नृत्यप्रवृत्त्या सभावनाया अनाहार्यत्वम्। आहार्यत्वेपि तत्कोटिसहचरितभूयोधर्मवद्विशेष्यकत्वस्योत्कटकोटिकत्वस्य सभवात्। इव नून मन्ये जानेऽवैमि ऊहे तर्कयामि शङ्के उत्प्रेक्षे इत्यादिभि प्रतिपादकै सहिता यत्रोत्प्रेक्षासामग्री तत्र वाच्या सा। यत्र प्रतिपादकशब्दरहित तत्सामग्रीमात्र तत्र व्यग्या। यथा वक्ष्यमाणेष्वेवेवादिपदाऽदाने। यत्र तत्सामग्रीरहित प्रतिपादकमात्र तत्र सभावनामात्रमेव नोत्प्रेक्षेति बोध्यम्। **हेत्वादीति**। आदिना फलस्वरूपे। **बहुप्रकारेति**। जातिगुणक्रियाद्रव्याणा अभावस्य च सभावितत्वेन स्वरूपोत्प्रेक्षा पचधा। एव हेतुफलयोरपि जात्यादिरूपत्वेन तयोरपि प्रत्येक पचविधत्वम्। एवमुत्प्रेक्षानिमित्तस्य धर्मस्योपादानानुपादानाभ्या बहुभेदेत्यर्थः। पर तु ईदृग्वैचित्र्यस-

---

**प्रभा**ः—तथा चोपमानान्तरव्यवच्छेदफलक उपमानोपमेययोर्विपर्यास इति लक्षण सुस्थमिति भाव। इत्यनन्वय॥२॥ उपमेयोपमा च॥३॥ उत्प्रेक्षालक्षणार्थं दर्शयति—**तेनेति**। यथोक्तदोषपूरणेनेत्यर्थः। 'हृतसारमिव—' इत्यत्र नैषधीयद्वितीयसर्गे सभावनाविषयस्य चन्द्रस्याप्रकृतत्वादाह—**समवित इति**। स्वत सिद्धस्य विषयस्येत्यर्थः। समेनेत्यस्योपमानेनेत्यर्थः उक्तव्याप्तितादवस्थ्यमतस्तदर्थमाह—**असभवितेनेति**। असभावितेनार्थेनेत्यर्थः। आरोप्येणेति वक्तव्ये सभावनाया आहार्यत्वसिध्यर्थमसभविनेत्युक्तम्। तदर्थथासभवित्वेन ज्ञातत्वम्। तेन 'विरक्तसध्या—' इति रघुचतुर्दशसर्गपद्य (इत्यत्र) नातिव्याप्तिः। एकरूपतया अभेदेन। सभावनमुक्तोपमानकोटिकसदेहविपर्ययवारणम्। तेन सदेहे नातिव्याप्तिः। एतच्च सादृश्यहेतुकत्वेन विशेषणीयम्। तेन 'वदनकमलेन बाले स्मितसुधमालेशमावहति। जगदिद तदैव जाने दशाधवाणेन विजितमिति॥' इत्यादौ नातिप्रसङ्ग इति सक्षेप। **हेत्वादीति**। आदिना फलस्वरूपयो परिग्रह। हेतुफलभिन्न स्वरूपशब्दार्थ।

उदाहरणम्—

उन्मेषं यो मम न सहते जातिवैरी निशाया-
मिन्दोरिन्दीवरदलदृशा तस्य सौंदर्यदर्पः ।
नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-
ल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः ॥ २५ ॥ (—)

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ २६ ॥ (मृच्छकटिक-१-३४.)

इत्यादौ व्यापनादि लेपनादिरूपतया संभावितम् ।

---

To illustrate:—

O lady of graceful form! I fancy that the Beauty-of-the-lotus is clinging to your feet, in exultation, possibly with the idea (इति): "By this lady, with eyes like lotus-petals, has been stubbornly quelled, with the *charm of her face, the vanity of beauty on the part of the moon,* my born enemy, who cannot brook my bloom at night." (25)

The darkness, as if, *anoints* the limbs, the sky *showers*, as it were, collyrium; like service tendered to an evil person, the sight has become unavailing. (26)

In instances like these, permeation etc. comes to be fancied as anointing etc.

---

**प्रदीपः**—**उन्मेषमिति**। अत्र पद्मलक्ष्म्याः कामिनीचरणयोः स्वभावलग्नत्वं यथोक्तहर्षहेतुकलग्नत्वतादात्म्येन संभावितम् । स्वरूपसंभावनं यथा—**लिम्पतीवेति**। अत्र गम्यमानं तमसो व्यापनादि लेपनादिरूपतया संभावितमिति स्वरूपोत्प्रेक्षेयम् । अत एव 'तमसो लेपनकर्तृत्वमनोत्प्रेक्ष्यम्' इत्यलंकारसर्वस्वकारमतमपास्तम् । विवक्षितविवे-

---

**उ०**:—इत्थं न चमत्कारातिशयायेति न ग्रंथकृतोक्तम् । **उन्मेषमिति** । (नायकस्य नायिकां प्रति चाटूक्तिरियम् ।) विकासमित्यर्थः । (यः इन्दुः । मम पद्मस्य) जातिवैरी सहजशत्रुः । तस्य इन्दोः । मन्दाक्रान्ता छन्दः) **स्वभावलग्न-**

---

**प्रभा**:—ननु 'उन्मेष—' इत्यादौ हर्षस्य हेतुत्वेन लग्ने संभावनं, न त्वभेदेनेति कथमुक्तलक्षणसमन्वयस्तत्राह—**अत्रेति**। अत्र लग्नत्वस्य तादात्म्येन संभावनोक्तिः फलतः पर्यवसानाभिप्राया । तस्य पदार्थैकदेशत्वात् । किं तु स्वभावलग्नायां हर्षहेतुकलग्नाया अभेदेन संभावनं बोध्यम् । हेतूत्प्रेक्षाव्यपदेशोऽपि पर्यवसानत एव । इत्था

## (१४) ससंदेहस्तु भेदोक्तौ तदनुक्तौ च संशयः ॥ ६ ॥

### 5 SASANDEHA

As for 'Sasandeha, it is doubt, with the difference (from the Upamāna) specified, or unspecified

**प्रदीपः**–केन लेपनमात्रस्यैवोत्प्रेक्षणात्। एव फलाद्युत्प्रेक्षाप्यूहनीया। **ससन्देह इति।** भेदो वैधर्म्यम्। संशयस्तु कविप्रतिभानिर्मित एवालङ्कारो न तु स्वारसिक स्थाणुपुरुषादिविषयोऽपि। वैचित्र्याभावात्। अत्र संशय ससदेह इति लक्षणम्। भेदोक्तौ

**उ०ः**–त्वम्। तत्त्वेनाध्यवसित स्वाभाविक शोभासबध इत्यर्थ। **संभावितमिति।** अतिमनोहरत्वेन निमित्तेनेति भाव। अत्र लग्नापदेन लक्षणया पृथगुपस्थिते स्वाभाविकशोभासबधे यथोक्तहर्षहेतुकपद्मलक्ष्मीलग्नत्वतादात्म्यसभावना। तात्पर्यानुपपत्त्यैव च लक्षणा। लक्ष्यगतातिशयप्रतीतिश्च प्रयोजनम्। एतावतैवोत्प्रेक्षाया साध्यवसानत्वव्यवहार प्राचामिति बोध्यम्। न च हेतुफलयोरपि स्वरूपतया स्वरूपोत्प्रेक्षैव सर्वत्र वक्तुमुचितेति वाच्यम्। हेतुत्वफलत्वाभ्या निर्दिष्टेतरस्य स्वरूपशब्दार्थत्वात्। किंचिद्वैचित्र्यस्यानुभवसिद्धत्वात्। **लिंपतीवेति।** (मृच्छकटिके प्रथमाङ्के गाढान्धकारवर्णनमेतत्।) भ्रमातिशयकारकत्वसकलवस्तुमलिनीकरणत्वादि निमित्तम्। अत्रापि व्यापनाद्युपस्थिति प्रागवदेव। **व्यापनादीति।** आदिपदेन कविकल्पित नभ कर्तृकाञ्जनकर्मकाध–प्रसरण गृह्यते। तम कर्तृकागकर्मकव्यापन तु स्वत सभव्येवेति बोध्यम्। अत्रोत्प्रेक्षैव। तिङन्तसमभिव्याहृतेनशब्दस्य समानवाबोधकत्वात्। स्पष्ट चेद सन्सूत्रे भाष्ये। **अपास्तमिति।** क्रियोपसर्जनस्य कर्तुरन्यत्रान्वयायोगात्।

**प्रभाः**–जुहोतीत्यस्य दधिविधित्वव्यपदेशवदित्यूह्यम्। एवम् 'चोलस्य यद्भीतिपलायितस्य भालत्वच कण्टकिनो वनान्ता। अद्यापि किं वानुभविष्यतीति व्यापाटयन्द्रष्टुमिवाक्षराणि॥' इति फलोत्प्रेक्षायामपि स्वाभाविके कण्टककर्तृकव्यापाटने ललाटाक्षरदर्शनफलकपाटनतादात्म्यसभावनमिति लक्षणसमन्वयो द्रष्टव्य इति दिक्। ननु 'लिम्पतीव–' इत्यत्र तमोव्यापनस्यानुपादानात्कथ तत्र तादात्म्येन लेपनसंभावनेत्यत आह—**अत्रेति।** गम्यमानं व्यञ्जनया प्रतीयमानम्। उत्प्रेक्षायाश्चाध्यवसानगर्भत्वाद्विषयस्यानुपादानेऽपि न दोष इत्यस्याहु—**अत एवेति।** अध्यवसानादेवेत्यर्थ।

उ०:—तदुक्तं दण्डिना। 'कर्ता यद्युपमानं स्यात् न्यग्भूतोऽसौ क्रियापदे। स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुम्॥' इति। देवदत्त इव यज्ञदत्तः पचतीत्यादौ पदांतरोपस्थाप्यकर्तृविशेषणस्य तूपमेयत्वं भवत्येवेति बोध्यम्। प्रथमान्तविशेष्यकबोधवादिमतेऽप्याह—**विवक्षितेति**। तन्मतेऽपि प्राप्ताप्राप्तविवेकेन क्रियास्वरूपोत्प्रेक्षा इति व्यवहार इति भावः। उत्तरार्धे तु उपमैव। उत्प्रेक्षासाधकाभावात्। एवं च नामसमभिव्याहृतेवशब्देन तत्रैवोत्प्रेक्षा यत्र संभावनोपयुक्तविशेषणदानम्। यथा 'बालेंदुवक्राण्यविकासभावात् बभुः पलाशान्यतिलोहितानि। सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम्॥' इत्यादौ। यत्र क्वचित् स्थितैरपि नखक्षतैर्वक्रत्वलौहित्यादिनोपमाया वक्तुं शक्यतया वसन्तनायकसंगतवनस्थलीसंबंधित्वरूपविशेषणकल्पनमुत्प्रेक्षागमकम्। उपमायां तस्यानुपयोगात्। इत्युत्प्रेक्षा। **ससंदेह इति**। अत्र 'प्रकृतस्य समेन यत्' इत्यनुवर्तते। प्रकृतस्य समेन सादृश्यज्ञानप्रयोज्यो यः संशयः संशयज्ञानं स ससंदेहनामाऽलंकार इत्यर्थः। संदेहेन सह विषयतया तद्विशिष्ट इति ससंदेहः। अत एव 'इतो गता सा क्व गता न जाने गेहं गता मे हृदयं गता वा' इत्यत्र न ससंदेहालंकारः। सादृश्यमूलकत्वाभावात्। अस्य प्रेममात्रोत्कर्षकत्वेऽपि वर्णनीयोत्कर्षकत्वाभावाच्च। असद्विषयेऽपि कस्यचित् प्रेमसंभवात्। संशयश्च समकोटिको ग्राह्य इत्युत्प्रेक्षाव्युदासः। स्थाणुर्वा पुरुषो वेति संशयवारणायाह—**संशयस्त्विति**। सादृश्यमूलकत्वाद्यभावे तु

**प्रभा:**—युक्तिमप्याह—**विवक्षितेति**। तथा च विवक्षितस्यैव साक्षादुत्प्रेक्षासंभवेन तत्कर्तृकत्वानुधावनं न युक्तमिति भावः। नव्यास्तु 'अस्या मुनीनामपि मोहमूहे भृगुर्महान्यत्कुचशैलशीली। नानारदाह्लादिमुखं श्रितोऽव्यासो महाभारतसर्गयोग्यः॥' इति नैषधीयपद्ये मोहनरूपधर्मस्याधारतासंबन्धेन मुनिषु प्रेक्षणदर्शनाभेदेनैवोत्प्रेक्षेति नियमो न युक्तः। न च मुनिगतधर्मविशेषे मोहस्याभेदेनोत्प्रेक्षितकल्पना युक्ता। अनुभवविरोधात् लक्षणानुपपत्त्यनुरोधेनानुभवबाधायोगात्। एवं च लिम्पतीवेत्यत्रापि तमसि लेपनकर्तृत्वोत्प्रेक्षैव युक्ता। आख्यातार्थकर्तृत्वस्य प्रथमान्तपदोपस्थाप्यऽन्वयस्य व्युत्पत्तिसिद्धत्वात्। किं च निगीर्य ध्यापने लेपनोत्प्रेक्षाङ्गीकारे तस्या विधेयत्वेन प्रत्ययो न स्यात्। उद्देश्यस्य पृथक्पदानुपात्तत्वात्। इवशब्दान्वितस्योत्प्रेक्षाया उत्सर्गसिद्धत्वाच्च। तस्मात्स्वरूपोत्प्रेक्षा द्विविधा धर्म्युत्प्रेक्षा धर्मोत्प्रेक्षा

भेदोक्तौ यथा—

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥ २७ ॥ (—)

*Gloss* — With the difference specified as in the instance —

May this possibly be the sun? But then it is possessed of seven horses Is it fire? But surely it does not spread in *all* directions. Is this the god of death in person? But buffalo is his mount Doubts like these do the hostile warriors entertain, for a long while, as they happen to look at you in the battle. (27)

**प्रदीपः** – तदनुक्तौ चेति विभागः । तत्र भेदोक्तौ यथा—अयमिति । अत्र मार्तण्डत्वादीनां संदेहे सप्ततुरगत्वादीनि वैधर्म्याणि तदाश्रयेयुक्तानि । न चायं व्यतिरेकालंकारः । तस्य संदेहानुयायितया तेनैव व्यपदेशौचित्यात् । ननु भट्टोद्भटेन भेदोक्तौ निश्चयगर्भ एवायं स्वीकृतो न तु निश्चयान्तोऽपि । तत्किमस्यापि स एव पन्था । नेत्युच्यते । कुत एतत् । भेदोक्ताविति विभजनात् । निश्चयान्तस्यापि तत्संभवात् । वैचित्र्यानुभवाच्च । यथा—

**उ०ः** – संशयमात्रेण नालंकार इति बोध्यम् । **अयमिति** । ( राजानं प्रति कस्यचिदुक्तिः । ) इतः युक्तः । विकल्पान् संशयान् । आजौ युद्धे । ( चिरम् इत्यस्य समालोक्येत्यत्र विदधतीत्यत्र वान्वयः । शिखरिणी छन्दः । ) अयं किं मार्तण्डस्तदन्यो वेति संशयाकारः । अत्र प्रतापेन दुर्निरीक्ष्यत्वसाम्यान्मार्तण्डत्वसंदेहः । दुराधर्षत्वसाम्यात् कृशानुत्वसंदेहः । क्षणेन सकलसंहर्तृत्वसाम्यात्कृतान्तत्वसंदेहः । **उक्तानीति** । मार्तण्डादिवैधर्म्येण मार्तण्डत्वाद्यभावनिश्चयेऽपि कृशानुत्वादिसंशयादस्य निश्चयगर्भता । वैधर्म्योक्तिस्तु सति मार्तण्ड-

**प्रभाः** – चेत्याह । अथोत्प्रेक्षायामन्वयबोधप्रकारोऽभिधीयते—त(य ?)त्रोत्प्रेक्षाया पयम्पर्यो हेतु । तत्र प्रकृत्यर्थहर्षादिरभेदेनान्वय । हेतोश्च प्रयोज्यतासंसर्गेण लगने तस्य चाभे न स्वाभाविके लगने संभावनं प्राचां मते । तेन हर्षहेतुकलगनतादात्म्यसंभावनाविषय पादयो पद्मशोभालगनमिति बोध । नव्यनये [illegible] हेतोरेव प्रयोज्यतासंसर्गेणोत्प्रेक्षणाद्धर्षहेतुप्रयोज्यमिव लक्ष्मीलगनमिति बोध । एवं द्रष्टुमिवाक्षराणीति फलोत्प्रेक्षायामभेदेन प्रकृत्यर्थान्वितस्य तुमुनर्थफलस्य साधनत्वसंसर्गेण पाटनेऽन्वयात्तस्य च स्वाभाविके तादात्म्येन संभावनाऽक्षराक्षरदर्शनाभिन्नफलकपाटनाभिन्नमिदं तत्पाटनमिति बोध । नव्यनये तु फलस्यैव साधनत्वं संसर्गेणोत्प्रेक्षण-

भेदोक्तावित्यनेन न केवलमयं निश्चयगर्भो, यावन्निश्चयान्तोऽपि संदेहः स्वीकृतः । यथा—

इन्दुः किं क्व कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम् ।
ललितसविलासवचनैर्मुखमिति हरिणाक्षि निश्चितं परतः ॥२८॥ (—)

Owing to (the words) "with the difference specified," this (figure) comes to be accepted not only in that variety of doubt pregnant with determination but also in the other, which culminates in determination. As for instance:—

Is it the moon? Where is the spot? Is this a lotus? Where has the water vanished? By the elegant, amorous words, has it been, in the sequel, ascertained, O deer-eyed one! that it is the face! (28)

प्रदीपः—इन्दुरिति । तत्किं भट्टोद्भटेनायमुपेक्षित । प्रतीयमानवद्वाच्ये तादृशे-

उ०ः—त्वमशये कृशानुत्वसंशयायोगात् तन्मशायनिवृत्तये कृता। निश्चयगर्भश्चोपमाननिष्ठवैधर्म्योक्तौ। आद्यन्ते च संशय मध्ये निश्चय स निश्चयगर्भ इति तल्लक्षणात् । निश्चयांतोऽपीति । उपमेयनिष्ठवैधर्म्योक्तयेति भाव । यथेंदु' किमित्यादौ ललितवचनैर्मुखत्वनिश्चयेऽग्रे केनापि रूपेण संशयाभावात् । अस्यालंकारत्वबीजमाह । वैचित्र्येति। इन्दुरिति । नायिकां प्रति कस्यचिदुक्ति । हे हरिणाक्षि एतत् (मुखम्) इन्दु किम्। तर्हि कलङ्क क। सरसिज किम्। तर्हि अम्बु कुत्र गतम्। इति प्रथम सन्दिग्धम्। परत पश्चात् ललितसविलासवचनै मुखमिति निश्चितम्। (गीतिच्छन्द ।) प्रतीयमानवदिति। आपानत. संशये व्यङ्ग्यनिश्चयत्वे ह्यत्र चमत्कार । निश्चयस्य वाच्यत्वे तु न स इति भाव । अत्र निश्चयगर्भतया सङ्कीर्णो निश्चयान्त । शुद्धस्तु 'चपला जलदाच्च्युता लता वा तरुमुख्यादिति संशये निमग्न । गुरुनिश्वसितैं कपिर्मनीषी निरणैषीदथ तां वियो-

प्रभाः—मिति दर्शनकल्पनमिव पाठनमिति बोध । त्वमन्यत्राप्यूह्यम् । इत्युपक्षाऽलङ्कार ॥४॥ भेदोक्ताविति ससंदेह इति लक्ष्यनिर्देश । संशय इति लक्षणम् । अत्र च प्रकृतस्य सामर्थ्येनानुवर्तते । तथा च प्रकृतविषयकोटिक संशय ससंदेहालङ्कार इत्यर्थ । गर्भोक्ते गाढत्वप्राप्त्यभावात् 'अमुष्य धीरस्य जयाय साहसी तदा खलु ज्यां विशिखै सनाथयन् । निमज्जयामास यशांसि संशये स्मरस्त्रिलोकीविजयार्जितान्यपि ॥' इत्यादौ नातिव्याप्ति । स्यादुक्तां पुनो वैदर्भ्यसादस्य

किंतु निश्चयगर्भ इव नात्र निश्चयः प्रतीयमान इति उपेक्षितो भट्टो-द्भटेन। तदनुक्तौ यथा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥ २९॥

(विक्रमोर्वशीयम् १ १०)

---

Bhatta Udbhata, however, ignores this variety, since, herein the determination is not left to suggestion, as in the other variety in which determination comes in the middle When the difference is unspecified (the figure appears) as in —

Was it possibly the moon that lends charm (to objects), who played the creator in the creative process of this (damsel)? (or), was it Cupid himself whose sole delight lies in love? or, was it the month (चैत्र) abounding in flowers? How indeed could the ancient sage, grown *cold (जड – जल) by a constant study of the Vedas, and whose sense of* curiosity had turned away from objects of sense, be able to create this exquisite form? (29)

---

**प्रदीप**: – चित्र्याभावादिति गृहाण। भेदानुक्तौ यथा—**अस्या इति**। अत्र शङ्क्यमानस्य

---

**उ०**: – गिनीति' इत्यादौ। अत्र मजूषादिगतफटकादाविवालकारव्यपदेश। किंशब्दनुशब्दादेश्च समकोटिकसंशयविषयत्वे शक्ति। अय किं मार्तण्ड इत्यादेरय मार्तण्डत्वादिसंशयविषय इत्यादिरर्थ। स्वसंशयज्ञापनाय च परं प्रति तथोक्ति। **अस्या इति**। (विक्रमोर्वशीये प्रथमेऽङ्के उर्वशीमुद्दिश्य पुरूरवस उक्ति।) अस्या सृष्टौ य प्रजापतिर्निर्माता अभूत् किं चन्द्र किं वा मदन किं वा पुष्पाकरो मासो वसन्त इति प्रजापतिधर्मिकचन्द्रत्वादिरूपविरुद्धनानाभाव कोटिक संशय। (*विषयेभ्य वनितादिभ्य व्यावृत्त निवृत्त कौतूहल औत्सुक्य* यस्य तादृश। पुराणो मुनि ब्रह्मा। शार्दूलविक्रीडित छन्द।) एतन्निर्मातरि कान्ति-

---

**प्रभा**: – तु सादृश्यप्रयोज्यत्वेऽपि कविप्रतिभेत्यादिना चमत्कारित्वोक्तेस्तदभावादेव नाति व्याप्तिरिति ज्ञेयम्। अत्र समेनेत्यनेन सादृश्यस्येव समानकोटिकत्वस्यापि लाभा दुत्प्रेक्षाव्यावृत्ति। **न चायमिति**। असत्यतुरगयुक्तत्वादिना राज्ञो मार्तण्डाद्युपमानेभ्य

## ( १५ ) तद्रूपकमभेदो य उपमानोपमेययोः ।

अतिसाम्यात् ( अनपह्नुतभेदयोः ) अभेदः ।

### 6 RŪPAKA

That is Rūpaka which consists in the identification of the Upamāna and the Upameya.

*Gloss* —Identification due to extreme similarity, between objects whose distinctness is not disguised.

**प्रदीपः**–प्राजापत्यादे कस्यापि न वैधर्म्यमुक्तम्। **तद्रूपकमिति** । अभेदोऽभेदारोप । बीज तु तत्रातिसाम्यम् । अभेदश्चात्रानपह्नुतभेदयोर्विवक्षित इति नापह्नुतावतिव्याप्ति । तदेतत् द्विविधम्—सावयवं निरवयवं च । तत्राद्य समस्तवस्तुविषयमेकदेशविवर्ति च ।

उ०:–प्रदत्वसत्त्वेन चन्द्रस्य च तत्त्वेन कान्तिप्रदत्व तयो सादृश्यम्। अस्या शृङ्गारोद्दीपनरूपलावण्यादिमत्त्वेनाधरदशनादिरूपपुष्पवत्त्वेन तन्निर्मातरि तादृशला-वण्यादिसम्बद्धताया पुष्पवत्तायाश्च सत्त्वेन मदनवसन्तयोरपि तत्सत्वात् तद्रूपसाद-श्यमूलकोऽय सशय । तत्सामग्रीमपन्नेनैव तद्धर्मवतो निर्माणसभवात् । केचित्तु 'अस्या सर्गविधौ' इत्यत्र वितर्कालकार, वितर्कश्च सशयोत्तरमनिर्णये ऊह । तद्रूपजनकश्च तुशब्दादि । न चेयम् । चन्द्रान्यो यदि निर्माता स्यात्कान्तिप्रदो न स्यादित्याद्याकार । अत एव ब्रह्मा यदि निर्माता स्यात् निर्माणसामग्री-मान् स्यादिति सशयोत्तरजाततर्कस्याऽऽपाद्य वेदाभ्यासजड इत्यादिना निषि-ध्यत इति । तन्न । वितर्कस्वीकारेणानेन त्वयाऽप्यत्र सशयागीकारेण तस्यैवाल-कारत्वात् । सतोऽपि वितर्कस्य वर्णनीयोत्कर्षानाधायकत्वेनाऽलकारत्वाभावाच्च । सदिहेनैव तस्या उत्कर्षसिद्धे । वेदाभ्यासजड इत्याद्युक्तिस्तु जगन्निर्मातरि ब्रह्मणि सति कथमेतेषु तस्या निर्मातृत्वसन्देह इत्याशकाऽपनयनार्थमेवेति

**प्रभा**:–अधिकयोरेवेति भाव । परिहरति—**तस्येति** । प्रथमत सन्देह प्रतीतेरनन्तर च वैधर्म्योपन्यासेन व्यतिरेकप्रतीतावप्युपजीव्य या सशयचमत्कृतावत प्रतीतेरनन्तर । **प्रतीयमानवदिति** । पर्यवसानमित्यर्थ । **अस्यापीति** । प्रकृतसूत्रानुरूपोत्यर्थ । निश्चयगर्भे हि वैधर्म्यांकन्या निश्चयो व्यक्तय निश्चयान्ते [illegible] वाच्य इति चम-त्कारातिशयोदुत्प्रेक्षित इत्यर्थ । **अत्रेति** । प्रजापत्यादावित्यादिवत् चन्द्रादिरिदम । भत्र हि चन्द्रादौ प्रजापतिसदेह इति दीक्षिता । एत प्रजापतौ चन्द्रादिसंदेह इत्यन्ये ।

उ०:—बोध्यम्। यत्तु 'इह नमय शिर कलिंगनाथ, समरमुखे करहाटनृपते धनुर्वा' इत्यत्र विकल्पालङ्कार पृथगेव। वाशब्दश्चात्र कल्पान्तरपर। असामर्थ्ये कलिंगनृपतिवत् शिरो नमय, सति सामर्थ्ये करहाटनृपतिवत् धनुर्नमयेत्यर्थात्। व्यवस्थितश्चाय विकल्प इति। तन्न। वर्णनीयोत्कर्षानाधायकत्वेनतस्यालङ्कारत्वे मानाभावात्। उपकुर्वन्ति त सन्तमित्यादिसामान्यलक्षणाभावात्। एतेन नमनरूपैकक्रियाकर्मत्वेनौपम्य गम्यमानमलङ्कारतावीजमित्यपास्तम्। सादृशौपम्यस्याचारुत्वाच्च। अन्ये तु अत्रापि संदेह एव, व्यङ्ग्यस्तु निश्चयो मात्सर्यमुत्सार्येतिवत् इत्याहु। इति **ससंदेहः**। **तद्रूपकमिति**। योऽभेदस्तद्रूपकमित्यन्वय। तदिति विधेयलिंगग्राहि। **अभेदारोप इति**। आरोपविषयाभेद इत्यर्थ। यथाश्रुते हि उपमात्वमपि सादृश्यप्रतीते स्यात्। ज्ञानानामेव तेषा लौकिकालङ्कारवत् चमत्कारजनकत्वमित्यन्यत्। उपमानोपमेययोरित्यस्योपमानतावच्छेदकोपमेयतावच्छेदकपुरस्कारेण शब्दान्निश्चीयमानयोरित्यर्थ। तेनाभेदप्रतीतेराहार्यत्वलाभ। तेन भ्रान्तिमति नातिव्याप्ति। अपह्नुतौ अतिशयोक्तौ च नातिव्याप्ति। अपह्नुतौ स्वेच्छया निषिध्यमानत्वेन, भ्रान्तिमति तज्जनकदोषेणैव प्रतिबन्धात्। अतिशयोक्ते साध्यवसानलक्षणामूलकत्वात्तस्य पुरस्काराभावात्। अतिशयोक्तिवत् निदर्शनायामपि नातिव्याप्ति। शब्दादिति विशेषणात् 'मुखमिद चन्द्र' इति प्रात्यक्षिकाहार्यनिश्चयगोचरतादात्म्यव्यवच्छेद। निश्चीयमानयोरित्युक्त्या 'नून मुख चन्द्र' इत्युत्प्रेक्षाया नातिव्याप्ति। तत्र ज्ञानमलङ्कार अत्राभेद इति भेदाच्च। उपमानोपमेययोरित्येतद्विशेषणलभ्यमर्थमाह—**बीजं तु तत्रातिसाम्यमिति**। तेन 'सुख मनोरमा रामा' इत्यादिशुद्धारोपविषयाभेदनिरास। यत्तु सादृश्य

**प्रभा**—उभयत्रापि वैधर्म्यानुक्तिरित्यर्थ। इति सदेहालङ्कार ॥५॥ **अभेदारोप इति**। अभेदेन सामानाधिकरण्येनारोप इत्यर्थ। सारोपलक्षणयो सामानाधिकरण्येन प्रतिपादनमिति यावत्। तदुक्तम्—'यदोपमानशब्दाना गौणवृत्तिव्यपाश्रयात्। उपमेये भवेद्वृत्तिस्त(दा त)द्रूपक भवेत् ॥' इति। अलङ्कारभाष्यकारोऽपि लक्षणापरमार्थ यावता रूपकमित्याह। अतिसाम्य धर्मबाहुल्यम्। तुशब्देन च वृत्तौ तस्य निमित्तत्वमात्रेणोक्तत्व तु लक्षणाघटकतयेति ध्वनितम्। उपमानोपमेययो

## (१६) समस्तवस्तुविषयं श्रौता आरोपिता यदा ॥ ७ ॥

आरोपविषया इव आरोप्यमाणा यदा शब्दोपात्ता, तदा (समस्तानि वस्तूनि विषयोऽस्येति) समस्तवस्तुविषयम्। आरोपिता इति बहुवचनमविवक्षितम्।

When the objects super imposed are expressly stated, there results the 'Samastavastuviṣaya (variety of Rūpaka.)

*Gloss* —When the objects super imposed happen to be expressed in words, like the objects super imposed upon, there results the Samastavastu viṣaya (Rūpaka), so called because all the objects (super imposed) come within its purview The plural number of आरोपिता is of no consequence

**प्रदीपः**—द्वितीयं तु शुद्धमानमिति। आद्ये विभागे लक्षणमाह—**समस्तेति**। आरोपिता आरोप्यमाणा। ते सर्वेऽपि यदारोपविषयवच्छाब्दा एव भवन्ति तदा समस्तवस्तुविषयं नाम रूपकम्। समस्तं वस्तु आरोप्यमाणं विषयः शब्दप्रतिपाद्योऽनेनेति व्युत्पत्तेः। आरोपिता इति बहुवचनमविवक्षितमित्यारोप्यद्वयस्थले नाव्याप्तिः।

**उ०**:—प्रयुक्ताभेदस्येव सत्रयातप्रयुक्ताभेदस्यापि रूपकत्वमिति। तन्न। सादृश्यामूलकस्मरणस्याप्यलङ्कारतापत्तेः। चन्द्रादिपदानां तद्वृत्तिगुणवति सारोपलक्षणाया अभेदप्रतीतिर्व्यङ्ग्येत्येतावतैव रूपकं वाच्यम्। चशब्दादिव्यंग्यत्वे समुच्चय इव। 'मुखमपरचन्द्र' इत्यादौ तु कविकल्पितापरचन्द्रेण रूपकं बोध्यम्। 'मुखचंद्रेण विरहताप शाम्यति' इत्यादावपि रूपकमेव। न चैव चन्द्राभेदप्रतीतौ विरहतापशामकत्वामभव। अभेदप्रतीतेराहार्यत्वेन मुखत्वरूपातिरस्कारेण विशेष्यतया भानेन च तत्सम्भवात्। 'राजनारायण लक्ष्मीस्त्वामालिङ्गति निर्भरम्' इत्यादौ आहार्यनारायणत्वनुद्रवाऽऽहार्यस्यैव लक्ष्मीकर्तृकालिङ्गनस्य बोधान्न दोषः। यत्तु आरोप्यमाणो यत्र विष-

**प्रभा**:—रित्यनेनैव हेतुहेतुमतोरभेदोक्तौ कोकिलानन्दो वसन्त इत्यादावतिप्रसङ्गात्। सारोपेत्यादिना चातिशयोक्तिव्यावृत्तिः। अनपह्नुतभेदयोरिति। भेदो वैधर्म्यं शुक्लत्वादि। तथा चारोपविषयस्योपमेयतावच्छेदकविशिष्टरूपत्वादेव लभ्यत इति ध्येयम्। अथवा गौणसारोपलक्षणामूलव्यङ्ग्यरूपोऽभेदारोप एव रूपकमस्तु। उपमातो वैचित्र्यस्य तत्प्रयुक्तत्वात्। अन्यूनं वैचित्र्यं तस्यैवारोपस्यौचित्यात्।

यथा—

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥ ३० ॥ (—)

अत्र पादत्रये, अन्तर्धानव्यसनरसिकत्वमारोपितधर्म एवेति रूपकपरिग्रहे साधकमस्तीति तत्संकराशंका न कार्या ।

---

To illustrate :—

White due to smearing of the ashes of moonlight, holding the bones of the stars, taking delight in the habit of becoming invisible, the Kāpāliki, in the shape of night, is on the tramp from continent to continent, carrying the magical, fragrant collyrium placed, in the guise of the spot, in the skull-bowl (मुद्राकपाल) of the moon (30)

There need be no doubt that here, in the three quarters (of the stanza,) is present the Sankara of it (i e of Rūpaka with Upamā), in view of the fact that the characteristic of being one who takes delight in the habit of becoming invisible is solely an attribute of the thing superimposed and is, hence, a probative circumstance for the acceptance of a Rūpaka

---

**प्रदीपः**—उदाहरणम्—ज्योत्स्नेति । अत्र पादत्रये ज्योत्स्नादिषु भस्मत्वादिकमारोप्यमाणं सर्वं शाब्दम् । ननु इदं रूपकोदाहरणं न युज्यते । साधकबाधकाभावेन रूपकोपमयोः सन्देहासन्देहलक्षणसंकरौचित्यादिति चेत् । भवेदेवम् । यद्यन्तर्धानव्यसनरसिकत्वं विशेषण

---

**उ०**:—यात्मतयैव प्रकृतकार्योपयोगी न स्वातन्त्र्येण स परिणाम । अत्र च विषयाभेद आरोप्यमाणे उपयुज्यते । रूपके तु नैवमिति विशेष । 'वदनेनेन्दुना तन्वी स्मरताप विलुम्पति' इत्यादि उदाहरणम् । अत्र हि स्मरतापनाशनसामर्थ्यं मुखात्मनैवेन्दो । ग्रीष्मतापहारकत्वात् रमणीयशोभाऽऽधारत्वाच्चेन्दुर्विषयतयोपात्त इति दाक्षिणात्या । तन्न । इन्दौ वदनतादात्म्यप्रतीतेर्वर्णनीयमुखाद्युत्कर्षकत्वेनालङ्कारत्वाभावात् इति दिक् । **आरोपविषयवदिति** ।

---

**प्रभा**:—व्यङ्ग्यस्यापि वाच्योत्कर्षकत्वेनालङ्कारान्तर्भावस्याप्रस्तुतप्रशंसानन्वयोपमेयोपमादावङ्गीकारात् । परम्परितरूपके 'नियतारोपणोपाय स्यादारोप परस्य यत्' इत्यारोपपदस्य प्रयोगाच्च 'उपमानोपमेयस्य गुणसाम्यात्तत्त्वारोपो रूपकम्' इति वामनसूत्राच्च 'भ्रमिम-

## (१७) श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत् ।

केचिदारोप्यमाणाः शब्दोपात्ताः, केचिदर्थसामर्थ्यादवसेयाः-इत्येकदेशविवर्तनात् एकदेशविवर्ति ।

---

That is 'Eka-deśa-vivarti' (Rūpaka) in which they (i.e. the things super imposed) are (some of them) expressed and (others) implied

*Gloss* —Some of the things superimposed are expressed in words; others are to be guessed on the strength of implication Thus it comes to be called 'Eka-deśa-vivarti' owing to its being present in an explicit form (वि) in a part (of the ~~description~~ complex figure)

---

प्रदीपः – न स्यात् । तद्धि रूपकपरिग्रहे साधकम् । कापालिन्या तत्सम्भवाद्रात्रावसंभवाच्च । उपमापरिग्रहे तु रात्रेरेव प्राधान्यात्तस्यानन्वय एव स्यात् । **श्रौता इति** । ते इत्यारोपिताः ।

---

उ०: – तेषां श्रौतत्वेऽविवादादृष्टान्ततेति बोध्यम् । श्रौता इत्यस्य व्याख्या शाब्दा इति । सावयवत्वं च परस्परसापेक्षरूपकसमुदायत्वम् । **ज्योत्स्नेति** । (रूपकमुखेन ज्यौत्स्नीं योगिनीत्वेन वर्णयति । ज्योत्स्नैव भस्म ।) छुरणं अनुलेपनम् । (तारका एव अस्थीनि ।) व्यसनं कौतुकम् । (रात्रिरेव कापालिनी योगिनी । चन्द्र एव) मुद्राकपालं कापालिकानां भजनादिधारणकपालम् । (मन्दाक्रान्ता छन्दः ।) अत्र समुदायात्मकस्य सावयवरूपकस्यावयवानां सर्वेषामपि समर्प्यसमर्थकत्वं परस्परं तुल्यम् । तथापि कवेः रात्रौ कापालिनीरूपकस्यैव समर्थ्यत्वेनाभिप्रेतत्वादितरेषां समर्थकत्वं गम्यते । रात्रिकापालिनीत्यस्य कापालिन्यभिन्ना रात्रिरित्यर्थः । उपमानपदस्य लक्षणायामपि व्यक्त्याभेदघटितवाक्यार्थस्यापि बोधात् । उपमायां तु सादृश्यघटित एव वाक्यार्थबोध इति विशेषः । **रूपकोपमयोरिति** । 'उपमितं व्याघ्रादिभिः' (पा. सू.–२-१-५६) इति सूत्रेण समास उपमेयविशेष्यक एव बोधः । उपमानोपमेयसमभिव्याहारे उपमेयस्य विशेष्यताया व्युत्पत्तिसिद्धत्वात् । अत एवेद सूत्रे विशेषणं विशेष्येणेति सिद्धे विशेष्यस्य पूर्वनिपातार्थमिति काशिकायामुक्तम् ।

---

प्रभाः – रतिमलगहृदयां' इत्यादौ ह्यादरूपं ... वाक्यस्य शुद्धरूपस्य निर्दिष्टमिति ग्रन्थे रूपकस्य वाक्यतोऽस्मिन्नु वाच्यार्थमानत्वनिमात्रा साधारणगुणानां तत्प्रतियोजकानां रूपकांशोपादानादुपपादनीयमिति दिक् । **तदेतदिति** । परमारे-

यथा—

जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअम् ।
रससंमुही वि सहसा परम्मुही होइ रिउसेणा ॥ ३१ ॥ (—)

To illustrate —

When he (lit. who) holds the bent sword (मण्डलाग्रलता) in his hand, in the harem of the battle-field, the hostile army, though prone to the (heroic) sentiment, all at once turns back (31)

**प्रदीपः**—तथा च यत्र केचिदारोप्यमाणा शब्दोपात्ता केचिदर्थसामर्थ्यादवसेयास्त देकदेशविवर्ति । एकदेशे विशेषेण वर्तत इति व्युत्पत्ते । उदाहरणम्—**जस्सेति** । अत्र रणेऽन्त पुरत्वमारोप्य शाब्दम् । मण्डलाग्रलताया नायिकात्व रिपुसेनाया प्रतिनायिकात्व चारोप्य न शाब्दम् । किं त्वन्त पुरत्वारोपसामर्थ्यादेवावसीयते । अन्यथा तस्या-

**उ०**ः—मुखचद्र इति विशेषणसमासे चद्ररूपकव्यवहार । यत्तु रूपके विशेषण विशेष्येणेति (पा. सू.—१-२-५७) समासे उपमेयस्य पूर्वनिपातश्चित्य इति । तन्न । मयूरव्यसकादिसमासस्य विशेषणसमासपदेन विवक्षणात् । एव च संदिह स्पष्ट एवेति भाव । एतदेव ध्वनयन् उदाहरिष्यति—जस्स रणेति । तत्रान्त-पुरस्य विशेष्यत्वे हि मडलाग्रलतादीना वाच्यानामनन्वय स्पष्ट एव । एव च कापालिकीव रात्रि कापालिक्यभिन्नेति वा, ज्योत्स्ना भस्मेव ज्योत्स्नैव भस्मेति वा, अस्थ्यभिन्नास्तारका अस्थिसदृशास्तारका वेत्यादिक्रमेण रूपकोपमयो संदेह इत्याशय । **रात्राविति** । कापालिक्यभेदानापन्नरात्रा-वित्यर्थ । **रात्रेरेवेति** । कापालिक्यभेदानापन्नरात्रेरेवेत्यर्थ । **अनन्वय इति** । बाधादिति भाव । कापालिक्यभेदग्रहे तु तद्धर्मांतरेऽन्तर्धा-नव्यसनरसिकत्वान्वये नानुपपत्तिरिति भाव । ननु अन्तर्धान स्वस्य चोराणा वेति उपमायामपि न तदन्वयानुपपत्तिरिति चेन्न । साधारणधर्म-प्रयोगस्य तदा सत्त्वेनोपमितसमासानापत्तौ मयूरव्यसकादिसमासस्यैवेष्टव्य-त्वेन रूपकस्यैव सिद्धिरित्याशयात् । व्यसनरसिकत्वस्य स्वरसतस्तस्यामन-न्वयाच्च । **विशेषेणेति** । रूपकसघातस्यावयविन अवयवे कस्मिंश्चिद्रूपके

**प्रभा**ः—तद्रूपकभेदस्य श्लेषमूलस्य शब्दार्थोभयालकारत्वात्तद्विभागानुक्ति । 'यस्य रणान्त पुरे करे कुर्वतो मण्डलाग्रलताम् । रससमुख्यपि सहसा पराङ्मुखीभवति रिपुसेना ॥' मण्डलाग्र खड्ग [redacted] एव लताकारत्वाल्लता । रसो वीर शृङ्गारश्च । **अन्यथेति** ।

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तम्, मण्डलाग्रलतायाः नायिकात्वम्, रिपुसेनायाश्च प्रतिनायिकात्वम् अर्थसामर्थ्यादवसीयते । इति एकदेशे विशेषेण वर्तनादेकदेशविवर्ति ।

## (१८) साङ्गमेतत्

उक्तद्विभेदं सावयवम् ।

## (१९) निरङ्गं तु शुद्धम्

---

Here the idea of being the harem super imposed on the battle field is expressed in words The idea of being the heroine (super imposed) on the bent sword, and that of being the counter-heroine (super imposed) on the hostile army are guessed on the strength of implication Thus it is Ekadeśavivarti owing to its being present, in an explicit form (विशेषण), in a part (of the description)

This is Sanga (Rūpaka)

*Gloss* —The one whose two varieties have been specified is such as consists of parts

While that-which-does not consist-of parts is (called) Suddha

---

प्रदीपः – एकदेशे विशेषेण वर्तनादेकदेशविवर्ति । साङ्गमिति । साङ्गं सावयवम् । एतत् । उक्तप्रकारद्वयवदित्यर्थः । साङ्गत्वमनेकरूपकसमुदायः । एकस्मिन्रूपके द्वितीयस्याङ्गत्वेनान्वयात् । अङ्गशब्दस्य हेत्वर्थत्वात् । निरङ्गमिति । निरङ्गमद्वितीयम् ।

उ०ः – विशेषेण शब्दमुखेन स्फुटतया इत्यर्थः । जस्सेति । 'यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम् । रससम्मुख्यपि सहसा पराङ्मुखीभवति रिपुसेना ॥' मण्डलाग्र खड्ग एव लता, तदाकारत्वात् । रसो वीरः शृङ्गारश्च । सामुख्यं युयुत्सा रतेच्छा च । पराङ्मुखता युद्धात् रतासहिष्णुत्वाच्च । (आर्या छन्दः ।) अंतःपुरत्वारोपेति । अन्तःपुरे तासामेवोचित्यादिति भावः । तदाह—अन्यथेति । यद्यपि लिङ्गविशेषात् करग्रहणरससांमुख्यादेर्नायिकाधर्मत्वेन प्रसिद्धत्वात् स्त्रीत्वाच्च सम्बन्धोऽतिनिर्धार्यते नायिकात्वारोपो‑ ऽवगन्तुं शक्यः । तथाप्यन्तःपुरत्वारोपोऽपि तत्र तत्र तन्निमित्तकः । न च स्वपक्ष‑

प्रभाः – [illegible] विना [illegible] पुरत्वारोपवाचकशब्दाभावेनानुपपत्त्यर्थं[illegible] इत्यर्थः । रसमुदाय इति । [illegible] इति शेषः । यथाहुर्मम्मटाचार्याः ॥

यथा—

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्।
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥ ३२ ॥ (—)

*Gloss* —To illustrate—

Since, like a doe, she makes her limbs still, at the tunes of a song, since she asks her friend over again the news relating to her beloved, even when it was (once) heard, since she lies down inwardly sleepless, I gather, therefore, that the Mind-born (Cupid) has set about watering the tiny *creeper of love*, in her heart What a joy! (32)

प्रदीपः—तच्छुद्धमेवेत्यर्थः। यथा कुरङ्गीवेति। अत्र प्रेममाने लतिकात्वारोप। अथ

उ०:—संघातात्मकस्यास्य रूपकभेदगणनायां गणनमनुचितमिति वाच्यम्। चमत्कारविशेषजनकतया तत्समुदायात्मकस्याप्यस्य मालारूपकादिवत् तद्भेदेषु गणनात्। यथा मौक्तिकालङ्कृतिगणनायामेक नासामौक्तिकमिव तत्संघातात्मिका मौक्तिकमजर्यादयो गण्यन्ते तद्वत्। ननु वक्ष्यमाणे विद्वन्मानसहंस इत्यादौ राज्ञि हंसत्वारोपो यथा मनस सरस्त्वारोपमपेक्षते तथाऽत्रापि नायिकाप्रतिनायिकात्वारोपाभ्यां रणेऽन्तःपुरत्वारोपोऽपेक्ष्यते इति परम्परितत्वमस्य स्यादिति चेन्न। रणेऽन्तःपुरत्वस्य सुखसंचारास्पदत्वादिनैव मण्डलाग्रलतादेर्नायिकात्वाद्यारोपस्य लिंगविशेषग्रहादिनाऽपि संभवेनास्य परम्परितत्वाभावात्। राज्ञि हंसत्वारोपस्तु मनसि सरस्त्वारोपं विना न संभवेत्। सरोनिधेयत्वं विना राज्ञि हंससाधर्म्यान्तराभावात्। एवं 'ज्योत्स्नाभस्म' इत्यादावपि बोध्यम्। अत एव 'नियतारोपणोपाय' इति वक्ष्यति। एतदित्यस्याव्यवहितपूर्वमात्रपरामर्शकत्वं व्याख्यति—प्रकारद्वयवदितीति। अद्वितीयमिति। अंगांगिभावहीनमित्यर्थः। केवलस्यैव रूपणादित्याशय। सावयवं त्वनेकविषयं परस्परसापेक्षं चेति बोध्यम्। कुरंगीति। (किशोर्या वृत्तान्तं धात्री निवेदयति।) स्तिमितयति,

प्रभा:—स्वापते। तत्रानेकेषामपि रूपकाणां परस्परानपेक्षत्वात्तथात्वमिति। अयमथाऽन्यशब्दादेव लभ्यत इत्याह—एकस्मिन्निति। अन्येकदेशिन्वरूपमात्रं मालामपि

(२०) माला तु पूर्ववत् ॥ ८ ॥

मालोपमायामिवैकस्मिन् बहव आरोपिताः ।

यथा—

> सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
> कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः ।
> विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया
> बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥ ३३ ॥ (—)

As for the Mālā (variety of Rūpaka) it is as before.

*Gloss*:—As in Mālopamā, (in this variety,) many things come to be super imposed on one.

To illustrate:—

*That beloved is a surging flow of beauty, a bursting forth of the raptures* of the Height-of-youth, a hypnotic feat (कार्मणकर्म) of grace, a habitation of the spurt of the secrets of gaiety, the lore of ornate (वक्र) expression, a manifestation of the unbounded skill of the Creator, the arrows of the Five-arrowed (Cupid), the crest jewel of womankind. (33)

प्रदीपः – रूपकस्यैव वैचित्र्यान्तरमाह—मालेति । यथैकत्र बहूपमानयोगे मालोपमा तथैकत्रानेकधर्मारोपे मालारूपकमित्यर्थः । यथा—सौन्दर्यस्येति ।

उ० : – निष्कृपाणि करोति । प्रश्नयति, प्रश्नगतं प्रश्नविषयं करोतीत्यर्थः । अंतः स्वपितीति, नयनामुद्रणेऽपि विषयं न गृह्णाति । अभिन्नाम् । तस्या एव सेव्यौचित्यात् । ( शिखरिणी छन्दः । ) अत्र प्रेममात्रे इति । न तु तदुपपादकत्वेन कश्चिदप्यन्यारोप इत्यर्थः । वैचित्र्यांतरम् । एकविषयत्वे परस्परमगांगिभावानापन्नत्वरूपम् । एवं च सांगस्येत्यस्यानेकरूपकसमुदायस्येत्यर्थः । कश्चित्तु निरंगस्यैवेति पाठः । एकविषयनानापदार्थारोपरूपत्वान्मालात्वे परस्परसापेक्षत्वविरहाच्च निरंगत्वमिति तदर्थः । अयमेव युक्तः पाठः । पूर्ववदिति व्याचष्टे—यथेति । एकत्रेति । उपमेये इत्यर्थः । एतस्योपमानस्य नानोपमेयत्वस्तु न कश्चिच्चमत्कार इति न तत्पृथक् गण्यते । सौन्दर्यस्येति ।

प्रभा : – प्रत्येकमलौकिकत्वप्रतिपादनायाह—अङ्गनाप्रस्येति । मालारूपकं पुनरेवं । पूर्वोक्तोपमायामर्शं इत्याह—यथेति । एतदेव पुनः सूत्रार्थमारोपितं दर्शयन् ।

**( २१ ) नियतारोपणोपायः स्यादारोपः परस्य यः ।**
**तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥ ९ ॥**

---

Where a specific super imposition becomes the occasion (उपाय) for the superimposition of something else, there results the Parampa rita (Rupaka), the word expressive (of the former thing superimposed) being either paronomastic or distinct (from the one expressing the thing superimposed upon)

---

**प्रदीपः—नियतेति।** नियतस्य मुख्यस्याऽऽरोपो वस्त्वन्तरतादात्म्यप्रतीतिस्तस्योपाय कारण य परस्यामुख्यस्याऽऽरोपस्तत्परम्परितम्। रूपणाना कार्यकारणभावरूपा परम्परा सजाताऽत्रेति योगादिति केचित्। वस्तुतस्तु नियतमारोपणमुपायो यत्र। आरोपणं विना यदा रोपण न सभवत्येवेति यावत्। एवभूत परस्यान्यस्य य आरोप स तथा। एव चैकरूपण हेतुक रूपणान्तरं परम्परितम्। कार्यकारणभावरूपा परम्परा सजाताऽत्रेति व्युत्पत्ते। श्लिष्ट इत्यादि। तदेतद् द्विविधम्। उपायभूते रूपके आरोप्यारोपविषययोर्वाचकस्य श्लिष्टत्या

---

**उ०ः—**( कश्चिद्विरही प्रेयसीं परामृशति। ) तरंगिणीति। तरगत्वेनोत्तरो त्तराऽविच्छेद। योग्यस्थानप्राप्त्या हर्ष। कार्मणकर्म वशीकरणक्रिया। तत्क्रियाविशिष्टो हि जगद्वशीकरोति। कान्तिरप्येतद्विशिष्टा तथेति जग द्वशीकारकत्व साधारणधर्म इति भाव। नर्मरहसा रहस्यपरिहासानाम्। आवास भूरसतिस्थानम्। या यद्वासभूरसति बाधके सा तद्वतीति सामान्यतो व्याप्त्या गृहीततद्वत्त्व साधारणो धर्म। एवमग्रेऽप्यूह्यम्। वक्रगिरा साकूतवचसाम्। विद्या उपदेशिका। अनवधि निःसीमं यत् प्रावीण्य निर्माणकौशल तस्य सा क्षात्क्रिया करणव्युत्पत्त्या प्रत्यक्षहेतु। ( शार्दूलविक्रीडित छन्द। ) प्रिया-यामेवस्या बहूना आरोपान्मालात्वम्। यथैकत्र सूत्रे बहूना पुष्पाणामिति दिक्। **नियतस्य मुख्यस्येति।** वर्णनीयत्वेन प्रकृतस्येत्यर्थ। घृत्तिस्थ पद्यर्थ। **अमुख्यस्य** अप्रकृतस्य। योऽन्यारोप इत्यर्थ। **केचिदिति।** अत्रारुचिबीज तु 'आलान जयकुञ्जरस्य' इत्यादावव्याप्ति। प्रकृत एव जये कुंजर

---

**प्रभाः—**मालोपमाया सूत्रानुक्ताया वृत्तावेव कथनादियाद्‌ । **केचिदिति।** अत्र च सावयवरूपकस्यापि परम्परितत्वप्रसङ्गेऽस्वरस इत्यत स्वय तदर्थमाह—**वस्तुतस्त्विति।** **पद चेति।** रूपणानन्तरं रूपकमिति शेष। सावयवे च ज्योत्स्नाभस्मेत्यादौ

यथा—

> विद्वन्मानसहंस वैरिकमलासंकोचदीप्तद्युते
> दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर ।
> सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो
> साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥ ३४ ॥ (—)

*Gloss —To illustrate —*

O swan! in the mind (by Śleṣa the Manasa lake) of the learned, O sun! *bringing about the ebb of the enemy's fortunes* (by Śleṣa bringing about the dilation of the lotuses), O Śiva! not going in quest of forts (by Śleṣa, ever on the look-out for Durgā), O fire! taking up the (challenge for) battle (by Śleṣa consuming sacred fuel), O Dakṣa! in inculcating a love of truth (by Śleṣa in showing disaffection towards Sati (i e Parvati), O Bhima! in being the prime origin of Triumph (by Śleṣa born prior to Vijaya i e Arjuna), O pre-eminent hero! *may you rule the empire augustly, for a hundred* Brahman-years! (34)

प्रदीपः – द्विप्रभृतिरूपकत्वाभावेत्यर्थः । तत्राद्यं यथा—विद्वदिति । अत्र विदुषां मानसं सरोविशेष इत्यारोपहेतुकः राज्ञो हंसत्वारोपणम् । तत्र चारोपविषयारोपणीययोर्हृदयसरोविशेषयोः श्लेषवता मानसशब्देनैवाभिधानम् । एवमग्रेऽपि । तत्र वैरिकमलायाः सङ्कोच एव कमलानामसङ्कोचः । दुर्गाणाम् अमार्गणमेव दुर्गाया मार्गणम् ।

उ० : – त्वारोपस्य प्रकृत एव राज्ञि आलानत्वारोपहेतुत्वात् । परस्यान्यस्येति । अप्रकृतस्य प्रकृते य आरोप इत्यर्थः । एकरूपणहेतुकमिति । यद्यपि दुर्गाणाममार्गणादौ दुर्गामार्गणादीनामारोपो न रूपकम् । किंतु श्लेषमहिम्नाऽऽरोपमात्रम् । तथापि रूपणपदमारोपमात्रपरमेवेति न दोषः । इदमेव चास्योपायत्वमारोपे, यत्तन्मूलीभूतसाधारणधर्मसम्पत्तिः । साधारणधर्मेणैवेति रूपकेणैवेत्यत्र न किंचिन्मानम् । यद्वा श्लेषस्थलेऽपि शब्दरूपसाधर्म्यकृत एवाभेदाध्यवसाय इति तस्यापि रूपकत्वमेवेति न दोषः । विद्वदिति । ( राजानं प्रति कवेरुक्तिः । ) हंसः पक्षिभेदः । नीललोहितः शिवः । समित्संग्राम

प्रभा:–ज्योत्स्नादिषु भस्माद्यारोपाभावेऽप्यनेकद्वीपभ्रमणादिप्रसिद्धसादृश्येन राज्ञो कमलाशिदीत्यारोपसंभवात् परम्परितत्वप्रसक्तः इति भावः । उक्त नवम इत्यर्थः । पश्यते चाम इत्यर्थः । तदनन्तरे अभासंगात्प्रस्तावे । मानसत्वादीनामिति । सरोविशेषचा-

नुरोधादत्रोक्तः । एकदेशविवर्ति हीदमन्यैरभिधीयते ।

भेदभाजि यथा—

आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः ।
सङ्ग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
राजन्राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥ ३५ ॥ (—)

---

and will be so stated again, it has been mentioned in this place, in accordance with the established usage. For, others style it Eka deśa vivarti.

When the word (expressive of the thing superimposed) happens to be distinct (from the one expressive of the thing super imposed upon), it is illustrated as follows —

*The tying post of the elephant of triumph, the embankment of stones against the ocean of adversity, the eastern mountain of the sun of the sword, the pleasure-cushion of wealth, the Mandara mountain in the sportive act of churning the nectar-ocean of battle,-your arm, o king, that inflicts widow hood on the wives of the heroic foes, looks splendid (35)*

---

प्रदीप :– मानसत्वादीनामार्थत्वम् । इदं हि तैरेकदेशविवर्तीत्युच्यते । द्वितीय यथा— आलानमिति । अत्र जयादेभिन्नशब्दवाच्यकुञ्जरत्वा (दा) रोपे सति भुजे आलानत्वा-

---

उ० :– परिवृत्तिसहत्वादिति भाव । श्लेषापनादकं रूपकमिति । बहुव्रीहि । उभयमप्यर्थालंकार इत्युक्तेश्चेत्यपि बोध्यम् । तैरेकदेशेति । यथा रणेऽन्तःपुरत्वारोपे तद्विशिष्टमनःस्य मङ्गलमङ्गतादारयोग्यतया तद्बलादेव नायिकात्वारोपस्तथा राजनि हंसत्वारोपे तद्विशिष्टस्यात करणमंगथायोग्यत्वेन तद्बलात् मानसे सरस्त्वारोपेणैकदेशविवर्तीति तैरुक्तमित्यर्थ । नव्यमते तु उक्तलक्षणरीत्या नैकदेशविवर्तित्वमिति बोध्यम् । आलानमिति । आलानम् गजबन्धनस्तम्भ । दृषदामिति दार्ढ्यार्थम् । करवाल खड्ग । चण्डमहा रवि । लीला सुखरनाप । उपधान शिरोनिधानतूलपट । संग्राम एवामृतसागर, लोकप्यात् । प्रकृष्टमथनमेव क्रीडा, सुखनिर्वाहत्वात् । वीरा ये वैरिण, तदन्येषामुपेक्षणीयत्वात् । (शार्दूलविक्रीडितं छन्दः ।) युज्यत इति । भुजाभिन्नजयाधारत्वसाधर्म्येणेति भाव । एवमग्रेऽपि बोध्यम् ।

---

प्रभा :– रितरयेन्यानाहणाह—इदं हीति । मूले इदमनीत्यन्वय । एकपदोपस्थितयोरन्त करणसरोविशेषयोरभेदाध्यवसायेऽपि नैकत्रन्तरारोप । तस्य भेदेन विषयनिर्देशाभेद-

अत्र जयादेर्भिन्नशब्दवाच्यस्य कुञ्जरत्वाद्यारोपे सति एव भुजस्य आलानत्वाद्यारोपो युज्यते ।

अलौकिकमहालोकप्रकाशितजगत्त्रयः ।
स्तूयते देव सद्वंशमुक्तारत्नं न कैर्भवान् ॥ ३६ ॥ (—)

---

Here the super-imposition of the idea of the tying post etc. on the arm becomes logically possible only on the super-imposition of the idea of an elephant etc. on triumph etc. which are denoted by separate words.

By whom are you, O king, not extolled,-you who have illumined the three worlds by your extraordinarily great halo and who are the pearl of the eminent race (by Śleṣa of a fine bamboo)? (36)

---

**प्रदीपः**—द्यारोपो युज्यते । इदमुदाहृतभेदद्वयं परम्परितमालारूपम् । अमालारूपमपि तद्‌ द्रष्टव्यम् । तत्र श्लिष्टवाचके यथा—**अलौकिकेति** । अत्र वंशोऽन्वयाय एव वंशो

---

**उ०ः**—एवं जये कुञ्जरत्वारोपे भुजरूपालानमत्राधिकं साधारणधर्मः । न चैवमन्योन्याश्रयः । कल्पनामयतया सकलसिद्धेः । कल्पनायाश्च स्वप्रतिभाऽधीनत्वात् । शिल्पिभिः परस्परावष्टम्भमात्राधीनस्थितिकाभिः शिलेष्टकादिभिर्गेहविशेषनिर्माणाच्चेति केचित् । वस्तुतो जयकुञ्जरयोरभेदप्रत्यय इच्छाधीन आहार्य एव । समर्थकारोपः सादृश्यमूलक एवेत्यत्र नाऽऽग्रह इत्यन्योन्याश्रयसम्भावनैव नेति दिक् । **अलौकिकेति** । अलौकिकस्य लोकेऽन्यत्रादृष्टस्य महस्य उत्सवस्याऽऽलोकः प्रदर्शनमेव द्योतः तेन प्रकाशितं जगत्त्रयं येन । अलौकिकमहालोको यश इति वा । सद्वंशो महत्कुलं तदेव सद्वेणुः मुक्तोत्पत्तिस्थानं तस्य मुक्तारत्नम् । अत्र

---

**प्रभा**ः—त्वात् । अन्यथा विषयनिगरणाभिप्रायामतिशयोक्तावपि तत्प्रसङ्गात् । तस्मादार्थ एवायमारोप इत्येकदेशविवर्तित्वमत्रापि युक्तमिति । स्वमते त्वभिधामूलव्यञ्जनोपस्थितस्य सर प्रभृतेर्मेन प्रकृतौ व्यञ्जनयैवारोपोऽन्यत्र तु शब्दत्वादार्थिक इति विशेषाच्छ्लेषात्मकमेवेदमिदम् । वेणुरित्यनन्तरं श्लिष्टमिति शेषः । नालंकारान्तरत्वमिति । न रूपकालङ्कारानन्तरत्वमित्यर्थः । अलंकारस्य चमत्कृतिजनकत्वात्तस्याश्च चमत्कारस्यकार्यैक्येनैक्यादित्यर्थः । परम्परितेति [illegible] सावयवोपलक्षणम् । न्यायसाम्यात् । ननु सापेक्षानेकरूपकेऽलङ्कारभेदाभावेऽपि निरपेक्षानेकरूपकमालायां कथं नालङ्कारभेद इति चेत्, मन्दम् । ज्ञानानेकत्वेऽपि चमत्कृतिविशेषजनने सापेक्षत्वादेकत्वम् । लोकेऽपि मत्स्यदनादीनामेकाऽऽहार्यत्वमुक्तहेतुकमेव

निरवधि च निराश्रयं च यस्य स्थितमनिवर्तितकौतुकप्रपञ्चम् ।*
प्रथम इह भवान्स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥ ३७॥
(Cited in वामन's काव्यालङ्कारसूत्रवृत्ति ५ १.३१)

इति च अमालारूपकमपि परम्परितं द्रष्टव्यम् ।

किसलयकरैर्लतानां करकमलैः कामिनां मनो जयति ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥ ३८ ॥
(Cited in रुद्रट's काव्यालङ्कार ८.५०)

इत्यादि रशनारूपकं न वैचित्र्यवदिति न लक्षितम् ।

---

Glory to you in the form of the tortoise, who have been the first here (i. e. in this world), who are the *bulb of the creeper of the fourteen worlds*, and whose presence infinite as it is and independent of a support, has never ceased provoking a maze of wonder! (37)

In such instances Paramparita Rūpaka could be found in a form other than Mālā.

A Rūpaka in the Raśanā form like

Cupid captivates the mind of lovers, with the creepers' sprouts—those *hands*, with the (maidens') *hands*—those *lotuses*, with the lotus-plants' *lotuses*—those *faces*, with the maidens' *faces*—those moons (38)

has not been defined, since it lacks in strikingness

---

प्रदीपः — वेणुरिति । भेदभाजि यथा — निरवधीति । अत्र लोकशब्दाद्भिन्नेन वल्लिपदेनारोप्यमाणमुक्तम् । परम्परिते चारोप्यारोपविषयानेकत्वेऽपि नालंकारानेकत्वम् । सम्भूयैव वैचित्र्यप्रकर्षाधायकत्वात् । एवं मालारशनयोरपि द्रष्टव्यम् । यद्यपि रशनारूपकमपि

---

उ०: — राज्ञि मुक्तात्वारोपे कुलतो वेणुत्वारोपो निमित्तम् । निरवधीति । ( विष्णुं प्रति भक्तस्योक्तिः ।) निरवधि बहुकालं, निराश्रयं अपराधीनम् । स्थितं स्थितिः । अनिवर्तितनृत्यादिप्रपञ्चम् । प्रथमः स्वत एव भूतः स्वत एव लब्धराज्यादिश्च । ( भूः भुवः स्वः महः जनः तपः सत्यम् अतलम् वितलम् सुतलम् तलातलम् महातलम् रसातलम् पातालम् एते चतुर्दशलोकाः । तद्रूपा या वल्लिः तस्याः कन्दो मूलम् । पुष्पिताग्रा छन्दः ।) लोके वल्लित्वारोपो राज्ञि कंदत्वारोपे निमित्तम् । स च राज्ञि कूर्मत्वारोपे हेतुः । ननु पूर्वश्लोके मुक्ता-

---

प्रभाः — प्रतिपदम् । रशनेति । पूर्वपूर्वमारोप्यमाणानामुत्तरत्रारोपविषयत्वमित्यर्थः । यथा किसलयेष्वारोप्यमाणानां कराणां कमलारोपविषयत्वं कमलानां च मुखारोपविषयत्वमिति । अत्र करकमलैरिति मुखेन्दुभिरिति च योषितामित्यनेनान्वेतीति

• (२२) प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः ।

## 7 APAHNUTI

That is 'Apahnuti, however, where after denying the thing under description, another is posited (instead)

**प्रदीपः**–रूपकम् सभवति। यथा—**किसलयेत्यादि**। तथापि न तादृशवैचित्र्यवदिति न पृथग्लक्षितम्। **प्रकृतमिति**। प्रकृतमुपमेयं निषिध्य असत्यतया व्यवस्थाप्य अन्यदप्रकृतमुप

**उ०**:–त्वारोपे प्रकाशितजगत्त्रयत्वारोपोऽपि निमित्तम्, अत्र कूर्मत्वारोपे निरवधिस्थितत्वारोपोऽपि निमित्तमितीदं द्वय अनेकारोपनिमित्तत्वान्मालापरपरितमेव युक्तमिति चेन्न । ज्योत्स्नाभस्मच्छुरणधवलेत्यादेरपि तथात्वापत्ते । नाना-परपरासत्वे एव मालापरपरितत्वस्य युक्तत्वाच्च । **किसलयेति** । लताना नलिनीना च स्त्रीत्वमार्थम् । करकमलैरिति मुखेंदुभिरिति च योषितामित्यनेनान्वेति । (आर्या छन्द ।) पूर्वपूर्वारोप्यमाणाना परत्रपरत्रारोपविषयत्वात् रसनारूपता । **न तादृशेति** । उपमेयोत्कर्षप्रतिपादनायोपमानीकृतानामुपमेयीकरणे तदुत्कर्षप्रतिपादनस्थगनात् । न चारोप्यभेदादविरोध । एकत्र काव्ये उपात्तत्वादिति दिक् । **इति रूपकम्** । **प्रकृतमिति** । निषिध्येत्यनेन रूपकव्युदास । तत्र प्रकृतनिषेधाभावात् । **उपमेयमिति** । इदमुपलक्षणम् । किंचिदपह्नुत्य कस्य चित् प्रदर्शनमपह्नुतिरित्येव लक्षणम् । अत एव 'केसेसु बलामोडिअ' इत्यादौ स्वय न प्रपलाय्य गतास्तद्वैरिणोऽपि तु तत पराभव संभाव्य तान्कदरा

**प्रभा**:–ह्येयम् । **न तादृशेति** । यथोपमाया भणितिरिवेत्यादौ राजसबन्धितया वर्णनीयाना भणित्यादीनामुपमानोपमेयतया अन्यथा प्रकृतोत्कर्षपर्यवसायितया वैचित्र्यहेतुस्तथा नेत्यर्थ । अथात्र शाब्दबोधप्रकार कथ्यते—तत्र प्राचा मते विषयिवाचकपदेन विषयवृत्तिगुणवती लक्षणया सारोपयोपस्थितस्याभेदेन विषयेऽन्वयान्मुख चन्द्र इत्यादौ चन्द्रवृत्तिगुणवदभिन्न मुखमित्यादिधी । मुखचन्द्र इति विशेषणसमासे तु मुखाभिन्न चन्द्रवृत्तिगुणवदिति साधारणगुणमात्रपुरस्कारेण तद्वति विषयपदस्य लक्षणेति। मुख्य मते त्वाह्लादक मुखमिति वाक्ये विशेषणसमासे तु मुखाभिन्नमाह्लादकमिति । कान्त्या मुख चन्द्र इत्यत्राभेदस्तृतीयार्थ । तस्य चन्द्रवृत्तिगुणे पदार्थैकदेशेऽन्वय । तेन कान्त्य भिन्नचन्द्रवृत्तिगुणवदभिन्न मुखमिति बोध । लक्षणा विनैवोपमानोपमेययो समान

उपमेयम् असत्य कृत्वोपमान सत्यतया यत् स्थाप्यते, सा तु अपह्नुति. ।

उदाहरणम्—

> अवाप्त. प्रागल्भ्य परिणतरुच· शैलतनये
> कलङ्को नैवाय विलसति शशाङ्कस्य वपुषि ।
> अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
> रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ ३९ ॥ (—)

---

*Gloss* —That is 'Apahnuti, however, where after describing the Upameya as unreal, the Upamāna is established as being real

To illustrate —

O daughter of the mountain, this *is not* at all a spot that shines, having attained prominence on the form of the Moon, whose brightness is at its height to my mind, *it is* Night, his beloved who, getting fatigued with dalliance is fast asleep, on his bosom, cool as it is with the stream of nectar that is oozing (from him) (39)

---

प्रदीपः – मान यत्साध्यते सत्यतया व्यवस्थाप्यते सा अपह्नुति । सा च शाब्दी आर्थी चेति द्विधा। तत्राद्या यथा—अवाप्त इति । अत्र कलङ्को नैवायमिति शाब्दोऽपह्नव । आर्थस्तु यथा

---

उ०ः—न त्यजतीत्यपह्नुतिर्व्यज्यते इति प्रकाशकारैश्चतुर्थे उक्तम् । एव च 'नाय सुधांशु किं तर्हि सुधांशु प्रेयसीमुखम्' इत्यादावपह्नुतिरेव। अत एव दण्डिनोक्तम् । 'अपह्नुतिरपह्नुत्य किंचिदन्यार्थसूचनम् । न पञ्चेषु स्मरस्तस्य सहस्र पत्रिणा यत ॥' इति। एतेन 'नाय सुधांशु ' इत्यादौ 'न विष विषमित्याहुर्ब्रह्मस्व विषमुच्यते' इत्यादौ च नापह्नुति किं तु दृढारोपरूपकमित्यपास्तम् । 'नेदं मुख चन्द्र ' इति प्रसिद्धापह्नुत्युदाहरणेऽपि मुखत्वनिषेधे चन्द्रारोपदार्ढ्यं-स्यैवादपरतया वक्तुं शक्यत्वेनानुभवसिद्धत्वेन चापह्नुतिमात्रस्योच्छेदापत्ते ।

---

प्रभाः – विभक्तिद्वयोरस्थितयोराहार्याभेदबोधवादिनां नव्यानां मते तु मुखं चन्द्र इत्यादौ चन्द्राभिन्नं मुखमिति बोध । मुखचन्द्र इति विशेषणसमासे तु मुखस्य विशेषणतया तदभेदस्य चन्द्रेऽन्वयापत्तिः मुखस्य समासस्थत्वेन न पुनश्चन्द्रस्य चन्द्राभेदस्य मुखे ऽन्वयसम्भव, तथापि [illegible] चन्द्रे मुखान्वय[illegible] स्यादेवेति । [illegible] विशेषणस्य [illegible] न तु [illegible] इति नियमे [illegible] वदन्ति । [illegible] मुखं चन्द्र इत्यादौ [illegible] बोध

इत्थं वा—

यत सखि कियदेतत्पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन्रागिलोके तथा हि ।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कित कालकूटम् ॥ ४० ॥ (—)

Or, as in the following —

Lo! How bitter, alas! is the enmity of Cupid, O friend, towards this love stricken person grown lean through separation from the beloved! Inasmuch as he has tipped each and every arrow with the venom *in the shape of* the bees glistening on the mango-blossoms in the garden (40)

**प्रदीप:** – भिर्भङ्गीभिराख्योच्यते। तत्क्वचित्कपटार्थशब्दोपादानात्। यथा—**यतेति**। अन छलशब्दबलान सभृङ्गाणि सहकाराणि अपि तु सकालकूटा शरा इति प्रतीयते। क्वचित्परिणामा-

**उ०:** – यदि तु निषेधपूर्वकारोपे चमत्कारविशेषस्यानुभवसिद्धत्वादलङ्कारान्तरत्वम् तर्हि प्रकृतेऽपि तुल्यम्। ननु निषिध्येत्यस्य निषेधार्थकत्वे 'शिखा धूमस्येय परिणमति रोमावलिवपु' इत्यादौ अपह्नुतिर्न स्यादत आह। **असत्यतयेति**। **साध्यते**। आहार्यनिश्चयविषयीक्रियते। तेन 'न पद्म मुखमेवेदम्' इत्यादौ नातिव्याप्ति। तथा विरहिजनवाक्ये 'नाय चन्द्रोऽपि [illegible] मार्तण्ड' इत्यादौ नैषा। तज्ज्ञानस्य दोषविशेषजन्यत्वेनानाहार्यत्वात्। 'नाय चन्द्रोऽरविंद वा मुख वेद मृगीदृशा' इत्यत्र च नैषा। निश्चयविषयत्वाभावात्। **शाब्दीति**। शब्देन यत्रासत्यत्वमाहेत्यर्थ। **अवाप्त इति**। (पूर्णचन्द्रे कलङ्क दृष्ट्वा पार्वतीं प्रति महेश्वरस्योक्ति।) परिणतश्च पूर्णस्य शशाङ्कस्य वपुषि प्रागल्भ्य प्रकटत्व प्राप्त इत्यन्वय। विगलतोऽमृतस्य स्यद प्रस्रवण तेन शीतेऽमुष्योरसीत्यन्वय। (शिखरिणी छन्द।) **यतेति**। (सखीं प्रति विरहिण्या उक्ति।) कामिलोके स्मरस्य कियद्वैरमित्यन्वय। सहकारेषु तत्पुष्पेषु। छलम् व्याजम्। (प्रतिविशिखम्

**प्रभा:** – इति चेदनाहु —चन्द्राभिन्नमुखादे कविप्रतिभाकल्पितत्वेन कान्त्यादिगुणाना तत्र प्रयोजकत्वात्कान्त्यादिप्रयोजक चन्द्राभिन्न मुखमिति बोध। प्रयोज्यत्वस्य तृतीयार्थत्वादिति। इति रूपकम् ॥ ६ ॥ **असत्यतयेति**। यथाश्रुते 'शिखा धूमस्येय परिणमति रोमावलिवपु' इत्यादावव्याप्ते। सदेहाद्यलङ्कारव्यावृत्त्यर्थं सत्यतयेति। अन्य

अत्र हि न सभृङ्गाणि सहकाराणि, अपि तु सफलकृताः शरा इति प्रतीतिः।

एवं वा—

> अमुष्मिँल्लावण्यामृतसरसि नूनं मृगदृशः
> स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः।
> यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
> शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥ ४१ ॥ (—)

अत्र न रोमावलिः, धूमशिखेयमिति प्रतिपत्तिः। एवमियं भङ्ग्यन्तरैरप्यूह्या।

---

For, here, the idea conveyed is "They are not mango-blossoms with the bees, but arrows tipped with venom."

Or as in the following —

Cupid as he was being burnt down by Śiva must have indeed plunged into the spacious region of the hips of the deer eyed one,-that lake filled with the nectar of beauty Inasmuch as, here a line of smoke indicating (पिशुन) the extinction of the embers of his limbs emerges, from the depth of her navel, *in the shape of* the hair line. (41)

Here the idea apprehended is —This is not a hair line; it is a line of smoke On similar lines, this (Apahnuti) could be conceived in other modes besides.

---

प्रदीपः—दिङ्मात्रम्। यथा—अमुष्मिन्निति। अत्र धूमशिखा रोमावलिरिति परिणमतीति परिणामशब्दार्थवशादियं रोमावलिर्न किं तु धूमशिखेति प्रतीयते। एवं

---

उ०:—प्रतिमानम्।) उद्भिन्नम् प्रकाशितम्। (कालकूटम् तीक्ष्णविषम्। मालिनी छन्दः।) अत्र छलेति। सपत्रे व्याजतानिरासेन मूर्तशरत्वप्रतिपादनमिति भावः। (अमुष्मिन्निति। वेश्यामुद्दिश्य मनूद्रे कामिनं प्रति दास्या उक्तिः।) अमुष्मिन्मृगदृशः पृथुजघनभागे लावण्यामृतसरसि शर्वप्लुष्टः शिवदग्धः स्मरो नूनं निपतित इत्यन्वयः। प्रशमपिशुना शान्तिसूचिका। परिणमती प्रादुर्भवति। तथाङ्गारस्य उत्प्रेक्षितो धूमशिखा भवतीति तात्पर्यम्। (शिरा-

---

प्रभा:—लावण्य [illegible] शब्दोऽनुपुण्य। [illegible] च [illegible] पर्यारे [illegible] 'न पुनरुक्तभेदे' [illegible] निषेधो न तु [illegible]। तथा [illegible] नैव [illegible]। एवं तु—'अन्य अन-

## ( २३ ) श्लेषः स वाक्ये एकस्मिन्यत्रानेकार्थता भवेत् ॥ १० ॥

एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थः, स श्लेषः।

उदाहरणम्—

उदयमयते, दिङ्मालिन्यं निराकुरुतेतरां
नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः।
रचयतितरां स्वैराचारप्रवर्तनकर्तनं
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥ ४२ ॥ (—)

## 8 ŚLEṢA

That is 'Śleṣa' where, in one sentence, is present the capacity to yield senses more than one.

*Gloss*:—That is Śleṣa, where words which (normally) convey one sense only, possess senses more than one.

To illustrate —

The sun rises, effectively dispels the gloom of the quarters, breaks the seal of sleep, sets the activities afoot, necessarily brings about the cessation of proclivities to wanton conduct, and shines refulgent, a mass of gleaming lustre. How wonderful!

(or, in the alternative,)

---

**प्रदीपः**—भङ्गयन्तरैरप्यूह्यम्। यथा 'इद ते केनोक्त' इत्यादौ। श्लेष इति। परिवृत्तिसहानामेव शब्दानामेकवृन्तगतफलद्वयन्यायेन यत्रानेकार्थप्रतिपादकता सोऽर्थ-

---

**उ०**:—रिणी छंदः।) अत्र निषिध्येति क्त्वाप्रत्ययार्थोऽपि लक्षणेऽविवक्षितः। तेन 'मंथानभूमिधरमूलशिलासहस्रसंघट्टजव्रणकिणः स्फुरतींदुमध्ये। छाया मृगः शशक इत्यतिपामरोक्तिस्तेषां कथंचिदपि तत्र हि न प्रसक्तिः ॥' इत्यादावारोपपूर्वकापह्नवे नाव्याप्तिः। अपह्नवस्तत्र पामरवचनोपन्यासादर्थसिद्धः। वाक्यभेदश्चात्र। बत सखि, अमुष्मिन्नित्यनयोरेकवाक्यतेति बोध्यम्। 'प्रजल्पन्मत्पदे लग्नः कांतः किं न हि नूपुरः' इत्यादावपीयमेव। व्याजोक्तिरित्यन्ये। क्वचित् भङ्ग्या व्यञ्जनया निषेधबोधनम्। यथा 'अंकं केऽपि शशंकिरे' इत्यादौ। इत्यपह्नुतिः। तत्र शब्दश्लेषाद्भेद

---

**प्रभाः**—ह्नुतिरपह्नुत्य किंचिदन्यार्थसूचनम्। न पञ्चेषु स्मरस्तस्य सहस्रं पत्रिणामिति' इत्यपह्नुतिलक्षणं सोदाहरणं ब्रुवन्नुपमानोपमेयनियममपह्नुतौ नाङ्गीचक्रे। इत्यपह्नुतिः ॥ ७ ॥

अत्राभिधाया अनियन्त्रणात् द्वावप्यर्कभूपौ वाच्यौ ।

## (२४) परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः

(King) Vibhākara prospers, effectively dispels the sullenness of the quarters (i. e. of the people in them), brings languid looks to an end, promotes (pious) deeds, resolutely puts a stop to proclivities to wanton conduct, and shines splendid, a mass of gleaming splendour. How wonderful! (42)

Here, the sun and the king are both *expressed* due to the non-restriction of the expressive power (of the words).

### 9 SAMĀSOKTI.

'Samāsokti' consists in the suggestion (Ukti) of a thing other (than the matter under description), through distinctive attributes used paronomastically.

---

प्रदीपः — श्लेष । यथा—उदयमिति । अत्र विभाकरनामा राजविशेषो मार्तण्डश्चेत्युभयार्थानि 'उदयमयते' इत्यादीनि वाक्यानि । न चात्र द्वितीयार्थस्य ध्वनिरेवेति शङ्कनीयम् । संयोगादीनामभावेनाभिधाया अनियन्त्रणाद् द्वयोरपि वाच्यत्वात् । परोक्तिरिति ।

---

उ० : — दर्शयति—परिवृत्तिसहानामेवेति । उदयमिति । उदयं उदयाचलं समृद्धिं च । दिङ्मालिन्यं तमसाऽपायेन च । निद्राजन्या मुद्रा चक्षुषः, निद्रेव मुद्रा निरुत्साहता च । क्रिया ग्रामगमनादि विहिता क्रियाश्च । स्वैराचारोऽभिसारादि स्वेच्छया वेदनिषिद्धाचरणं च । (हरिणी छन्दः ।) विभाकरनामेति । एवं च तद्देशे परिवृत्त्यसहत्वेन शब्दश्लेषेऽपि उदयमित्यादिषु अर्थश्लेषादुदाहरणत्वमित्याह—उदयमयत इत्यादीनीति । द्वयोरपि वाच्यत्वादिति । प्रकृतत्वेनेत्यादि । उभयोः प्रकृतत्वेऽप्रकृतत्वे वा ध्वनित्वाभावादिति भावः । एतेनार्थश्लेषे विशेषणानामेव श्लिष्टत्वं न तु विशेष्याणामपीत्यपास्तम् । केचित्तु 'विभाकरपदं शक्त्या सूर्यं, नृपं योगेन बोधयतीत्येतदंशेऽप्यर्थश्लेषः, परिवृत्तिसहत्वात्' इत्याहुः । यदि त्वत्र राजा प्रकृतो रविरप्रकृतस्तदा द्वितीयार्थस्य शब्दशक्तिमूलध्वनिविषयत्वं बोध्यम् । इति श्लेषः । समास-

प्रभा : — श्लेषः स इति । अत्रार्थश्लेषे [illegible] मर—परिगृह्णाति । [illegible]

प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यात् (न तु विशेष्यस्य सामर्थ्यादपि) यत् अप्रकृतस्यार्थस्याभिधानम्, सा (समासेन संक्षेपेणार्थद्वयकथनात्) समासोक्तिः। उदाहरणम्—

लहिऊण तुज्झ बाहुप्फंस जीए स को वि उल्लासो।
जअलच्छी तुह विरहे ण हुज्जला दुब्बला णं सा ॥ ४३ ॥ (—)

*Gloss* —Where a matter other than the one under description comes to be conveyed by a sentence that states the matter under description, in virtue of the attributes used paronomastically, (not in virtue of the significance of the substrate of the attributes, though,) there results the 'Samāsokti,' so called owing to two ideas being conveyed (by it), by Samāsa i e in brief To illustrate —

The Glory-of-Triumph, that used to be in some indescribable ecstasy, on feeling the touch of your arm, has surely ceased to be gay, on (her) separation from you, forsooth, she has grown so feeble! (43)

**प्रदीपः**—परमप्रकृतम्। भेदकानि विशेषणानि। श्लिष्टान्यनेकार्थानि। तेन प्रकृतार्थविशेषणवाचिमात्रशब्दस्य श्लेषमहिम्ना यत्र प्रकृतार्थकेन वाक्येनाप्रकृतार्थवचनं सा समासोक्तिः संक्षेपेणार्थद्वयोक्तिः। मात्रग्रहणाद्यत्र विशेष्यपदस्यापि श्लिष्टत्वं तद्व्युदासः। तस्य श्लेषत्वात्। उदाहरणम्—**लहिऊणेति।**

**उ०ः**—**कृतमिति।** अप्रकृतव्यवहार इत्यर्थः। यत्र त्वप्रकृतेन प्रकृताभिधानं तत्राप्रस्तुतप्रशंसेति भावः। **अनेकार्थानीति।** प्रकृताप्रकृतोभयानुगतानेकार्थानीत्यर्थः। उभयान्वितेति तु न युक्तम्। अप्रकृतस्यानुपादानात्। **अप्रकृतार्थवचनम्।** अप्रकृतगतव्यवहाररूपार्थस्य वचनं प्रकृतवृत्तान्ते आरोपो व्यञ्जनया प्रतिपादनं इत्यर्थः। एवं च समासोक्तौ प्रकृतव्यवहारेऽप्रकृतव्यवहारारोपः। रूपके तु विशेष्ये प्रकृतेऽप्रकृतरूपारोपः। अत एवैकदेशविवर्तिरूपकविषये न समासोक्तिः। **संक्षेपेण** एकेनैव शब्देन। **तस्य श्लेषत्वादिति।** उपमाध्वनित्वाद्वेत्यपि बोध्यम्। **लहिऊणेति।** 'लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः। जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा'। (गाथा छन्दः।) **परमप्रकृतार्थकत्वमिति।** केवलं तस्य वाचकत्वं नास्ति, विशेषणानां तु उभयगतबाहुस्पर्शप्राप्त्यादिबोधकत्वमित्यर्थः। एवं च एहि

अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्ति।

Here, only the word जयलक्ष्मी (Glory-of-Triumph) does not express the sense of 'the beloved

प्रदीपः–अत्र विशेष्यवाचिनो जयलक्ष्मीशब्दस्य परमप्रकृतार्थकत्वं नास्ति। श्लिष्टत्व

उ०:–ऊर्णेत्यादिपदबोध्याना अभेदारोपात् व्यञ्जनया कान्ताव्यवहाराभेदेन प्रतीयमानस्य जयलक्ष्मीव्यवहारस्य जयलक्ष्मीवृत्तान्ततया प्रतीयमानस्य चमत्कारकतेति भाव। अत एवोक्तं कुवलयानन्दकृतापि 'समासोक्तावप्रस्तुतव्यवहारसमारोपश्चारुताहेतु' इति। अयं भाव। 'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमा' इत्यादौ श्लिष्टविशेषणप्रतीतप्रस्तुताऽप्रस्तुतवृत्तान्तयो श्लेषमित्तिकाभेदाध्यवसायेनाभेदप्रतीतिविषययो प्रस्तुतचन्द्रादिवृत्तिता। तत्र तयोर्वृत्तान्तयो परस्परं विशेषणविशेष्यभावे कामचारेऽपि प्रस्तुतवृत्तान्तो विशेष्य। तद्बोधकत्वेऽप्यप्रस्तुतस्तु अभेदेन तद्विशेषणम्। तत्र यद्यपि प्रस्तुतस्य स्वासाधारणधर्मेण चन्द्रेऽन्वययोग्यताऽस्ति, तथापि अप्रस्तुताभेदमापन्नस्य न साऽस्तीति तद्रूपावच्छिन्नस्याप्रवृत्ते धर्मिण्यारोप। आरोपोऽत्र व्यञ्जनया बोध। न चाप्रस्तुताभिन्नत्वेऽपि विशेष्यताया प्रस्तुत एव सत्त्वेनात्वेनान्वययोग्यतेति वाच्यम्। विशिष्टस्यान्वयायोग्यत्वात्। न च रूपकस्य समासोक्तावपि प्रस्तुतचन्द्रेऽप्रस्तुतजाररूपसमारोपश्चारुताहेतुरस्त्विति वाच्यम्। तद्वाचकपदसमभिव्याहाराभावेन तस्यासम्भवात्। न चाऽऽक्षिप्तजारादिनाक्षिप्तरूपकमस्तु। 'निरीक्ष्य विद्युन्नयनैः पयोद' इत्यादौ पयोदे दृष्टपुरुषविशेषाक्षेपकनिरीक्षणपदाक्षेपकाभावात्। न च विशेषणसाम्यप्रतीताप्रकृतजारवृत्तान्त एव चन्द्रवृत्तितया प्रतीयमान आक्षेपकोऽस्तु। अप्रस्तुतस्य प्रस्तुते विशेषणतयाऽप्राधान्येनानाक्षेपकत्वात्। स्फटिके जपाकुसुमनिष्ठलौहित्यस्यारोपेऽपि जपाकुसुमत्वानारोपश्च। एतेनाऽऽक्षेपाऽ-

प्रभा:–व्यवहारस्यारोपेऽपि इति भाव। ऊर्णेति। 'स्पृष्ट्वा तव यातुस्पर्शं यस्या स कोऽप्युदार। जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा॥' औपम्येति। आदिपदेन साधारणविशेषणसारूप्यसङ्ग्रह। तत्र साधारणविशेषणवशाद्यथा—'विलिखति कुचावुपर्यन्तं करोति कचग्रह लिखति ललिते वक्त्रे पत्रावलीमसमाम्। क्षितिप खदिरं श्रोणीबिम्बाद्विकर्षति चांशुकं मरुभुवि हठात्पर्यन्तीनां तवा-

उ०ः–सभनेऽपि परनायिकामुखचुम्बनस्य श्लेषमर्यादया व्यजनया वा प्रतीतस्य प्रकृते धर्मिण्यारोप्यमाणस्य जारासाधारणधर्मत्वेन प्रकृतधर्मिणि जारत्वव्य जकता सुवचेत्यपरतम् । किं चैव सति वाच्यार्थबोधोत्तर तद्व्यग्यप्रतीति । सापि न केवलव्यवहारमात्रज्ञानात् । अपि तु तादृशनायकनायिकासबधवि-शिष्टव्यवहारज्ञानात् । एव च वाच्यार्थबोधकालिकचमत्कारस्यापह्नोतुमशक्य त्वेनालकारत्वस्य दुरपह्नवत्वात् । विपरीतनायकत्वव्यजनस्य समासोक्त्यत र्भाव वदतो ध्वनित्वस्य दुर्वारत्वाच्च । तद्व्यग्यस्याधिकचमत्कारकारित्वेन प्रधानत्वात् । न च श्लिष्टशब्दोपस्थापितयोर्वृत्तातयो परस्परमभेदेनान्वये मा-नाभाव । सहृदयहृदयस्यैव प्रमाणत्वात् । अत एव 'आगत्य संप्रति वियोगविसस्थुलाङ्गीम्' इत्यत्रार्थशक्तिमूलो नायकनायिकावृत्तातो वाच्यरविकमलिनीवृत्तात्ताध्यारोपेणैव स्थित इति प्रदीपकृत । प्राचीनानुभव-मपलप्यापि यदि एकत्र द्वयमिति रीत्या प्रस्तुताप्रस्तुतवृत्तातयोर्विशेष्येणैवा न्वय स्वीक्रियते, एवमपि वाच्यार्थबोधकाले प्रस्तुते धर्मिणि नाप्रस्तुतजारत्वा रोप प्रत्याशा । तथाहि । यद्यप्यनयोर्भिन्नपदोपात्तविशेषणयोरिव विशेष्येणैव साक्षादन्वया समप्राधान्यमस्तीति स्वीक्रियते, तथाप्यप्रस्तुतवृत्तातान्वयानुरोधान्न प्रस्तुतेऽप्रस्तुतरूपसमारोप । प्रस्तुतेऽप्रस्तुतवृत्तातारोपेणैव सिद्धे । अप्रस्तुतरू-पसमारोपेऽपि प्रस्तुतवृत्तातान्वयायोग्यतायास्तदवस्थत्वाच्च । नन्वेव सति विशेष-णसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिति प्राचीनलक्षणाऽसगति । अप्रस्तुत-धर्मिव्यजनस्य त्वयानपेक्षणादिति चेत् न । स्वरूपतोऽप्रस्तुतवृत्तातारोपस्य न चमत्कारित्वम् । किं तु अप्रस्तुतकामुकादिसबधित्वेनावगम्यमानस्यैव तस्य आरोप । अत श्लेषादिमहिम्ना विशेषणपदै स्वरूपत समर्पितेन चुम्बनादिना

प्रभा.–रिमृगीदृशाम् ॥' अत्र कुचविरेरजनकचमहादिविशेषणाना शब्दश्लेष विना स्वत एव साधारण्यान्नायकवृत्तान्तस्फूर्तिरिति समासोक्ति । औपम्यगर्भविशेषणाद्यथा—'दन्त प्रभापुष्पचिता पाणिपल्लवशोभिनी । केशपाशालिवृन्देन सुवेषा हरिणेक्षणा ॥' अत्र नायिकाविशेषणत्वस्य दन्तप्रभा पुष्पाणीवेत्याद्युपमितसमासेन सिद्धौ दन्तप्रभा-सदृशै पुष्पैरिति समासान्तराश्रयणेन लतावृत्तान्तस्य समासोक्ति । सारूप्या यथा—'पुरा यत्र स्रोत –' इत्युत्तररामचरितनाटके प्रसन्नात्कालान्तरे पुनर्दण्डक गत-

उ० : —ऐन्द्री चन्द्र इत्येतद्गतस्त्रीलिंगपुल्लिंगसहकृतेन तत्सन्निधिनि कामुकादौ अभिव्यक्ते पुनस्तदीयत्वानुसन्धानात् । विशेषणसाम्येन वाच्योपस्कारकस्याप्रस्तुतव्यञ्जनस्याऽऽक्षेपणात् । अप्रस्तुतस्येत्यस्याप्रस्तुतव्यवहारस्येत्यर्थो वा । एतेन वदनचुम्बनस्य पुत्रादिसाधारण्यात्कथं कामुकाभिव्यञ्जकत्वम् । किं च 'अहर्मुखं चुम्बति भानुर्बिम्बम्' इत्यत्रापि नायकाद्यभिव्यक्त्यापत्तिरित्यपास्तम् । यत्तु चन्द्रैन्द्रीपदगतलिंगाभ्यामभिव्यक्तनायकयोः स्वव्यञ्जकपदोपस्थापिताभ्यां भेदेनैवान्वय उचितः । समानपदोपात्तत्वप्रत्यासत्तेरिति । तन्न । एवं हि वदनव्यवहारावच्छेदकत्वं तयोः स्वीक्रियते न वा । आद्ये एकस्यार्थस्योभयत्रान्वयोऽव्युत्पत्तिग्रस्तः । अन्त्ये रसाननुगुणत्वम् । यदपि ऐन्द्र्यादौ नायिकात्वाभाने केवलं व्यवहारावच्छेदकत्वमात्रस्वीकारे बाधः । नायिकात्वानालीढकेवलैन्द्रीमुखचुम्बनरूपस्य व्यवहारस्य नायकासम्बन्धित्वात् । न हि दिक्तादात्म्यं विना नायिकया पृथङ्मुखं विशेषयितुं सामर्थ्यमस्तीति । तदपि न । मुखशब्दश्लेषसामर्थ्येनैन्द्रीमुखमित्यस्यैवोपशमोपेण केवलमुखचुम्बनस्योपस्थितेः । तदेतदुक्तं कुवलयानन्दे—'श्लेषादिमहिम्ना स्वरूपतः समर्पितेन वदनचुम्बनादिना' इति । न ह्यैन्द्रीशब्दार्थेन दिग्रूपेण वदनरूपमुखपदार्थस्यान्वयो वक्तुं शक्यः सहृदयैः । नन्वेतादृशक्लिष्टकल्पनापेक्षया विशेषणसाम्यमहिम्ना प्रतीतोऽप्रकृतवाक्यार्थः स्त्रीलिंगपुल्लिंगाभ्यामभिव्यक्तनायकाद्यभिन्नचन्द्रादिघटितप्रकृतवाक्यार्थे स्वान्वयतादात्म्यापन्नतदन्वयेनोऽनतिष्ठते इत्येव कल्पयितुं युक्तम् । एवं च नायिकाऽभिन्नेन्द्रदिशाम्बधिवदनाभिन्नप्रारम्भनर्मकचुम्बनरूपसम्बन्धाश्रयो नायकाभिन्नश्चन्द्र इति बोध इति चेन्न । एवं हि ऐन्द्र्यां नायिकाभेदप्रतीतौ मुखचुम्बनादौ वदनचुम्बनाद्यभेदप्रतीतावपि वदनचुम्बने साक्षान्नायिकासम्बन्धाप्रतीत्या रसोद्बोधानापत्तेः । न च

प्रभा : —वनो रामस्येयमुक्तिः । अत्र वनसारूप्यात्कुटुम्बिषु धनधान्यादिसमृद्ध्यसमृद्धिविपर्यासं प्राप्तस्य ग्रामनगरादिवृत्तान्तस्य प्रतीतेः समासोक्तिः । इयं चाप्पय्यदीक्षितैरेवोक्ता नान्यैरिति संक्षेपः । अस्यां च समासोक्तौ प्रकृतवृत्तान्तोऽभिधयैव प्रतीयते अप्रस्तुतवृत्तान्तस्तु व्यञ्जनया । प्रकरणेनाभिधाया नियमनात् । तस्य च तादात्म्येन प्रतीतावसंबद्धार्थकत्वप्रसङ्गाभावम् अरानुपपत्तेश्च । प्रकृते समारोपो न त्वप्रकृतनायकादौ प्रकृते राजादावारोपः । प्रमाणाभावात् । आरोपद्वयकल्पनगौरवाच्चेति श्रेयः ।

**प्रदीपः**—चोपलक्षणम् । औपम्यगर्भादीनामपि संभवात् । यथा 'विलसति कुचौ' इत्यादाविति प्राचीनः पन्थाः । अत्र नव्या—परोक्तिरिति परशब्देन सामान्यतः प्रकृतमप्रकृतं वा विवक्षितम् । तेन यत्राप्राकरणिकविशेषणसामर्थ्यात्प्राकरणिकमुच्यते तदपि संगृह्यते । तत्रापि वैचित्र्याविशेषात् अन्यत्रानन्तर्भावाच्च । यथा 'संप्राप्ते सकलाङ्ग'—

**उ० :**—व्यंजनया तत्प्रतीतिरस्त्येव, यस्मिन् यदभेदः तत्संबंधिनि तत्संबंध्यभेद इति न्यायेन वा मानसी तत्प्रतीतिरतत एव चमत्कार इति वाच्यम्। तदपेक्षया साक्षाच्चमत्कारोपपादकवाच्यार्थबोधव्युत्पादनस्यैवौचित्यात् । ननु व्यंजनयाऽप्रकृतार्थबोधः । शक्तेः प्रकरणादिना नियंत्रणात् । ततो व्यंजनामाहात्म्यादेव प्रकृतवाक्यार्थतादात्म्येनावतिष्ठत इति चेत् । व्यांजनिकोऽप्रकृतार्थबोधो नायिकाद्यविशेषितो विशेषितो वा । नाद्यः । रसाननुगुणत्वात् । अंत्ये स्वपदोपस्थाप्यलिंगाभ्यां नायिकाद्यभेदबोधो व्यर्थोऽसंभवी च । नायिकाविशेषणकव्यवहारबोधनेन कृतार्थत्वात् । अपि च तथा सति जारकर्तृकसानुरागपरनायिकामुखचुंबनाभिन्नप्राचीप्रारंभसंयोगाश्रयो जाराभिन्नश्चंद्र इति बोधकदर्थनमेव स्यात् । तस्मार्द्व्यंजनया शक्त्या वोपस्थिताप्रस्तुतवृत्तांतेन व्यंजनयोपस्थितनायिकादिसंबंधित्वेन गृहीतेनाभेदमापन्नप्रस्तुतवृत्तांतारोपः प्रकृतविशेष्ये नव्यमते श्लेषस्थलेऽप्रकृतोपस्थितेः शक्त्यैव सत्त्वेन तन्मते शक्त्यैवाप्रकृतार्थोपस्थितिः, प्राचां तु व्यंजनयेत्येतावान्विशेषः । एवं च वाच्यार्थबोधोत्तरं यदि चंद्रादौ नायकत्वादिप्रतीतिरपि सहृदयानुभवसाक्षिकी तदास्त्वित्युपपादितमेव प्राक् । अत एव समासोक्तौ साधारणविशेषणबलादेवोपमानप्रतीतौ तदुपादानवैयर्थ्यमिति शेषे वक्ष्यति प्रकाशकृत् । अनेन तत्सादृश्यप्रतीतिर्व्यंजनया न तु तदभेदप्रतीतिरिति लभ्यते । प्रस्तुतप्राचीवृत्तांते आरोप्यमाणाप्रस्तुतखडितनायिकाविशेषवृत्तांतसमर्थनाय तस्यावश्यकत्वाच्च । एवं च सानुरागपरनायिकामुखचुंबनाभिन्न-

**प्रभाः**—अप्रस्तुतस्य नायिकादेर्वृत्तान्तविशेषणत्वमवश्य वाच्यम् । केवलवृत्तान्तस्य चारुत्वाभावात् । एवं चावश्यं व्यञ्जनयोपस्थितस्याभेदेन प्रकृतविशेषणत्वमेव युक्त न तु वृत्तान्ते भेदेन । एवमप्रकृतवृत्तान्तस्यापि प्रकृतवृत्तान्त एव भेदेनारोप इति युक्तम् । वृत्तान्तद्वयस्यैकत्र द्वयमिति रीत्या बोधस्याननुभवपराहतत्वात् । तस्मादप्रकृतवृत्तान्ताभिन्नतयाध्यवसितः प्रकृतवृत्तान्त- स्वविशेष्ये तद्विशेष्याभिन्नतयावगते भासत

( २५ ) निदर्शना।

**अभवन् वस्तुसंबन्ध उपमापरिकल्पकः ॥ ११ ॥**

निदर्शन दृष्टान्तकरणम् । उदाहरणम्—

### 10 NIDARŚANĀ

'Nidarśana' consists in a connection between objects which is unlikely *and (hence) tends to produce an idea of similarity (between them)*

*Gloss* —Nidarśana [illegible] giving an illustration (accounts for the name) To illustrate —

---

प्रदीप –इत्यादि। अत्र ह्यप्रकृतस्य भृङ्गस्य विशेषणसाम्यात् प्रकृतस्यासत्पुरुषस्य प्रतीतिरित्याहु । तन्न युक्तम् । अप्रस्तुतप्रशंसयैव तत्संग्रहात् । येनास्यभ्युदितेन इतिवत् । वृत्तौ चाप्रस्तुतप्रशंसाप्रकरणे तत्र समारोपितपद श्लिष्टविशेषणयमात्रपरम् । निदर्शनेति ।

---

उ० –प्राचीप्रारम्भयोगाश्रयपर्यन्त इत्येन बोध । समासोक्तिर्गुणीभूतव्यङ्ग्येति व्यवहारस्तु प्रकृतव्यवहारेऽप्रकृतव्यवहाराभेदस्य व्यञ्जनया प्रतीतेर्निर्बाध एवेति दिक् । **औपम्यगर्भादीनामिति** । आदिना साधारणविशेषणसङ्ग्रह । 'अध्वेन पातभीया सचरता मया विषमविषयेषु । इदमिह मया गृहीता हिमगिरिशृङ्गादुपागता गंगा ॥' अत्र गिरिशृङ्गप्रभववेणुयष्टिव्यवहाराभिन्नव्यवहारवती गङ्गेति प्रतीयते । **इति समासोक्तिः** । **निदर्शनेति** । अभवन् प्रतीतिविषयतामप्रभमान वस्तुनोर्वाक्यार्थयो पदार्थयोर्वा सम्बन्धोऽन्वय । अत एव प्रतीतिपर्यवसानाभावाद [illegible] दृष्टान्ततो भेद । परस्परनिरपेक्षयोर्वाक्यार्थयोर्दृष्टान्तालङ्कार, इय पुन सापेक्षयोरिति भेद इत्यन्ये । तर्हि वाक्यमनन्वितं स्यादत आह । **उपमापरिकल्पक इति** । औपम्यमाक्षिप्य पर्यवस्यतीत्यर्थ । **केति** । ( रघुकाव्ये प्रथमसर्गे स्वाहङ्कार परिहर्तुं कालिदासस्योक्ति । ) उडुपे चर्मावनद्धवशपात्रे । मोहात् दुस्तर सागरमुडुपेन तितीर्षुरस्मीत्यर्थ । अत्र स्वमतिसूर्यप्रभववंशयोरत्यन्तानुरूपत्व बोध्यते । तदनंतरमुडुपकरणकसागरतरणेच्छाया अप्राप्तताया कथनेन तादृशमतिकरणकवर्णनेच्छाया पूर्वार्धत आक्षेप । तयोश्च परस्परानन्व

---

प्रभा –हरी तु नत्वा । एवं च प्रकृतोदाहरण नायकीयबाहुरूपस्तम्भप्रयुक्तोऽभ्युदयवती अपत्यमीरित्याकारो बोध । द्वितीये तु रामनामकबाहुरूपस्तम्भप्रयुक्तोऽभ्युदयवती जय लक्ष्मीरित्येताी संक्षेप । अत्र च बाहुस्तम्भौ सामान्य विशेषणं दलम इति

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ ४४ ॥ ( रघुवंश १ २ )

अत्र, उडुपेन सागरतरणमिव मन्मत्या सूर्यवंशवर्णनमित्युपमायां पर्यवस्यति ।

---

What a far cry it is from the sun born race to my intelligence of petty sweep! I have, out of delusion, set about crossing the sea, hard to cross, in a canoe!

Here, there eventually results an idea of similarity, viz. that the description of the solar race with the help of my intellect would be tantamount to crossing the sea in a canoe

---

**प्रदीपः**—यथाश्रुतमात्रेणासंभवी वस्तुसंबन्धो यत्रोपमां कल्पयित्वा पर्यवस्यति सैका निदर्शना । दृष्टान्तकरणात्मकनिदर्शनरूपत्वात् । सा च द्विधा—अवान्तरवाक्यभेदे तदभेदे च । तयोराद्या यथा—**क्व सूर्येति** । अत्राह सागरं तितीर्षुरस्मीत्यस्यासंबद्धार्थस्तया उडुपेन सागरतरणवन्मदीयमत्या सूर्यवंशवर्णनमसंभावितमित्युपमाया कल्पनम् ।"

---

**उ०**:—अस्य स्पष्टत्वादौपम्यमादाय पर्यवसानम् । तत्फलितमाह—**उडुपेन सागरतरणवदिति** । **कल्पनम्** व्यञ्जनम् । प्रतीयमानाभेदरक्षणायेति भावः । एवं चात्राऽऽर्थी निदर्शना । 'त्वत्पादनखरत्नानि यो रञ्जयति यावकैः । इन्दुं चन्दनलेपेन पाण्डुरीकुरुते हि सः ॥' इत्यादौ तु शाब्दी बोध्या । वाक्यार्थगा चोभयत्रापि । एवं 'त्वत्पादनखरत्नानां यदलक्तकमार्जनम् । इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥' इत्यत्राप्येवैव । न चेदं वाक्यार्थरूपकम् । लोकप्रसिद्धोपमानत्वोपमेयत्ववतोरभेदस्यैव रूपकत्वात् । किं च तत्र सादृश्यलक्षणामूलाऽभेदप्रतीतिः । इह तु प्रतीयमानाभेदानुपपत्त्या तत्त्वकल्पनेति भेदात् । 'नितरां निर्गते नीरे सेतुमेषा चिकीर्षति' इत्यादौ किंचिद्दाक्षिण्यसमागततत्कालोपेक्षितप्रतिनिवृत्तनायिकान्तरासक्तनायकानयनार्थं सखीं प्रेषयितुकामां नायिकामुद्दिश्य सख्या वचनेऽपि आर्थी निदर्शनैव । एतेनात्र ललितालंकारः वर्णनीयवाक्यार्थमनुक्त्वैव वर्ण्ये धर्मिणि तत्स्वरूपस्य कस्यचिदप्रस्तु

---

प्रभा :—श्लिष्ट इति ज्ञेयम् । विशेषणसामर्थ्यान्निन्दागमकविशेषणसामर्थ्यात् । समासोक्तिपदमिति । तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः श्लेषः समासोक्तिः सादृश्यं चेति ग्रन्थे वक्ष्यमाणमित्यर्थः । इति समासोक्तिः ॥ **वस्तुसंबन्ध इति** । वस्तुनोः पूर्वार्धापरार्धयोरित्यर्थः । संबन्धोऽन्वयः । अत्रोदाहरणयोः प्रथमे उडुपेन सागरतरणरूप

यथा वा—

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्॥ ४५॥ (—)

( शिशुपालवध ४.२० )

अत्र, कथमन्यस्य लीलामन्यो वहतीति तत्सदृशीमित्युपमायां पर्यवसानम्।

---

*Or as in,—*

With their upward rays stretched out like ropes, when the sun rises (on it), and the moon sets, the mountain *assumes the grace* of a huge elephant decked (परिवारित) with two bells dangling (down the two sides) (45)

How could the grace belonging to one be assumed by another ? There fore, it must be (only) similar to that of the other.–Thus there results eventually (an idea of) similarity here

---

प्रदीप :—अस्या यथा—उदयतीति। अत्रान्यलीलोद्वहनस्यान्येनासम्भवाद्वारणेन्द्रलीलासदृशीं लीलामित्युपमाया पर्यवसानम्। एव च 'पूर्वोदाहरणे वाक्यार्थ उपमाक्षेपक [illegible] तु पदार्थमात्रम्' इति व्याख्यानमनादेयम्। अत्रापि लीलापदार्थमात्रस्यानाक्षेपकत्वात्। एषा मालारूपापि दृश्यते।

---

उ० :—तत्राक्यार्थस्य वर्णनरूप इति अपास्तम्। नहि प्रस्तुताप्रस्तुतदृष्टांतयो शब्दोपात्तयोरेव निदर्शनेत्यत्र मानमस्ति। न चैवमतिशयोक्तिविषयस्याप्यार्थरूपकेणापहार स्यादिति वाच्यम्। विषयतावच्छेदकरूपेण भाते विषये विषयितावच्छेदकावच्छिन्नविषय्यभेदस्य रूपकशरीरस्य विषयितावच्छेदकरूपेण भासमानविषयात्मकादतिशयोक्तिस्वरूपाद्विलक्षणत्वेन तयोरैक्यासंभवात्। न च निदर्शनाविषये व्यंग्योपमयैवास्तु चमत्कार इति वाच्यम्। अत्राभेदप्रतीतिकृतचमत्कारस्यैव सत्वात्। कल्पितौपम्यमुद्रिकया पर्यवसन्नया तथैव चमत्कार इत्याशयात्। तदुक्तम् 'उपजीव्यत्वेन भेदात्' इति। उदयतीति। माघे चतुर्थसर्गे रैवतकनाम्न पर्वतस्य वर्णनम्। विस-

---

प्रभा :—सुपमानमप्रसिद्धं द्वितीये तु वारणेन्द्रलीलारूपं तत्प्रसिद्धमित्यपि भेदो द्रष्टव्य। लीलापदार्थमात्रस्येति। किं तु तद्वहनरूपवाक्यार्थस्येत्यर्थः। विषयैवेदेव-

दोर्भ्यां तितीर्षति तरङ्गवतीभुजग-
मादातुमिच्छति करे हरिणाङ्कबिम्बम्।
मेरुं लिलङ्घयिषति ध्रुवमेष देव
यस्ते गुणान्गदितुमुद्यममादधाति ॥ ४६ ॥ (—)

इत्यादौ मालारूपाऽप्येषा द्रष्टव्या।

(२६) स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा।

क्रिययैव स्वस्वरूप—स्वकारणयो सम्बन्धो यद्वगम्यते, सा अपरा निदर्शना। यथा—

He sets about crossing beyond the sea with the help of his arms, he aspires to catch the orb of the moon in his hand, he, in fact, seeks to stride O King, beyond the Meru,-whosoever makes an endeavour to describe *your virtues!* (46)

In instances like these, one could come across it (i e Nidarśanā) in the Mala form too

While that is the other (variety of Nidarśana) in which there is an intimation, by an action itself, of the connection between itself and its cause.

*Gloss*—That is the other variety of Nidarsanā, in which the connection between itself and its cause is made to be intimated by the action itself

To illustrate —

प्रदीपः—यथा—दोर्भ्यामिति । स्वस्वेति । यत्र क्रिययैव स्वस्य स्वहेतोश्चान्वयो हेतुहेतुमद्भावरूप स्थाप्यते साऽपरा निदर्शना । यथा— उन्नतमिति । अत्र पतेत्पदप्रतिपाद्यस्य पातस्य कार्यस्य लाघवे सत्युन्नतपदप्राप्तिरूपस्य कारणस्य च तथासबन्ध पततिपदप्रतिपाद्यया पातक्रियया प्रतिपाद्यते । तथा

उ०:—ता विस्तीर्णा ऊर्ध्वा रश्मय एव रज्जवो यस्य। इद अहिमरुचौ इत्यस्य हिमधाम्नि इत्यस्य च विशेषणम् । अहिमरुचि सूर्य । हिमधामा चन्द्र । विलम्बिघण्टाद्वयेन परिवारितो यो वारणेन्द्रस्तस्य लीलाऽभिन्ना लीलामित्यन्वय । श्लेषेण लीलापदेन लीलाद्वयोपस्थिते । ( पुष्पिताग्रा छन्द । ) श्लेषाश्रयणे बीज दर्शयति—अत्रान्येति । अन्यलीलाता दात्म्यस्यान्यलीलायाममभवाचेत्यपि बोध्यम् । न चेदृशस्थलेऽन्वयानुपपत्त्या लीलापदस्य तत्सदृशलीलायां लक्षणैव स्यादिति वाच्यम् । आरोपेणाप्यन्व-

उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥४७॥ (—)

अत्र पातक्रियया पतनस्य, लाघवे सति उन्नतपदप्राप्तिरूपस्य च सबन्धः ख्याप्यते ॥

"Whosoever is petty would, on attaining a position of eminence, topple *down but easily* —*thus announcing does the particle of stone*, that has got on the peak of a mountain, drop down when tilted (even) by a gentle breeze. (47)

*Here the action of falling is made to communicate the relation* between a fall and (its cause) viz. the attainment, when there is petti ness (in the party holding it,) of a position of eminence

**प्रदीपः**—च लाघवे सत्युन्नतपदप्राप्ति पाते हेतुर्यथा दृषत्कणस्येति दृष्टान्तपर्यवसानान्नि

**उ०ः**—योपपत्ते । वस्तुमाहात्म्यादेव त्वस्या सादृश्यव्यञ्जकत्वम् । तदाह— **उपमायां पर्यवसानमिति** । अत्रोपमानोपमेयधर्मयोरभेदप्रतिपत्ति । अत इयमेव पदार्थनिदर्शनेत्युच्यतेऽन्यै । तत्र पदार्थनिदर्शनात्वे कस्यचिदुक्ति खडयति—**एवं चेति** । समस्तत्वेनाक्षेपकत्वस्यापि पदत्वादिदं चिन्त्यम् । **दोर्भ्यामिति** । (राजानं प्रति कस्यचिदुक्ति । दोर्भ्याम् बाहुभ्याम् ।) तरगनीमुजग समुद्र । हरिणांकश्चन्द्र । (गदितुम् वक्तुम् । उद्यमम् उद्योगम् । आदधाति करोति । वसन्ततिलका छन्द ।) अनेनस्य गुणगणनोद्यमस्य बहून्युपमानानीति माला । **स्वस्य** । कार्यस्य । **ख्याप्यते** । परान्प्रति बोध्यते । **उन्नतमिति** । उन्नत उत्कृष्ट ऊर्ध्वस्थान च । लघुरल्पमति अपकृष्टगुरुत्वनाश्च । पतनं पदभ्रंश, अध सयोगहेतुक्रिया च । (दृषत्कण पाषाणकण ।) चारुमारुतो मन्दवात न तु झञ्झावात । हेलया पातोपपादकमिदम् । (रथोद्धता छन्द ।) **तयोःसंबंधः** । कार्यकारणभावरूप । इयं सम्बन्धस्तुनर्थनिर्णयने स्युच्यते । एतच्च क्रियपर्यवेसानकारेण दर्शितम् । अन्ये तु 'स्वहेत्वन्वयस्य' इत्युपलक्षणं स्वक्रियया क्विचिदर्थबोधनस्य । एव च 'चूडामणिपदे धत्ते यो

**प्रभा**ः—परेण छन्दस्यवचोद्ग । ब्रुवन्नतीति पातक्रियाया एव हेतुहेतुमद्भावगमकत्व स्तोत्रे । तत्र दृष्टान्तविपर्ययेनाह—तथा चेति । इति निदर्शनालङ्कारम् ।

**(२७) अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥ १२ ॥**

अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेपोऽप्रस्तुतप्रशंसा ।

**(२८) कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।**
**तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥ १३ ॥**

तदन्यस्य कारणादेः । क्रमेणोदाहरणानि—

## 11 APRASTUTA-PRASANSĀ

What is called 'Aprastuta prasansa is literally so (i e statement of the thing not under consideration), on the basis of the thing under consideration

*Gloss*—The suggestion of the matter under consideration by stating the matter not under consideration, constitutes 'Aprastuta-prasansa

The matter under consideration being (1) the effect, or (2) the cause, or (3) a general fact, or (4) a particular one, a statement of the other (correlate), and the statement (5) of an equal, the matter under consideration being its equal these would be the five varieties (of it)

*Gloss* —Of the other i e of the cause etc Instances in order —

**प्रदीप**.– दर्शनात्वमिति। अप्रस्तुतेति। अप्रस्तुतस्य प्रशसा वर्णनम्। सैव अप्रस्तुतप्रशसैवेत्यर्थ । प्रस्तुताश्रया प्रकृतप्रतिपत्तिहेतु । एतच्चालंकारत्वबीजमतिप्रसक्तमिति निवारयति। अप्राकरणिकेन प्राकरणिकाक्षेपोऽप्रस्तुतप्रशसा प्राकरणिकेनाप्राकरणिकाक्षेप समासोक्तिरिति विवेक । ता विभजते—**कार्ये इति** । सेत्यनुवर्तते । कार्यादिपञ्चके प्रस्तुते तदन्यस्य कारणादिपञ्चकस्याप्रस्तुतस्य वर्णनमिति सा पञ्चधेत्यर्थ । तत्र कार्ये प्रस्तुते कारणस्य वर्णन

**उ०** :—देव रविभागतम् । सता कार्याऽऽतिथेयीति बोधयन् गृहमेधिन ॥' इत्यादावप्येषैवेत्याहु । **इति निदर्शना** । **अप्रस्तुतस्य** । अप्रकृतस्य । **अप्रस्तुतप्रशंसैवेति** । तपदवाच्यैवेत्यर्थ । **एतच्चेति** । अप्रस्तुतप्रशसनमात्रं समासोक्त्यतिप्रसक्तमिति तद्वारणाय प्रस्तुताश्रये युक्तमित्यर्थ । तदेवोपपादयति—**अप्राकरणिकेनेति** । प्रस्तुतव्यजन प्रस्तुताप्रस्तुतयोरसबधे सति नेति तत्सबधदर्शनमुखेन

**प्रभा**.– **अप्रस्तुतप्रशसेति** । अप्रस्तुतप्रशसापदवाच्यैवेत्यर्थ । **एतच्चेति** । अन्यवृत्तान्तस्यान्यवृत्तान्ताक्षेपकत्वरूपमित्यर्थ । **अतिप्रसक्तमिति** । समासोक्तावपि सत्त्वादित्यर्थ । आक्षेपेणैवेत्येवकारेणाभिधाव्यवच्छेद । ननु प्रकरणसहायस्य योगस्य

तः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते
। कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि ।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥ ४८ ॥

(अमरुशतक १०)

अत्र-प्रस्थानात्किमिति निवृत्तोऽसीति कार्ये पृष्टे कारणमभिहितम् ।

राजन्राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते ।
इत्थं नाथ शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥ ४९ ॥

(Cited in सरस्वतीकण्ठाभरण ४.)

---

"Do they never meet again, O lovely lady, who go out? You need have no anxiety on my score! You are considerably reduced!"—with these words, as I, in tears, was addressing her, she glanced at me with an eye, the pupil whereof was dull with bashfulness, and which absorbed the tears as they issued forth, and suggested her eagerness for a death that was impending (48)

Here, the cause is stated, when the basis of the enquiry—What made you cancel your journey—was the effect

"O king, the princess does not give me lessons the queens too keep mum! Feed me, O hunchback! Why are not the prince and (his) companions yet taking their food?"—thus addresses, in the mansion of your foe, O lord, the parrot set free from the cage by the passers-by, each one (i. e. the king etc.) individually, looking at them as drawn in the picture on the deserted terrace. (49)

---

प्रदीपः—यथा—याता इति । अत्र प्रस्थानात्किं निवृत्तोऽसीति कार्ये पृष्टे कारणस्य प्रियाया भाविमरणोत्साहस्य वचनम् । किंशब्द प्रश्नार्थ इति न कारणप्रस्तावः । कारण प्रस्तावे कार्यवचनं यथा—राजन्निति । अत्र प्रस्थानोचितं भवन्त दृष्ट्वा सदर्पेव सदारम् प्रपलाय्य गता इति शत्रुपलायने कारणे प्रस्तुते तस्य कार्यविशेषणं कार्यमुक्तम् ।

---

उ०:—तां निभजते । कार्येत्यादि । याता इति । ( अमरुशतके 'प्रस्थाना-न्निवृत्तोऽसि किम्' इति किंशब्द प्रश्नस्य प्रस्तुतनिवृत्तिहेतुं कारणप्रस्तावं प्रस्तुत-वस्यचिदुक्तिः । याताः गताः । ) न मिलन्ति नायांति । या कृता सा कृतैव पुनर्न कार्येत्याह—पुनरिति । ( मत्कृते मदर्थम् । ) नैव चिंता कृतेत्यपरत्वं

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गताः— इति कारणे प्रस्तुते कार्यमुक्तम्।

एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तःशुचा॥५०॥ (भल्लटशतक. ९४.)

---

Here, while the matter under consideration is the cause; viz. Your enemies took to their heels at once as they got to know that you were about to start on an expedition, the effect is stated.

Is it too much that that blockhead took him at his word (तस्य मुखात्) and thought a drop of water, on the leaf of a lotus-plant, a pearl? Hear something more than this! When, owing to the light movement of the finger-tips, it vanished as it was being gently picked up, he, wondering, "Where might that (pearl) of mine have gone flying?",–has not been having sleep, day after day, with grief at his heart! (50)

---

**प्रदीपः**–सामान्ये प्रस्तुते विशेषवचनं यथा—**एतदिति**। अत्र जडानामस्थल एव ममत्वसंभावना भवतीति सामान्ये प्रस्तुते पुरुषविशेषस्य स ममत्वविशेषोऽभिहितः। विशेषे

---

**उ०**:–तत्कार्यमाह। नितरामिति। गमनानिच्छाज्ञानेन या लज्जा तया मंथरा निष्क्रिया तारका यत्र। लज्जया कस्याप्यनवलोकनात्। धारारूपमश्रु। पीताश्रुणेति पाठे निपतदेव पीतं संवृतं अश्रु यत्रेत्यर्थः। चक्षुष्येकवचनं लज्जया सम्मुखदर्शनविच्छेदाय। हसितेन। मद्गमनेऽप्येतत्प्राणाः स्थास्यंतीति एवं प्रतारयतीति विस्मयप्रयुक्तेन। (शार्दूलविक्रीडितं छन्दः।) **कार्ये**। निवृत्तिरूपे। अत्रेदमेव प्रस्तुतम्। वर्णनीयत्वात्। अत्राप्रस्तुतेन मरणेनाऽऽक्षिप्ताया गमननिवृत्तेरनुरागोत्कर्षकत्वेनैतस्या अलंकारत्वम्। अत एवोत्तरेण प्रश्नोन्नयनेऽपि नोत्तरालङ्कारः। तस्य चमत्कारजनकत्वाभावात्। अन्ये द्वयोः समावेशमिच्छति। **राजन्निति**। (राजानं प्रति कवेरुक्तिः। कुब्जे इति भोजिकायाः सम्बोधनम्।) कुमाराश्च तत्सान्निध्य तैः। एषां भोजनसमये शुकस्यापि भोजनलाभात्। (शून्यायाम्। निर्जनायाम्। वलभौ उपरिगृहे सौधे। भित्तौ इति वाऽर्थः। शार्दूलविक्रीडितं छन्दः।) **कार्यमुक्तमिति**। तेन च कारणं व्यज्यते इत्यर्थः।

अत्रास्थाने जडानां ममत्वसंभावना भवतीति सामान्ये प्रस्तुते विशेषः कथितः।

सुहृद्वधूबाष्पजलप्रमार्जनं
करोति वैरप्रतियातनेन यः।
स एव पूज्यः स पुमान्स नीतिमान्
सुजीवितं तस्य स भाजनं श्रियः ॥ ५१ ॥ (—)

अत्र 'कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं प्रशमयसि, तत् त्वमेव श्लाघ्यः'—इति विशेषे प्रस्तुते सामान्यमुदितम्।

---

Here, when the matter under consideration was the general fact, "*The dull witted cherish an idea of attachment towards things unworthy,*" the particular one is stated

Whosoever wipes out the tears of the wives of his allies, by avenging the hostile acts, is alone adorable, he alone is manly; he alone is versed in statecraft, his is an exalted life, he is the sanctum of glory! (51)

Here, the matter under consideration being a particular fact,—"If you put an end to the grief of the consorts of the demon Naraka by killing Kṛṣṇa, then you alone are praiseworthy,"—the general one is stated

---

प्रदीपः—प्रस्तुते सामान्यवचनं यथा—सुहृदिति। अत्र श्रीकृष्णं निहत्य नरकासुरवधूनां दुःखं यदि शमयसि तदा त्वमेव श्लाघ्य इति विशेषे प्रस्तुते सामान्यमुक्तम्। तुल्ये

---

उ०:—अत्र व्यङ्ग्याद्वाच्यस्याधिकचमत्कारकारित्वेन न ध्वनित्वव्यपदेशः। किं त्वलंकारत्वव्यवहार एवेति बोध्यम्। एवमग्रेऽपि। एतत्तस्येति। (मल्लटकविकृते भल्लटशतके कस्यचिन्मूर्खस्य वृत्तान्तं कुतश्चिदाकर्ण्य विस्मयेन भाषमाणं कंचित्प्रति कस्यचिदुक्तिः।) मुखात्प्रतारकस्य कस्यचिन्मुखादपगतं शृण्वन् ▪ जड यन्मुक्तामणिरित्यमस्त एतत्तस्य कियत्। यतोऽस्मादप्यधिकं किंचिज्जडत्वबोधकमस्ति। तदाह—अङ्गुल्यग्रेति। शनैरादीयमानेऽपि अङ्गुल्यग्रस्य लघुक्रिययाऽल्पचालनेन प्रविलयिनि अङ्गुल्यग्रे लग्ने इत्यर्थः। (शृणु अन्यत् इति वा पदच्छेदः। अस्मादपि जैन्यत् अधिकं शृणु इत्यर्थः। शार्दूलविक्रीडितं छन्दः।) ममत्वविशेष इति। भ्रमविशेष इत्यपि बोध्यम्। सुहृदिति। जलेति बाहुल्यसूचनम्। वैरप्रतियातनं कृतपीडेषु पीडादानम्। विष्णुना नरकासुरे हते कंचन तन्मन्त्री नरकासुरसुहृदं (शाल्वं) प्रतीदमाह। (वंशस्थं वृत्तम्।)

तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः—श्लेषः, समासोक्तिः, सादृश्यमात्रं वा तुल्यात् तुल्यस्य ह्याक्षेपे हेतुः । क्रमेणोदाहरणम्—

पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि
यायाद्यदि प्रणयने नमहानपि स्यात् ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक्प्रकटिता पुरुषोत्तमेन ॥ ५२ ॥ ( भल्लटशतक ७९ )

---

An equal being the matter under consideration, when its equal happens to be stated, there are possible three varieties since, Śleṣa, Samasokti, or mere similarity could be the basis for one equal suggesting another Instances, in due order —

Even if he has to lapse from the male sex (by Śleṣa, from manliness), even if he has to sink into the lower world (by Śleṣa, into poverty), even if in begging he has to become a dwarf (by Śleṣa, mean), *he should still uplift the world (by Śleṣa, everyone) This policy* (दिक्) has been brought into evidence by the ineffable (by Śleṣa, any), Visnu (by Śleṣa, pre eminent person) (52)

---

प्रदीपः—प्रस्तुते तुल्याभिधाने त्रय प्रकारा । विशेषणविशेष्यवाचिना सर्वेषामपि श्लिष्टत्वस्य, विशेषणमात्रवाचिनो वा श्लिष्टत्वस्य, श्लेषाभावेऽपि सादृश्यमात्रस्यैव वा प्रकृताक्षेपहेतुत्वात् । आद्यो यथा—**पुंस्त्वादिति** । अत्र पुंस्त्वादित्यादिविशेषणाना पुरुषोत्तमेनेति विशेष्यस्य च श्लेषात्सत्पुरुषप्रतिपत्ति । न च श्लेष एवायम् ।

---

उ० : — **श्लिष्टत्वस्येति** । प्रकाशे श्लेषसमासोक्तिपदे श्लिष्टशब्दश्लिष्टविशेषणपरे । अप्रकृतात् प्रकृताक्षेपे तयोर्भावात् । द्वयो प्रकृतत्वेऽप्रकृतत्वे वा श्लेषस्य, प्रकृतेऽप्रकृतव्यवहारारोपे च समासोक्ते स्वीकारादिति भाव । **पुंस्त्वादिति** । ( भल्लटकविकृते भल्लटशतके ७९ पद्यमेतत् । ) पुंस्त्व पौरुष पुव्यञ्जन च । नारीभूय अमृतहरणात् । अध. सपदभ्रश पाताल च । वराहावतारे पाताल गत्वा पृथिव्युद्धरणात् । प्रणयने याचने । नमहान् महत्त्वरहितोऽल्प इत्यर्थ । बलिप्रार्थने वामनत्वप्राप्त्या जगद्रक्षणात् । विश्वस्योद्धरण विपद्विनाशनेन रक्षणम् । दिक् प्रकार । पुरुषोत्तम पुरुषश्रेष्ठ श्रीकृष्णश्च । ( पुरुषश्रेष्ठपक्षे पुंस्त्वात्प्रचलन पुरुषार्थहानि । अधोयान स्वपदभ्रश । अमहत्त्व गौरवहानि । विश्व सर्वजनमित्यर्थ इत्युदाहरणचन्द्रिका । वस-

येनास्यभ्युदितेन चन्द्र गमितः क्लान्तिं रवौ तत्र ते
युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः ।
क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मना-
गस्त्वेव जडधामता तु भवतो यद्व्योम्नि विस्फूर्जसे ॥ ५३ ॥ (—)

In regard to the Sun, who, as soon as he rose (by Śleṣa, prospered), sent you into obscurity (by Śleṣa, poverty), O Moon, it would have been proper for you to retaliate and not to absorb his rays (by Śleṣa, to cling to the feet) If (you plead) you did this when you had grown lean (by Śleṣa, impoverished), are you not a bit ashamed? Let that pass That you shine in the sky (by Śleṣa, parade yourself in a high position) betrays *your trait of being cool lustred* (*by Śleṣa, of being* the abode of stupidity)! (*53*)

**प्रदीपः**— 'अवयवशक्तेः समुदायशक्तिर्बलीयसी' इति न्यायात्प्रागिवष्णूपस्थितौ सत्पुरुषस्याऽऽक्षेपेणैवोपस्थिते । श्लेषसत्त्वेऽप्यप्रस्तुतस्य प्रथमोपस्थित्यैवाप्रस्तुतप्रशंसात्वात् । द्वितीयो यथा—**येनेति** । अत्र विशेष्यवाचि चन्द्रपद न श्लिष्टम् । तृतीयो यथा—

**उ०**ः—न्ततिलका छन्द ।) **सत्पुरुषेति** । अप्रकृतस्य श्रीकृष्णस्य प्रतीतौ जाताया पश्चात् प्रकृतेत्यादि । **न च श्लेष एवेति** । विशेषणविशेष्ययोरुभयोरपि श्लिष्टत्वादिति भाव । **अवयवशक्तेरिति** । न च प्रकरणसत्त्वे योग एव बलवान् । विष्णो द्धरणरूपपदार्थसामर्थ्यरूपलिंगस्य विष्णावपि सत्त्वात् । एतेन श्लेषमूलो ध्वनिरित्यपास्तम् । ये तु श्लेषस्थले उभयोरप्यर्थयो क्रमेण शक्त्यैव प्रतिपादनमिच्छति, तन्मते कथमत्राप्रस्तुतप्रशसा, अप्रस्तुतेन प्रस्तुतस्याव्यंग्यत्वादत आह—**श्लेषसत्त्वेऽपीति** । अप्रस्तुतप्रतीत्युत्तर तन्मूलिका तन्मूलमूलिका वा यत्र प्रस्तुतावगतिस्तत्राप्रस्तुतप्रशसेति । एकशब्दवत्त्वसाधर्म्यात्पर 'तुल्ये तुल्यस्य' इत्युदाहरणतेति बोध्यम् । **येनासीति** । क्षीणधन कश्चित् उपजीवनार्थमपकारिण सधनमनुसरन् केनचिदुपालभ्यते । येनाभ्युदितेन क्लान्तिं गमितोऽसीति सबध । उदितेनैव, न त्वपकृतेनापि । क्लान्तिस्तेजोहीनता ग्लानिश्च । प्रतिकर्तुं प्रत्यपकर्तुम् । पाद पद रश्मिश्च । क्षीणेन धनहीनेन कलाहीनेन च । मनागपि किं न लज्जसे इत्यर्थ ।

**प्रभा**ः—प्राबल्यादाक्षेपानुपयोग इत्यत आह—**श्लेषसत्त्वेऽपीति** । तथा चोभयत्राभिधाव्यापारसत्त्वेऽपि द्वयर्थस्याप्रस्तुतस्यापि प्रथमावगतिमात्रेणाप्रस्तुतप्रशंसालङ्कारत्व-

[1] आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतं च वडवादहने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च ॥ ५४ ॥ (भट्टेन्दुराज or शुकवि ?)

---

What possibly could the vile Ocean have gained by appropriating the water from the mouths of rivers all around? It was turned saline, frittered away in submarine fire, and locked up in the abyss of the bowels of the nether world! (54)

---

प्रदीपः – आदायेति । अत्र श्लेषाभावेऽपि सादृश्यमात्रेणासत्पुरुषाक्षेपः । यथा वा मम—

कौटिल्यं नयने निवारयतरां शीघ्रां गतिं शीलय
व्यक्तार्थां कुरु भारतीं विहसितेऽप्यौद्धत्यमायोजय ।
ग्रामप्रमदाविलासरसिकः कातरस्त्वयाऽऽसादितो
नाथ नन्दिनि नागरीजनसमाचारैः समाकृष्यते ॥

---

उ०ः – अस्त्वेव लज्जाशून्यत्वमप्यस्तु । जडधामता हिमाधारता मूढता च । विस्फूर्जसे सगर्वमुदेषि । अमाया सूर्येण सह सगत्य ततस्तेजोग्रहणं चन्द्रस्येत्यागमसिद्ध पादग्रहणम् । ( शार्दूलविक्रीडितं छन्दः ।) अत्र श्लिष्टविशेषणमात्रमाहात्म्येन प्रस्तुतसधननिर्धनवृत्तान्ताक्षेपः । आदायेति । ( शुकस्य कवेः पद्यमिदमिति शार्ङ्गधरपद्धतौ स्पष्टम् । ) मुखं वदनं नदीसगमस्थानं च । ( अर्जितम् सपादितम् । दुरर्णवेन दुष्टेन समुद्रेण । वडवादहने वडवानले । पातालमेव कुक्षिकुहरं तस्मिन् । वसन्ततिलका छन्दः ।) अत्र ग्रासकल्पं परधनमपहृत्य विफलव्ययकर्तरि दुरीश्वरे प्रकृते तत्सदृशस्याप्रकृतस्यार्णवस्य कथनम् । कौटिल्यमिति । ( नायिकां प्रति सख्या उक्तिः । 'नन्दिनि' इति नायिकाया सम्बोधनम् । कौटिल्यम् वक्रताम् । निवारयतराम् अतिशयेन निवारय । शीलय अभ्यस । अभ्यासं विना स्वाभाविकमन्दगमनस्यानिवर्तनात् । भारतीम् वाचम् । विहसिते मधुरस्वरसहितहासे । नागरीजनाना समाचारा व्यवहाराः नेत्रकौटिल्य–मन्दगमन–अस्पष्टार्थभाषण–अनौद्धत्यरूपाः तैः । न समाकृष्यते न

---

प्रभाः – मित्यर्थः । वस्तुतस्त्वत्राप्रकृतदृष्टान्तेनाप्रकृतावबोधनं मुख्यं कवेस्तात्पर्यविषयः । श्लेषस्तु तदुपयोगितया गुण इति प्रधानेनैव व्यपदेशो युक्त इति ज्ञेयम् । कौटिल्य-

इयं च क्वचित् वाच्ये प्रतीयमानार्थानध्यारोपेणैव भवति । यथा—

अब्धेरम्भःस्थगितभुवनाभोगपातालकुक्षेः
पोतोपाया इह हि बहवो लङ्घनेऽपि क्षमन्ते ।
आहो रिक्तः कथमपि भवेदेष दैवात्तदानीं
को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः ॥ ५५ ॥ ( — )

---

And this (figure, corrected by hand to: variety), in some cases, becomes plausible without having to super impose the suggested sense on the expressed one To illustrate —

Verily, numerous persons here are able, by means of boats, even to cross beyond the ocean, that has, with water, spanned the expanse of the earth and the bowels of the nether world If (आहो), by a turn of fate, it somehow becomes empty, who dare even so much as look at the abysmal hollow! (55)

---

प्रदीपः — इय च त्रिधा—क्वचिद्वाच्यार्थे प्रतीयमानार्थानध्यारोपमात्रेण । क्वचित्प्रतीयमानार्थाध्यारोपेण । क्वचित्त्वशभेदेन तदध्यारोपानारोपाभ्याम् । तत्राद्या यथा—अब्धेरिति ।

---

उ०: — वशीक्रियते । शार्दूलविक्रीडित छन्द ।) अत्र दुष्प्रभुसत्कविवृत्तान्ताक्षेप । अब्धेरिति । अर्णोऽम्भ । अम्भ इत्येव क्वचित्पाठ । तेन स्थगितस्तिरस्कृतो भुवनस्य भूमेराभोग विस्तार पातालकुक्षिस्तन्मध्य च येन । सर्वपृथिव्या अब्धिप्रान्तत्वेनाग्रहणात् तिरस्कार । जलैर्व्यापनात्पातालकुक्षेरपि स । पोतोपाया समुद्रवणिज । पोतोऽब्धियानम् । क्षमन्ते उत्सहते । आहो इत्यव्यय यद्यर्थे । ( रिक्त जलशून्य ।) अवट खात । कुहर तस्यैव गभीरभाग । कल्प समर्थ । ( मन्दाक्रान्ता छन्द ।) अत्रोपमर्दनशीलस्य दुष्प्रभो पूर्णत्वैव वरम्, न रिक्तता, अत्यन्तोपमर्दनापत्तेरिति व्यङ्ग्य गुणीभूतमेव । अत्र समुद्रेऽपीति पाठ । ध्वनित्व तु नात्र । इहात्यन्ताप्रस्तुतस्य तत्त्वादेव वर्णनमनुचितमिति तत्रापर्यवसानात्तेन स्वस्योचितत्वसिद्धये व्यङ्ग्यार्थस्य बलादाकृष्टत्वेन

---

प्रभा: — मिति । नन्दिनीति सख्या नायिकाया सम्बोधनम् । निवारणप्रयत्नातिशयबोधनाय तरामिति । शीत्यावस । अभ्यास विना नैसर्गिकमन्दगतेर्निवर्तनासम्भवात् । स्पष्टार्थ कुरु । यदेत्यर्थ । यत्नातिशयसूचनाय कुर्वित्युक्तम् । अत्र हेतुरुत्तरार्धम् । समाचारा व्यवहारा । समाकृष्यते वशीक्रियते । अनेव दृष्टान्तेन मूर्खप्रभुसङ्गत कविरुपदि-

क्वचिदध्यारोपेणैव। यथा—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरणे मार्गस्थितस्यापि मे ॥ ५६ ॥

(Cited in ध्वन्यालोक. ३.)

Sometimes it becomes plausible only with super-imposition. To illustrate —

"Hullo! Who are you?"—"I tell. Know me to be a tree on the burial ground."—"You seem to speak in despair?"—"Judged aright!"—"What for?"—"Here I tell To the left of this place, there is the banian tree. To it resort, heart and soul, the travelling folk; while not even my shade, although I stand on the road, can be of use to others!" (56)

**प्रदीपः**—अनापुरुषेऽप्येतेऽर्थां अबाधिता एवेति नेह प्रतीयमानार्थाध्यारोप। द्वितीया यथा—कस्त्वमिति। अत्र वाच्यशाखोटके सर्वोप्यत्वोधारयितृत्वा-

**उ०**:—वाच्यसिध्यगत्वात्। **कस्त्वमिति**। शाखोटकः भूतावासवृक्षः। कस्त्व भो' इति वृक्षं प्रति प्रश्नः। कथयामीत्यादि तदुत्तरम्। वैराग्यादिवेति पुनः प्रश्नः। साधु विदितमित्युत्तरम्। पुनः प्रश्नः कस्मादिति। इद वैराग्यम्। वामेन वामभागेन वामाचारेण युक्तश्च। सर्वात्मना छायारोहणशयनादिना। न च्छायेति। भूतावासत्वेन शाखोटकच्छायानाश्रयणम्। (शार्दूलविक्रीडितं छन्दः।) प्रतीयमानोऽत्र प्रस्तुतासाधुपुरुषः। न चात्र रूपकम्। प्रस्तुतेऽप्रस्तुतारोपे एव तत्स्वीकारात्। एतेन शाखोटकवटपदाभ्यां साधसाधुपुरुषौ निगीर्याध्यवसिताविल्यतिशयोक्तिरित्यपास्तम्। तत्रारोप्यस्यैव प्राधान्येन संबोध्यत्वाद्यन-न्वयतादवस्थ्याच्च। निगमानाया अप्यतिशयोक्तेरेतदंगत्वाच्च। अत्र सधनः पूज्योऽधनो निन्द्य इति प्रस्तुतव्यंजनम्। नन्वत्राऽप्रस्तुतव्यवहारेण प्रस्तुतव्यवहारस्य निगरणमेवास्तु। किमनया। तात्पर्यानुपपत्तेरपि लक्षणाबीजत्वात्। बोध्य-संबन्धश्च लक्षणा। वाच्यव्यवहाराभेदेन च प्रस्तुतव्यवहाराश्रय इति चेन्न। वाच्यार्थताटस्थ्येनैव व्यंग्यप्रतीतेरत्र सहृदयसम्मतत्वात्। शक्यसंबं-

**प्रभा**:—स्पष्टे। अत्र पुरुषेऽपीति। अव्याविनि दोष। प्रतीयमानस्य गम्यमानस्यार्थस्य

क्वचिदंशेऽप्यध्यारोपेण । यथा—

सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा ।
सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः ॥ ५७ ॥

(भल्लटशतक १८.)

Sometimes it becomes plausible by super imposition in parts. To illustrate —

That unprecedented phenomenon of the inversion of the tongue (by Śleṣa, of perverseness of speech), that unsteadiness of ears (by Śleṣa, the flippancy of ears), that sight which in intoxication has become unmindful of the track, whether his own or that of others, (by Śleṣa, of the distinction between allies and aliens),—or rather, what use dilating upon it? You have forgotten it all, O bee! for, what sort of whim (ग्रह) it is on your part, O brother, that even now you resort to the elephant, when his trunk is hollow inside (by Śleṣa, when his hand is empty inside)? (57)

**प्रदीपः**—दिरमनुपपन्नमिति प्रतीयमानाध्यारोप । तृतीया यथा—**सोऽपूर्व इति ।** अत्र हस्तिनो रसनाविपर्यास शून्यकरत्व मदश्च वाच्यस्य भ्रमरस्य सेवनाभावहेतुत्वेन वाच्यानि, न तद्वेतव । मदस्तु प्रत्युत सेवने हेतुरिति तदंशे प्रतीयमानपुरुषाध्यारोपापेक्षा ।

**उ०**:—धस्यैर लक्षणात्वाच्च । **सोऽपूर्व इति** । ( भल्लटकविकृते भल्लटशतके १८ पद्यमिदम् । ) रसनाविपर्ययो वचनाऽस्थैर्यं विपरीताग्रत्वं च । उपकण्ठ तद्रसनाग्रमिति प्रसिद्धे । कर्णचापल परवचनप्रतार्यत्व अनवरतकर्णचापल च । मदो गर्वं दानजल च । स्वपरदिक् आत्मानात्मविभाग । एतत्सर्वं किं विस्मृतवान् । यत् यत इत्यर्थ । निश्चितवानसीति युक्त पाठ । यन्सेव्यते एप इत्यन्वय । वारणोऽनुगतवारको हस्ती च । अतःशून्यकरो निर्धनो मांसादिशून्यमध्यशुण्डादण्डश्च । ( शार्दूलविक्रीडित छन्द । ) **मदश्चेति** । येन विस्मृतस्वपरदिक्त्वम् । एवं च रसनाविपर्ययादौ वचनास्थैर्यादिकमारोप्य भ्रमरे प्रपन्नरोनरत्वमारोप्य वारणे निरारकप्रभुत्वमारोप्य वाक्यार्थोपपत्तिरिति भाव । **कर्णेति** । एव चैतदंशे

**प्रभा**:—पुरुषविशेषस्य नाध्यारोप इत्यर्थ । **वाच्यानीति** । 'नपुंसकमनपुंसकेन' इत्येकशेष । इत्यप्रस्तुतप्रशंसाप्रकरणम् ॥ ११ ॥ समेनेति समभिव्याहारात्प्रकृतपदेनो-

अत्र रसनाविपर्यासः शून्यकरत्व च भ्रमरस्य असेवने न हेतुः, कर्णचापलं तु हेतुः, मदः प्रत्युत सेवने निमित्तम्।

**( २९ ) निगीर्याध्यवसानं तु प्रकृतस्य परेण यत्।**
**प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम्॥ १४॥**

Here the inversion of the tongue and the possession of a hollow trunk are no reason why the bee should *not* resort (to the elephant) The unsteadiness of ears, however, does constitute a reason Intoxication is, on the contrary, a reason why the bee *should* resort (to the elephant).

## 12 ATIŚAYOKTI

(1) Where there is the supersession of the matter under consideration on its being eclipsed by the other, (2) where the matter under consideration is stated to be other (than its ordinary prototype), (3) where there is a conceit (as a sequel to an alternative) introduced by a word with the sense of 'if, (4) and where there occurs perversion of

**प्रदीपः**—कर्णचापल तु भ्रमरस्यासेवने हेतुरेवेति तदशे नाध्यारोप इति। **निगीर्येति।** प्रकृतस्योपमेयस्य समेनोपमानेन निगीर्याध्यवसान द्रढीयसी बुद्धि सैकाऽतिशयोक्ति। यच्च तदेव वस्त्वन्यत्वेन विविक्ताकारवस्त्वन्तरत्वेनाध्यवसीयते सा द्वितीया। यच्च

**उ०**:—भ्रमरपद द्विरेफपरमेवेति भाव। ऐकरूप्यायैतत्वाक्यन्याय वा तदशेऽप्यारोप इत्यन्ये। अत्र श्लिष्टशब्दरूपसाधारणधर्मनिबन्धन सादृश्यम्। अत्रेद बोध्यम्। अप्रस्तुतपदेन मुख्यतात्पर्यविषयीभूतार्थातिरिक्तोऽर्थो ग्राह्य। एतेन 'किं भृग सत्या मालत्या केतक्या कण्टकेद्धया' इत्यत्र प्रियतमेन साकमुद्याने विहरती काचित् भृग प्रत्येनमाहेति प्रस्तुतेन प्रस्तुतान्तरद्योतने प्रस्तुताङ्कुरनामा भिन्नोऽलङ्कार इत्यपास्तम्। मदुक्तरीत्याऽस्या एव सम्भवात्। यदा मुख्यतात्पर्यविषय प्रस्तुतश्च नायिकानायकवृत्तान्ततदुत्कर्षकतया गुणीभूतव्यङ्ग्यस्तदाऽत्र सादृश्यमूला समासोक्तिरेवेति केचित्। अन्ये तु अप्रस्तुतेन प्रशसेत्यपि अप्रस्तुतप्रशसाशब्दार्थ। एव च वाच्येन व्यक्तेन वा अप्रस्तुतेन वाच्यं व्यक्त वा प्रस्तुतं यत्र सादृश्याद्यन्यतमप्रकारेण प्रशस्यते उत्कृष्यते इत्यर्थादत्रापीयमेवेत्याहुरिति दिक्। इत्यप्रस्तुतप्रशंसा। **द्रढीयसीति।** स्वासाधारणधर्मेणानुपादानादना-

**प्रभा**:—परेण भ्वाचष्टे—उपमेयस्येति। उपमानेन निगीर्य पृथगनिर्दिश्याध्यवसान स्वरूपेण

**कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः ।**
**विज्ञेयाऽतिशयोक्तिः सा**

उपमानेनान्तर्निगीर्णस्योपमेयस्य यदध्यवसानं सैका । यथा—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥ ५८ ॥
(Cited in सरस्वतीकण्ठाभरण, ४.)

the sequence of the cause and the effect–that should be regarded as 'Atiśayokti'

That is one variety where there is the supersession of the Upameya which is swallowed up by the Upamāna. To illustrate —

A lotus growing in a region without water, again two blue lotuses growing on (that) lotus, these on a golden creeper, and that too, tender and lovely – what an array of freaks it is! (58)

**प्रदीप** :– चेच्छब्देन यदिशब्देन वा यदर्थोक्तौ कल्पनमर्थादसम्भविनोऽर्थस्य सा तृतीया । यश्च कारणकार्ययो प्रसिद्धस्य पौर्वापर्यस्य विपर्ययो वैपरीत्य कारणस्य शीघ्रकारिताप्रतीतये सा चतुर्थीति चतस्रोऽतिशयोक्तय । तत्राद्या यथा—**कमलमिति** । अत्र मुखादि

**उ०** :– हार्योऽभेदधीरित्यर्थः । गौणसाध्यवसानमूलेयम् । **तदेवेति** । एतत्कारेण धर्मिभेदाभाव सूचित । **अन्यत्वेनेति** । तच्चान्यादिशब्दै । **विविक्ताकारम्** । अतिशयिताकारम् । **कमलमिति** । (प्रिया दृष्ट्वा तत्सखीं प्रति नायकस्योक्ति ।) कमलं जातानन्तरम् । अनम्भसि निर्जलदेशे । कुवलये नीलोत्पले नेत्ररूपे । तानि, कुवलये द्वे कमलं च । कनकलतिका जातातनु । (सुकुमारा मृद्वी चासौ सुभगा सुदरी । आर्या छन्द ।) अत्र प्रकृतलक्ष्यनायिकावक्त्रादीनां कमलादितादात्म्येनाध्यवसानान्मुखादेरतिशय । अत्रोपमानतादात्म्यमुपमेये । अत्र केचित् । 'प्रकृतस्य परेण' इत्येव प्रकाशे पाठदर्शनात् तत्र च सामान्यतो निर्देशात् शुद्धसाध्यवसानलक्षणया धर्मधर्मिणोरेकत्वाध्यवसायेऽप्येषा । 'समेन' इति पाठेऽपि तदुपलक्षणम् । यथा 'कर्णोत्तंसितनव्यमञ्जरीकेदाराग्रकपोलमण्डलम् । निर्मलं निखिलशष्पोत्तर नीलिमानमवलोकयामहे ॥' इत्यत्र नीलिमपदस्य तदाश्रये शुद्धसाध्यवसानलक्षणया नीलिमाऽभेदप्रतीति । एवं

**प्रभा** :– निश्चय । स च दृढीयस्त्वेनेनोक्त । **अर्थादिति** । कल्पनपदसामर्थ्यादित्यर्थ ।

'**यद्यर्थस्य**' यदिशब्देन चेच्छब्देन वा उक्तौ यत् कल्पनम् (अर्थात् असम्भविनोऽर्थस्य), सा तृतीया। यथा—

राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात्॥ ६०॥ (—)

That is the third variety where there is a conceit—of an improbable event, of course,—as a sequel to an alternative introduced by a word meaning "If". To illustrate —

*If* on the full moon night, the form of the moon were to be spotless, *then* would her face suffer the indignity of being (its) like. (60)

प्रदीपः—तृतीया यथा—राकायामिति।

उ० :—कौतुकम्॥' इत्यत्र तु नायमलंकारः। अध्यवसानाभावात्। न चैव कोऽत्रालंकारः। न कोपि। किंतु तेषां तथाज्ञानानि भगवद्विषयकभावे उद्दीपनानीति बोध्यम्। न ह्युद्दीपनसंसारः सर्वोऽप्यलंकारेष्वेवेति नियमोऽस्ति। एवम् 'अकृशं कुचयोः कृशं वलग्ने' इति पद्येऽपि बोध्यम्। **राकायामिति**। (अमृतांशोः चन्द्रस्य। साम्यं सादृश्यमेव पराभवः। निरुपमस्योपमानसंभव एव पराभवः।) पूर्वार्धे पूर्णेन्दौ कलंकाभावस्यासंबंधे संबंधः कल्पितः। उत्तरार्धे साम्यसंबंधसंभवेऽपि तदसंबंधः पराभवपदेन सूचितः। एवं चासंबंधे संबंध इति द्विविधेयम्। यद्यर्थोक्तावित्युपलक्षणमुक्तप्रकारद्वयस्य। एवं च 'सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमंडलम्' इत्यत्राप्यसंबंधे संबंधरूपा इयमेव। यत्त्वत्र 'स्पृशतीवेंदुमंडलम्' इति कृते उत्प्रेक्षाप्रतीतेरिवाभावे गम्योत्प्रेक्षैवोचिता। अन्यथा 'त्वत्कीर्तिर्भ्रमणश्रान्ता विवेश स्वर्गनिम्नगाम्' इति त्वदुक्तेऽपि गम्योत्प्रेक्षा न स्यात् इति तन्न। नूनं मुखं चंद्रः इत्यादौ नूनपदाभावे गम्योत्प्रेक्षाया आपत्तेः। रूपकस्यानापत्तेश्च। त्वत्कीर्तिरित्यत्र बहुदूरगमने स्वर्गगमने वा स्वर्गाप्रवेशतादात्म्योत्प्रेक्षाया कीर्तौ स्वर्गाप्रवेशकर्तृत्वोत्प्रेक्षाया अनंगीकारे भ्रमणश्रान्तस्वरूपविशेषणवैयर्थ्यप्रसंगे उत्प्रेक्षासाधकाभावाच्च। स्वर्गगमनधिन्नरूपानुपात्तधर्मनिमित्तेयम्। अन्ये स्वर्गगमनरूपानुपात्तधर्मनिमित्तेति दिक्। राकायामित्युदाहरणे व्यतिरेकालंकारगर्भेयं एव 'लावण्यद्रविणव्ययो न गणितः क्लेशो महानर्जितः स्वच्छंदं चरतो जनस्य हृदये चिंताज्वरो निर्मितः। एषापि स्वगुणानुरूपरमणाभावा-

कारणस्य शीघ्रकारितां वक्तुं कार्यस्य पूर्वमुक्तौ चतुर्थी । यथा-

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।
चरमं रमणीवल्लभ लोचनविषयं त्वया भजता ॥ ६१ ॥ (कुट्टनीमत १६)

(३०) प्रतिवस्तूपमा तु सा ॥ १५ ॥
सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।

---

That is the fourth variety where, in order to express the quickness of action of the cause, the effect is stated as (taking place) *prior* to the cause.

To illustrate —

First it was by Cupid that the heart of Malati was possessed, later by you, O beloved of the lovely lady, as you came within her ken! (61)

### 13 PRATIVASTŪPAMĀ.

While that is 'Prativastūpamā' where one and the same common attribute is present, in two forms, in two sentences

---

प्रदीपः—चतुर्थी यथा—हृदयमिति । प्रतिवस्तूपमेति । एकस्य सामान्यस्य साधारणधर्मस्य वाक्यद्वये उपमानोपमेयवाक्ययोर्यत्र द्विरवस्थिति । अर्थाच्छब्दभेदेन ।

---

उ०ः—द्वावपि हता कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता' इत्यत्रापि 'एषापि स्वगुणानुरूपरमणाभावात्' इत्यत्रामनये सकलस्तन्वीकारणप्रश्नसंप्रतिपादनार्थं उक्त । चतुर्थी । कार्यकारणयो पौर्वापर्यविपर्ययरूपा । विपर्यय कार्यस्य प्राथम्येन सहभावेन च । तत्राद्यमाह । हृदयमिति । ( दामोदरगुप्तकृते कुट्टनीमते ९६ पद्यमिदम् । ) कुसुमान्येव चापो बाणाश्च यस्य तेन मदनेन मालत्या मालतीनाम्न्या नायिकाया हृदयम् आदौ पूर्वं अधिष्ठितम् । चरमं पश्चात् । लोचनविषयं नेत्रगोचरताम् । भजता प्राप्नुवता । दृष्टेनेति यावत् । त्वया आक्रान्तम् । ( आर्या छन्दः । ) अत्र कारणस्य कान्ताधिष्ठानस्य शीघ्रकारित्वं वक्तुं कार्यस्य कंदर्पाधिष्ठानस्य प्रथममुक्तिः । अन्त्यं यथा—'समकं समासन्नत द्वयं द्विरदगामिना । तेन सिंहासनं पित्र्यं मण्डलं च महीभृताम् ॥' इत्यत्र सममेव न तु पूर्वापरभावेनेति प्रतीतिः । सिंहासनारोहणं कारणम् । महीभृन्मण्डलाक्रमणं कार्यम् । इत्यतिशयोक्तिः । एकस्येति । तेन निदर्शनदृष्टान्तयोर्व्युदासः । तत्र भिन्-

---

प्रभाः—अभिन्नस्येति । कथितस्य दर्पः । प्रतिवस्तु प्रतिवाक्यार्थमुपमा समानधर्मा

अत्र मुखादि कमलादिरूपतयाऽध्यवसितम् ।

यच्च तदेवान्यत्वेनाध्यवसीयते, सा अपरा यथा—

> अण्णं लडहत्तणअं अण्णा विअ का वि वत्तणच्छाआ ।
> सामा सामण्णपआवइणो रेह च्चिअ ण होई ॥ ५९ ॥ (—)

---

Here, the face etc have been superseded by the idea of their being the lotus etc. in form

And that is another variety where the object itself comes to be determined as being different (from its ordinary prototype).

Of a *different* sort is (her) delicacy, likewise of a *different* sort altogether is the ineffable shade of her body (वर्तन) That beauty (श्यामा), again, could not at all be the make (रेखा) of a lay creator! (59)

---

प्रदीपः—कमलादित्वेनाध्यवसितम् । यथा वा मम—

> कलशे परममहत्त्व तिमिरस्तोमस्य सोमसहवासः ।
> वियति च शैवलवनी शिव शिव कुसुमेषुसर्गसौभाग्यम् ॥

द्वितीया यथा—अण्णमिति । स्पष्टम् ।

---

उ०:—हेतुफलयोरभेदाध्यवसायेऽप्येषा । यथा 'वित्रासन समरसीमनि शात्रवाणामाजीवनं विबुधपर्षदि कोविदानाम् । संमोहनं सुरतसंसदि कामिनीनां रूपं तदीयमवलोकयतोऽद्भुतं मे ॥' इत्यादौ वित्रासनादिपदस्य तद्धेतौ शुद्धसाध्यवसाना । एतेन 'हेतोर्हेतुमता सार्धमभेदो हेतुरुच्यते' इति हेत्वलङ्कारोयं पृथगित्यपास्तमित्याहु । अत्र भेदेऽभेद । अत्र कमलादिपदानां मुखत्व लक्ष्यतावच्छेदकम् । तेन रूपेण प्रथमतो बोधे तद्धर्मावच्छिन्ने कमलाभेदप्रत्ययो व्यंजनया । बाधबुद्धेश्च न व्याजनिके प्रतिबन्धकत्वमित्यनाहार्या धीरेवेति केचित् । आह्लादकत्वेनैव मुख लक्ष्य, शेष प्राग्वत्, इत्यपरे । अत्र पक्षे तद्धर्मावच्छिन्ने कमलाभेद-बाधस्यैवाभावादनाहार्यत्वं स्पष्टमेव । अन्ये तु शक्यतावच्छेदकरूपेणैव मुखादिभानं वदति । तन्मतेऽभेदप्रधानातिशयोक्तिरित्यस्य उपमानतावच्छेदकस्यैव भेदाभावरूपतया निर्वाह । एतदेव चात्र मते निगरणम्

---

प्रभा:—तेन आयुरेवेदमित्यादौ नातिशयोक्तिरित्यावय । कलश इति । अत्र कलशत्वेन स्तनयोरध्यवसानं, तिमिरसपत्नेन केशपाशस्य, आकाशत्वेन मध्यस्य, शैवलीत्वेन रोमावल्या इति हेयम् । अण्ण इति । 'अन्यन्सौकुमार्यमन्यैव कापि वर्तनच्छाया ।

उ० : — यत्स्ववाचकपदेन शक्यतावच्छेदकरूपेणैवास्य बोधनम्। सादृश्याति शयमहिम्ना च बाधबुद्धे स्थगनादेतन्मतेऽप्यनाहार्येव धीरिति दिक्। (**कलशे इति**। कलशे स्तने। तिमिरस्तोमस्य केशसङ्घातस्य। सोम-सहवास मुखसहवास। वियति मध्यदेशे। शैवलवल्ली रोमावली। कुसुमेषु मदन। गीतिश्छन्द।) **अण्णामिति**। 'अन्यसौकुमार्यमन्ये-व च काऽपि वर्तनच्छाया। श्यामा सामान्यप्रजापते रेखेव च न भवति॥' सुकुमारशब्दस्य लडहादेश। वर्तते जीवतीति वर्तनं शरीरम्। छाया कान्ति। श्यामा शीतोष्णकाले उष्णशीता। (शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला। सर्वावयवशोभाढ्या सा श्यामा परिकीर्तिता॥) सामान्य-प्रजापते सर्वसाधारणप्रजापते। रेखा निर्मिति। (आर्या जघनविपुला।) अत्रान्यदेन सौकुमार्यमित्युक्त्याऽस्या सौंदर्ये सौंदर्यांतरादतिशय प्रतीयते। अत्रा-भेदे भेद। अत्रेद बोध्यम्। 'प्रस्तुतस्य यदन्यत्वम्' इत्यस्य प्रस्तुतस्य अन्य-वस्तुत्वेनाध्यवसाय इत्यर्थ। यथा 'तस्या सखे नियतमिंदुसुधामृणाल ज्योत्स्नादि कारणमभून्मदनश्च वेधा' इत्यत्र प्रकृतनायिकासर्वधिकारणस्य निर्मातुश्च विविक्ताकारवस्त्वतररूपमृणालादित्वेनाध्यवसानम्। 'अस्या सर्ग-विधौ' इत्यादौ तु नैवम्। निश्चयाभावात्। यथा वा 'प्रयभो नवपुण्डरीकमुकुलश्रेणी प्रतिस्माधर पूर्णेदोरदय प्रतिक्षितिरिह मन्दीप्रसूनोत्कर। किंचान्यत्कथयामि वीर जगतीशालिपति त्वद्यशोविस्तारे प्रतिदेशमेव दिविपत्स्रोतस्व-तीनिर्झर॥' अत्रैव कीर्तिस्तत्तत्स्थाने योग्यतावशात्तेन तेन रूपेणाध्यवसिता। यथा वा 'स्त्रीभि कामोऽर्थिभि स्वर्द्रु काल शत्रुभिरैक्षि स' इति। अत्र निमित्तभेदात्तत्त-द्रूपेणाध्यवसाय। स च कविनिबद्धवक्तृक इत्यन्यत्। 'गुरुर्वचस्यर्जुनोऽय कीर्तौ भीष्म शरासने' इत्यत्रापीयमेव। अत्र श्लेषसङ्कीर्णेयमित्यन्यत्। एतेन दर्शितेषु विषयेषु उल्लेखालङ्कारोऽयमतिरिक्त इति केषांचिदुक्ति परास्ता। 'ग-जत्रातेति वृद्धाभि श्रीकांत इति यौवतै। यथास्थितश्च बालाभिर्दृष्ट शौरि स-

प्रभा : — श्यामा सामान्यप्रजापते रेखेव न भवति॥' वर्तन गमनोपवेशनभाषणा-दिव्यवहार। छाया शोभा। सामान्य सर्वजनसाधारण। रेखा चित्रलेखनजातिरिव मनुष्य निर्माणजाति। मालतीनाम काचिन्नायिका। इत्यतिशयोक्तिप्रकरणम्॥ १२॥

साधारणो धर्मः उपमेयवाक्ये उपमानवाक्ये च ( कथितपदत्वस्य दुष्टतयाऽभिहितत्वात् ) शब्दभेदेन यत् उपादीयते, सा ( वस्तुनो वाक्यार्थस्योपमानत्वात् ) प्रतिवस्तूपमा । यथा—

*Gloss*:—Where the common property is stated, in the sentence embodying the Upameya and the one embodying the Upamāna, *in different words*, owing to a repeated word having been declared defective, that is 'Prativastūpamā,' so called because therein the Vastu i. e. the sense of one sentence becomes the Upamāna ( *in relation to that of the other* ). To illustrate:—

---

**प्रदीपः**—अभिन्नस्य पदस्य दुष्टत्वात् । सा प्रतिवस्तूपमा । वस्तुनो वाक्यार्थस्योपमानत्वात् । अत्र 'द्विः' 'द्वये' इत्यनेकोपलक्षके । मालानुरोधात् । सा च द्विधा-अमालारूपा

---

**उ०**:—प्रतिबिंबभावेन निर्देशेनैकत्वविरहात् । **अवस्थितिः** । उपादानम् । प्रतिवस्तु प्रतिवाक्यार्थमुपमा समानधर्मोऽस्यामिति व्युत्पत्तेः । तदाह—**वस्तुन इति** । एवं चोपमेयत्वमपि वाक्यार्थस्येति ध्वनितम् । न च 'दिवि स्थितो भानुरिव भूस्थस्त्वं भ्राजसे नृप' इति वाक्यार्थोपमायामतिव्याप्तिरिति वाच्यम् । वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मकं वाक्यार्थयोर्गम्यमौपम्यमित्यस्य विवक्षितत्वात् । तत्र तु इवशब्देन वाच्यमेवेत्यदोषात् । 'निर्मलं वदनं यांति विमलं कमलं मम' इत्यादावतिप्रसंगवारणाय वाक्यार्थयोरिति । अत एव 'आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृतम् । भ्रमद्भ्रमरसंभारं स्मरामि सरसीरुहम् ॥' इति स्मरणालंकारेऽपि नातिव्याप्तिः । पद्मसदृशमाननमित्येव तत्र प्रतीतेः । 'आपद्गतः खलु महाशयचक्रवर्ती विस्तारयत्यकृतपूर्वमुदारभावम् । कालागुरुर्दहनमध्यगतः समंताल्लोकोत्तरं परिमलं प्रकटीकरोति ॥' इत्यत्रापद्गतत्वदहनमध्यगतत्वयोर्बिंबप्रतिबिंबभावेऽपि उपमानोपमेयवृत्तिधर्मो वस्तुप्रतिवस्तुभावापन्न एव । दृष्टांते तु साक्षात्तद्वृत्तिधर्मांशेऽपि बिंबप्रतिबिंबभाव इति ततो विशेषः । एकस्यैव धर्मस्य पृथक्शब्दाभ्यामुपादानं वस्तुप्रतिवस्तुभावः । **देवीति** । राजानं प्रति देवीसख्या

---

**प्रभाः**—यत्रेति व्युत्पत्ते । वाक्यद्वय इत्यस्याभिप्रायमाह—**वस्तुन इति** । वाक्यार्थो हि वाक्यार्थ प्रत्येवोपमानम् । अत्रे वाक्यद्वये समानधर्मोऽस्तीत्यर्थः । यत्रेति । परिवारः पद्माश्रयो यस्य यथेष्टविनियोगयोग्यस्य तत् । एवं वाक्यभेदे भूषणादिविनियोगस्तद्योग्यमित्यर्थं इत्यन्तिमर्थः । अपरावीचिदपदेशस्य धर्मस्योपादानादुदाहरणत्वमिति

देवीभावं गमिता परिवारपदं कथं भजत्वेषा ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥ ६२ ॥

(Cited in वामन's सूत्रवृत्ति ४ ३)

Raised to the status of a queen, how could she hold the position of an attendant? A jewel with the likeness of a deity carved in it does not indeed deserve to be trifled with (परिभोग ?) (62)

**प्रदीपः**—मालारूपा च । तत्राद्या यथा—देवीति । अत्र परिवारपदत्वपरिभोगयोग्यत्वयोरनर्थान्तरत्वादुदाहरणत्वमित्येके । 'कथं भजति' 'न खलु' इत्यनयोरेकार्थतया तथात्वमित्यपरे । अन्त्या यथा यदीति । अत्र विमद्भुतमित्यादिभिरद्भुताभावस्य वाक्य

**उ०ः**—उक्ति । देवीभावम् देवीत्वम् । देवी कृताभिषेका । (गमिता प्रापिता ।) परिवारपदमसाधारणकलत्रपदम् । परिभोगो भूषाद्यर्थमुपादानम् । दैवतेति । स्वर्णादिघटितप्रतिमेत्यर्थः । (आर्या छन्दः ।) इत्येके इति । अत्रारुचिस्तु तयोर्गम्यार्थगतसादृश्यरूपत्वाभाव । **एकार्थतयेति** । अनौचित्यरूपैकार्थतयेत्यर्थः । एवं च दैवतरूपाङ्कितरत्नस्य भोगयोग्यत्वं यथानुचितं तथा देव्याः परिवारपदयोग्यत्वमनुचितमित्यौपम्ये पर्यवसानम् । ननु यथा 'पर्वत एतद्वह्निमान् एतद्धूमात्' इत्यत्र महानसस्य दृष्टान्तताऽनुचिता । एवम् 'एषा परिवारपदत्वायोग्या देवीत्वात्' इत्यत्र दैवतरूपाङ्कितरत्नस्य दृष्टान्तताऽनुचितेति चेन्न । तेन तद्वृत्तिसामान्यधर्मावच्छिन्नयोर्व्याप्तिसिद्धौ 'यत्सामान्ययोर्व्याप्तिस्तद्विशेषयो' इति न्यायेनोक्तविशेषनियमसिद्धेरदोषात् । नियमविशेषरहितकेवलार्थमात्रस्य प्रकृतत्वे तु अप्रकृतवाक्यार्थनिरूपितमौपम्यमात्रं गम्यम् । यथा 'भैरभ्रे भासते चन्द्रो भुवि भाति भवान्बुधैः' इति दिक् । वैधर्म्येणाप्येषा दृश्यते । 'वशाभवो गुणवानपि संगविशेषेण पूज्यते पुरुषः । न हि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥' इत्यादौ । यद्यपि अत्र पुरुषः पूज्यत-

**प्रभाः**—मतान्तरमाह—**कथमिति** । एवं च भिन्नशब्दोपात्तैकधर्मके वाक्यार्थयोरार्थिकमौपम्यं प्रतिवस्तूपमेति लक्षणं बोध्यम् । अत्र च दृष्टान्तालङ्कारे व्याप्तिवारणायाद्य विशेषणम् । 'दिवि भाति यथा भानुस्तथा त्वं भ्राजसे भुवि' इति वाच्यवाक्यार्थोपमावारणायार्थमिति । 'आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृतम् । भ्रमद्भ्रमरसंभारं स्मरामि सरसीरुहम् ॥' इत्यादौ स्मरणालङ्कारवारणाय वाक्यार्थस्युक्तमिति सङ्क्षेप ।

यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥ ६३ ॥(—)

इत्यादिका मालाप्रतिवस्तूपमा द्रष्टव्या। एवमन्यत्राप्यनुसर्तव्यम् ॥

**( ३१ ) दृष्टांतः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥ १६ ॥**

एतेषां साधारणधर्मादीनाम्, दृष्टोऽन्तः (निश्चयो) यत्र स दृष्टांतः।

Prativastūpamā in a Mālā form may be found in instances like—

If fire burns, what is there to be surprised at? What of it, if again, hugeness is found in mountains? The water of the great ocean is ever saline. Freedom from despondency is but the nature of the good. (63)

Similarly could the figure be traced elsewhere also.

## 14. DṚṢṬĀNTA.

Whereas 'Dṛṣṭānta' consists in the reflection of all of these.

Gloss—Of these, i. e. of the Common Property etc. Dṛṣṭānta is where the Anta i. e. decision is in sight.

प्रदीपः—चतुष्टयेऽप्युपादानान्मालात्वम्। चतुर्थवाक्य चोपमेयवाचि। दृष्टान्त इति। एतेषामुपमानोपमेयसाधर्म्याणां सर्वेषां प्रतिबिम्बन दृष्टान्तः। दृष्टोऽन्तो निश्चय उपमानिर्वाहकोऽनालङ्कारे इति व्युत्पत्ते.। स च द्विधा—साधर्म्यवैधर्म्यरूपाभ्याम्। तत्र साधर्म्येण

उ० :—वान्संगविशेषनत्वादित्यर्थे तुंबीफलैकत्वप्रयुक्तमहिमाभावविशिष्टो वीणादंडो 'न दृष्टांतस्तथाप्यनेन दृष्टांतेन संगविशेषाभावप्रयोज्यपूज्यत्वाभाववानिति तद्व्यतिरेक आक्षिप्यते। तत्र पूर्वोक्तरीत्या एकविशेषेऽपरविशेषस्य दृष्टांतत्वाभावात्तद्वृत्तिसामान्यावच्छिन्नव्यतिरेक आक्षिप्यते। सिद्धे च तस्मिन्नुपात्तविपरीतदृष्टांतेन तादृशसामान्यान्वयनियमसिद्धौ यत्सामान्ययोरिति न्यायात्तादृशविशेषावच्छिन्नतव्योक्तान्वयनियमसिद्धिः। एवं च तुंबीफलराहित्यवद्वीणादंडसदृशः संगविशेषाभाववान्पुरुष इति बोधः। तुंबीफलवद्वीणादंडसदृशः संगविशेषवान्पुरुष इति च बोधः। यदीति। निम्द्भुतं स्वाभाविकत्वान्नाद्भुतमित्यर्थ। किं तत:, सदैवेत्यनयोरस्थैर्यम्। सतामविषादिता (विषादराहित्यं) अकृत्रिमं। स्वभाव एव नाश्चर्यमित्यर्थ.। (द्रुतविलंबितं

प्रभा :—इति प्रतिवस्तूपमाप्रकरणम् ॥ १३ ॥ प्रतिबिम्बनमिति। बिम्बप्रतिबिम्बभावेनावस्थानमित्यर्थ.। प्रतिवस्तूपमातो भेदमाह—यत्रेति। यथा निशांनि विहग-

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम्
आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः ॥ ६४ ॥
(Cited in रुद्रट's काव्यालङ्कार ८ ९५)

एष साधर्म्येण । वैधर्म्येण तु—

तवाहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः ।
भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः ॥६५॥(—)

---

No sooner are you seen, than her mind that is aflame with love cools down. Verily, at the sight of the moon does the flower of the lotus plant expand. (64)

*This, on the basis of similarity.* *As for the one based on dissimilarity* —

When you, who in battle take delight in acts of daring, intended to bring your hand near the sword, the warriors of the enemies fell into a rout. For, particles of dust remain steady (only) in the absence of wind. (65)

---

प्रदीपः—यथा—त्वयीति । अत्र साधर्म्यस्यापि प्रतिबिम्ब एवेति प्रतिवस्तूपमाभेदः । वैधर्म्येण यथा—तवेति । वैधर्म्यविपर्यये साधर्म्यपर्यवसानमिति दृष्टान्तालंकारत्वम् ।

---

उ०ः—वृत्तम् ।) इति प्रतिवस्तूपमा । प्रतिबिंबनम् । बिंबप्रतिबिंबभावः । न त्वैक्यमित्यर्थः । अत एव प्रतिवस्तूपमातो भेदः । न चात्रोपमा । यथेवादिशब्दाभावात् । नाप्यर्थान्तरन्यासः । सामान्यविशेषभावाभावात् । दृष्टांतपदयोगमाह—दृष्ट इति । गृहीतप्रामाण्यक इत्यर्थः । निश्चयः । दार्ष्टांतिकवाक्यार्थनिश्चयः । दृष्टांतवाक्यार्थे गृहीतसहचारेण दार्ष्टांतिकार्थप्रामाण्यनिश्चयात् । त्वयीति । (नायिकासख्या नायकं प्रत्युक्तिः ।) दृष्ट एव दृष्टमात्रे । तस्या मालविकाया (?) । (निर्वाति उच्छ्वसिति । प्रसन्नं भवति । आर्या छन्दः ।) अत्र पद्ये त्वयीत्यत्र सप्तमीनिर्देशाद्धिमांशो-

---

प्रभाः—तीति निर्वाणविकसनयोर्भेदेऽपि सादृश्याद्बिम्बप्रतिबिम्बरूपता । प्रतिवस्तूपमायां तु शुद्धसमानधर्म एवेति भेदः । न च यथा हिमांशोरालोके कुमुदं विकसति तथा त्वयि दृष्टे तस्या मनः प्रसीदतीत्युपमां विना पूर्वापरार्धयोरसंबन्धान्निदर्शनात्वमाशङ्कनीयम् । निदर्शनायां समानधर्मानुपादानेनार्थबलमात्रप्रयुक्तत्वादुपमाकल्पनायाः इह तु बिम्बप्रतिबिम्बभावापन्नधर्मवशेनेति भेदात् । विपर्यय इति । वाते तु नेति

**( ३२ ) सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।**
**सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥ १७ ॥**

प्राकरणिकाप्राकरणिकानाम् ( अर्थात् ) उपमानोपमेयानाम्, धर्मः—

## 15 DĪPAKA.

That is 'Dipaka' (1) where there is the presentment *once and once only* of the property of what in essence are the matter under consideration and matter not under consideration, (2) and where the same (i e. presentment once) takes place in the case of a word standing in (identical) case-relation to many actions

*Gloss* —Where there is stated only once the property like action, of the matter on hand and of that not on hand—i. e of course, of the

**प्रदीपः**—सकृदिति । प्रकृताप्रकृतात्मनामर्थादुपमानोपमेयभूताना धर्मिणां धर्मस्य क्रियादेः सकृद्वृत्तिरेकवारमेवोपादान यत्तदेकम् । एकस्थस्यैव सर्ववाक्यदीपकत्वेन प्रदीप

**उ०ः**—रित्यत्र षष्ठीनिर्देशाच्च मनोभवज्वलितप्रतिनिर्देशस्य रविकिरणज्वलितत्वस्यानुक्तया न्यूनत्वाच्चासङ्गतमिद पद्यम् । अत्र नृपचन्द्रयोर्नायिकाकुमुद्वत्योर्मन कुसुमयोर्मनोभवज्वलितसूर्यकरज्वलितयो निर्गाणप्रकाशयोश्च बिम्बप्रतिबिम्बभाव । कुमुद्वत्या कुसुमस्य हिमांशुदर्शने विकास इव तस्या मनसस्त्वद्दर्शने उच्छ्वास इति प्रतीयमानोपमाया मन कुसुमयोर्बिम्बप्रतिबिम्बभावापन्नयो साधारणधर्मत्वम् । अत्र नृपदर्शनमनोभवज्वलितप्रकाशयो कार्यकारणभावनिश्चयो 'यद्यदन्वयानुविधायि तत्तज्जन्यम्' इति व्याप्त्या दृष्टान्तगृहीतसहचारनिश्चयप्रयुक्तया भवतीत्यर्थगति । न च हिमांशोरालोके यथा कुमुद्वतीकुसुम विकसति तथा त्वयि दृष्टे तस्या मनो हृष्यतीति उपमा विना पूर्वोत्तरार्धयोरसम्बन्धान्निदर्शनामस्त्र । तत्र साधारणधर्मानुपन्यासात् । अत्र वाक्यार्थयो स्वस्वार्थे निरपेक्षत्वात् । निदर्शनाया तत्रापि सापेक्षत्वाच्च । **वैधर्म्येण** । विपर्यये साधर्म्यपर्यवसायिना । **तवेति** । आहवे युद्धे । साहसकर्मण सकाशात् शर्म यस्य । (कृपाण खड्ग । भट्टा योद्धार ।) विशारास्ताम्

**प्रभाः**—विपर्यय इत्यर्थ । इति दृष्टान्तप्रकरणम् ॥ १४ ॥ अर्थादिति । प्रकृताप्रकृतधर्मैक्ये प्रकृतिसामर्थ्यादित्यर्थ । प्रदीपसाम्यादिति । तथा च दीप इवेतीवार्थ

क्रियादिः, एकवारमेव यत् उपादीयते, तत् ( एकस्थस्यैव समस्तवाक्यदीपनात् ) दीपकम् । यथा—

> किवणाणँ धण णाआणँ फणमणी केसराइँ सीहाण ।
> कुलवालिआणँ त्थणआ कुत्तो छिप्पन्ति अमुआण ॥ ६६ ॥ (—)

कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिर्दीपकम् । यथा—

Upamana and the Upameya,—there results 'Dipaka,' so called because (the property) standing in one place illuminates the whole sentence

*To illustrate* —

The wealth of misers, the jewel in the hood of cobras, the mane of lions, the breasts of maidens of (good) family,—how can they be touched unless they (*i e the possessors*) are dead ? (66)

That is again Dipaka when there is presentment once of a word in a particular case relation to many actions To illustrate —

**प्रदीपः**—साम्यात् । कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिरेव द्वितीयं दीपकम् । इतिशब्दः प्रकारे । तेनोक्तप्रकारद्वयवद्दीपकमित्यर्थः । आद्यं यथा—**किवणाणमिति** । अत्र छिप्पन्तीति सकृदुपात्तम् । कुलपालिकानां स्तना उपमेयाः । अन्त्यं यथा—**स्विद्यतीति** । अत्र वधूरिति

**उ०ः**—झटिति नश्वरताम् । ( अणु प्राणु । अवाते निर्वातदेशे । पांसवः रजांसि । वंशस्थं वृत्तम् । ) **वैधर्म्यविपर्यये** । वाते तु न तथेत्येवंरूपे । अत्राऽऽहत्य वातसन्निधिभङ्गुरत्वास्थिरत्वयोरुपमानोपमेयभाव इति दिक् । **इति दृष्टांतः । अर्थादिति** । प्रकृताप्रकृतयोः सजातीयधर्मसम्बन्धस्योपमायां पर्यवसानात् । सा च व्यङ्ग्यैव वाचकविरहात् । व्यङ्ग्याया अप्यस्या वाच्योपकारकत्वात् गुणीभूतव्यङ्ग्यत्वमेव । न तु ध्वनित्वम् । अतोऽत्र नोपमाशङ्का । **क्रियादेरिति** । आदिना गुणादिसंग्रहः । **एकस्थस्येति** । एकत्र तिष्ठति तस्येत्यर्थः । **साम्यादिति** । दीप इव दीपकम् । संज्ञायां कन् । प्रकृताप्रकृतप्रकाशकत्वेन च सादृश्यम् । **किवणाणमिति** 'कृपणानां धनं नागानां फणमणिः केशराश्च सिंहानाम् । कुलपालिकानां च स्तनाः कुतः स्पृश्यन्तेऽमृतानाम् ॥' ( कुलपालिकानाम् कुलवधूनाम् । अमृतानाम् । सचेतनानाम् । एतत् कृप-

**प्रभाः**—कन् । सैवेति व्याचष्टे—**सकृद्वृत्तिरेवेति** । **किवणाणँ इति** । 'कृपणानां धनं नागानां फणमणिः केसराणि सिंहानाम् । कुलपालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम् ॥' स्पर्शाक्षमत्वं धर्मः सकृदुपात्त उपमाकल्पकः । चन्द्र इव मुखं मनोज्ञ-

स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक्।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥ ६७ ॥ (—)

## ( ३२ ) मालादीपकमाद्यं चेद्यथोत्तरगुणावहम् ।

पूर्वेण पूर्वेण वस्तुना उत्तरमुत्तरं चेदुपक्रियते, तत् मालादीपकम्। यथा—

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते ।
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ॥

The newly-married bride, while in bed, perspires, whimpers, rolls about, turns away, winks, looks obliquely, exults inwardly and (lastly) wishes to kiss. (67)

### 16. MĀLĀ-DĪPAKA.

If each preceding thing makes a contribution (गुणावह) to each succeeding one, it is 'Mālā-Dīpaka.'

*Gloss*—That is 'Mālā-Dīpaka' if each succeeding thing is served by each preceding one. To illustrate—

When you arriving on the arena of the battle strung the bow, O king, hear what different things were at once got by what others·

प्रदीपः—कारकस्य सकृद्वृत्ति.। मालेति। गुणावहमुपकारकम्। यथा—संग्रामेति।

उ०ः—णानामित्यादिभिरन्वेति। गाथा मुखविपुला।) उपमेया इति। प्रकृतत्वात्। अन्येषां तूपमानत्वम्। अत्र तत्तदुपमानैः प्रत्येकमौपम्यप्रतीतिः। अत्र क्रिया साधारणधर्मः। गुणो यथा। 'स्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपंक्तिभिः। भुवश्च सुकुमाराभिर्नवशाद्वलपंक्तिभिः॥' इति। यत्तु 'वर्षत्यंबुदमालेयं वर्षन्येषा च शर्वरी। उन्मीलन्ति कदंबानि स्फुटन्ति कुटजोद्गमाः॥ माद्यति चातकास्तृप्ता माद्यन्ति च शिखावलाः।' इत्यादावावृत्तिदीपकम्। क्वचिच्छब्दस्यार्थस्योभयोर्वा आवृत्तेरिति। तन्न। धर्मस्य सकृदुपादानाभावात्। प्रकृताप्रकृतोभयावृत्तित्वाच्च। एवं च वा-

प्रभाः—मित्यादावुपमावारणायोपमाकल्पकत्वं धर्मविशेषण बोध्यम्। स्विद्यतीति। स्वेदः सात्विको भावः। कू(क)णत्यालिङ्गनोद्यते प्रिये मृदुशब्दविशेष करोति। वेल्लत्यङ्ग सङ्कोचयति। विचलति परिवृत्य शेते। निमिषति त्रपा नेत्रे मुद्रयति। इच्छति न तु करोतीत्यर्थः। अत्र यद्यपि सर्वक्रियाणां प्रकृतत्वमेव न वा तासामुपमानोपमेयत्वावगमः। तदभ्युपगमे वा तुल्ययोगितैवोचिता न तु दीपकं तथाप्येतद्भिन्नमेव पूर्वस्माद्दीपकाद्विवक्षितम्। उभयानुगतमन्यतरत्वं चैकं लक्षणमिति तात्पर्यम्। केचित्तु—

**उ०ः**–चक्रकृसोपमैवेत्याहु प्रकाशानुसारिण । **अंत्यम्** । बह्वीषु क्रियासु कारकस्य सकृद्वृत्तिरित्येतत् । 'कारकस्य क्रियासु' इत्युक्त्या क्रिया तिङन्तादिवाच्याऽसत्त्वभूता गृह्यते । असत्त्वभूतायाश्चोपमानत्वाभाव सन्सूत्रे भाष्ये 'न वै तिङन्तेनोपमानमस्ति' इति ग्रथेन प्रतिपादित इति । अत्रोपमानोपमेयभावाप्रतीति, पूर्वस्मिंस्तु तत्प्रतीतिरिति भेद । एककर्तृकत्वादिधर्मकृतसादृश्यस्याचमत्कारित्वाच्च । इद च प्रकृतानामेव अप्रकृतानामेव प्रकृताप्रकृताना च । अनेकचमत्कारिक्रियावैशिष्ट्येन वर्ण्यकारकोत्कर्षसत्तया चमत्कारित्वेनास्यालङ्कारत्वम् । एतेन दीपके सर्वत्रौपम्यस्य गम्यत्वादस्य दीपकत्व चिन्त्यम् । स्विद्यतीत्युदाहरणे क्रियाणा सादृश्यागतावपि सर्वासा प्रकृतत्वात्कारकतुल्ययोगितात्वमेवोचितमिति च परास्तम् । तुल्ययोगिता त्वौपम्यगर्भैवेति वक्ष्यते । **स्विद्यतीति** । स्वेद सात्त्विको भाव । दयिते परिरम्भोद्यते कूणति मृदुशब्द करोति । ततोऽप्यनिवर्तिनि वेल्लति सकोचमालम्बते । विचलति परिवृत्य शेते । निमिषति मृषा नेत्रे मुद्रयति । अत नवोढात्वेन बहिरप्रकाशात् । चुम्बितुमिच्छति न तु चुम्बति । (गीतिश्छन्द ।) अत्र **वधूरिति** । शयने इत्यपि बोध्यम् । **यथोत्तरेति** । अस्य वीप्सितत्वादाद्यमित्यत्रापि वीप्सा बोध्या । **संग्रामेति** । खण्डप्रशस्तौ पद्यमिदम् । सग्रामरूपागणगतेन । निर्भयसचरणीयत्वेनागणता । चापे समारोपिते ज्याविशिष्टे कृते इत्यर्थ । (शार्दूलविक्रीडित छन्द ) । अभवन्मतयोगदोषपरिहाराय सप्राप्ते इत्यादि पाठातरकल्पनम् । आसादितमिति नपुसकानपुसकयोरेकशेष एकवत्त्व च । अत्र कोदण्डेनारिशिर प्रापयता शरा उपक्रियते, शरैरपि

**प्रभा**–प्रकृताप्रकृताना सकृद्धर्मोक्तिर्दीपकमित्येव लक्षणम् । क्रियाणा प्रकृताप्रकृताना यत्रैककारकान्वयस्तत्राप्येतल्लक्षणान्तर्गतत्वमेव । यथा—'वसु दातु यशो धातु विधातुमरिमर्दनम् । त्रातु च मादृशान् राजन्नतीव निपुणो भवान् ॥' अत्र वसुदानस्वत्राणरूपयो प्रकृतयो क्रिययोररिमर्दनयशआधानयोश्चाप्रकृतयोरेकस्य नृपरूपकारकस्यान्वय इति पूर्वलक्षणाक्रान्तत्वेन दीपकान्तरमङ्गीकर्तव्यम् । स्विद्यतीत्यादौ सर्वक्रियाणा प्रकृतत्वे तु तुल्ययोगितेत्याहु । **सङ्ग्रामेति** । सप्राप्त इत्यादिपाठान्तरकल्पन सप्तमोक्तदोषवारणाय । अत्र कोदण्डस्य प्रक्षेपणाख्यशरोपकारहेतुत्व शराणा चारिशिरसो भूमण्डलप्राप्तिरूपोपकारहेतुत्व शिरसश्चोत्तमस्वामिलाभरूपभूमण्डलोपकारहेतुत्व भूमण्डलेन कीर्तिमासादयता नृपोपकारकरण नृपेण च कीर्तेर्लो-

कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥ ६८॥ (—)
(Cited in सरस्वतीकण्ठाभरण. १.)

## (३४) नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ॥ १८ ॥

नियतानां प्राकरणिकानामेव अप्राकरणिकानामेव वा । क्रमेणोदाहरणम्—

by the bow, the arrows; by the arrows, the head of the foe; by it (i. e. head) too, the globe of earth; by that (i. e. globe of earth), yourself, by yourself again, incomparable fame, and by fame, the three worlds. (68)

### 17. TULYAYOGITĀ.

While the property, (stated) once, of specific things, is what constitutes 'Tulyayogitā.'

*Gloss*:—Specific i. e. only such as are under consideration, or only such as are not so. Instances in order:—

प्रदीपः—स्पष्टम् । मालोपमादीनां बहूपमानसम्बन्धात्मापरो विशेष इति न ते लक्षिता. । इह तु पृथग्लक्षितम् । उत्तरोत्तरमुपकार्योपकारकतया परस्परसंसर्गेण मालाभावमापन्नानां सकृद्धर्मनिर्देशरूपत्वेनाधिकविशेषानुप्रवेशादिति । **नियतानामिति** । नियताना प्राकरणिकानामेव अप्राकरणिकानामेव वा । धर्म इत्यनन्तरं 'यदुपादीयते' इति शेषः । सकृत्पदो-

उ०:—भूमण्डल प्रापयद्भिररिशिरः, शिरसाऽपि सत्वायकं त्वा लंभयता भूमंडलं, भूमंडलेन च कीर्तिमासादयता नृपतिः, नृपेणाऽपि त्रैलोक्यं व्यापयता कीर्तिः, इति पूर्वपूर्वेभ्यः परस्य परस्योपकारः । एकस्या आसादनक्रियायाः संबंधाद्दीपकता । अत्र शरादीनामरिशिरःप्रभृतीनां च सादृश्यमपि व्यंग्यम् । **इति दीपकम् । प्राकरणिकानामेवेति** । एवं च प्राकरणिकाप्राकरणिकोभयावृत्तित्वे सति औपम्याक्षेपकत्वं लक्षणम् । सत्यंतेन दीपकव्युदासः । न चाक्षेपलभ्यमाम्ये व्यतिरेकभेदेऽतिव्याप्तिः । तत्रोपमेयाधिक्यकृत एव चमत्कारः न तु साम्यप्रतीतिकृत इति विशेषात् । उपमेयानाधिक्येन विशेषणान्न दोष इत्यन्ये । औपम्यं चात्र गम्यम् । तत्प्रयोजकसमानधर्मोपादानात् । वाचकाभावाच्च । धर्मवाचकपदैस्त-

प्रभाः—कत्रयव्यापनाद्योपकारजन(न) मित्यवगन्तव्यम् । इति दीपकप्रकरणम् ॥ १५ ॥
**नियतानामिति** । प्राकरणिकाप्राकरणिकोभयावृत्तिधर्मस्य सकृदनेकान्वयित्वं तुल्ययोगित्वेत्यर्थः । प्रतिस्वं प्रत्येकम् । यथा युगं विरचितस्मितमित्यादौ ।

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥ ६९ ॥ (—)

कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का ।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाननस्य ॥ ७० ॥ (—)

(३५) उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ।

अन्यस्योपमेयस्य व्यतिरेक आधिक्यम् ।

---

Your pale, lean face, your passionate heart, and your sluggish body, very much betray, O friend, the chronic (क्षेत्रिय) disease inside the heart (69)

Of what worth is a row of lotuses, white, red and blue, *vis a vis* your eyes possessing graceful charms? The nectar, the moon, and the lotus, *vis a-vis* your face, get beaten at once (70)

## 18 VYATIREKA

Where there is the transcendence above the Upamāna of the other, the figure too is named as such ('*Vyatireka*' i e transcendence)

*Gloss* —Of the other, i e of the Upameya Vyatireka i e transcendence.

---

प्रदीपः—यदानायत्र प्रतिस्व भिन्ना धर्मा एकस्यैव वा सर्वेनोपादानं तत्र नातिप्रसङ्गः । तत्र प्राकरणिकानामेव यथा—पांडुयिति । अत्र प्रकृताना विरहिणीवदनादीनामेव धर्मत्वेनाऽऽवेदनाख्यो धर्म उपात्त । न तूपमानरोगधर्मतया । अप्राकरणिकानामेव यथा—कुमुदेति । अत्र कामिन्या वर्णनीयत्वादप्राकरणिकाना कुमुदादीनामेव धर्मतया पूर्वार्धे कापदव्यङ्ग्योऽधिक्षेप उत्तरार्धे प्रतिहतत्व चोपात्तम् । उपमानादिति । अन्यस्योप-

---

उ०ः—तद्रूपेण धर्मभानेऽपि सादृश्यत्वरूपेणाभानात् । पांडुविति । क्षाम कृश सरस सानुरागमन्तरससहित च । अत एव अलस बाह्यक्रियायामक्षमम् । नितान्तमित्यतिशयार्थक सर्वान्वयि । क्षेत्रियो देहान्तरे चिकित्स्यो देहपर्यन्तस्थायीति फलति । (आर्या छन्द ।) प्रकृतानामिति । विरहानुभावत्वेनेत्यर्थ । वदनादीनाम् । पाडुत्वादिविशिष्टानाम् । न तूपमानरोगेति । उपमानरोगज-

---

प्रभाः—एकस्यैव चेति । यथा—'दधि मधुरं मधु मधुरं द्राक्षा मधुरा सुधापि मधुरैव । तस्य तदेव हि मधुरं यस्य मनो यत्र सलग्नम् ॥' इत्यादावित्यर्थ । रस शृङ्गारोऽमरसश्च । क्षेत्रियोऽचिकित्स्यो राजयक्ष्माख्य । न तूपमानेति । विप्रलम्भेऽपि (उप)-मानभूतरोगधर्मतयेत्यर्थ । इति तुल्ययोगिताप्रकरणम् ॥ १६ ॥

क्षीण· क्षीणोऽपि शशी भूयो भूयो विवर्धते नित्यम्।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥ ७१ ॥

( Cited in रुद्रट's काव्यालकार, ७ ९० )

After it has waned and waned, the moon still waxes time and again while youth, once past, never reverts. Have done with it (i e. pride) Be reconciled, O beautiful lady! (71)

प्रदीपः–मेयस्य। व्यतिरेको विशेषेणातिरेक आधिक्यम्। स एव। व्यतिरेक एव। कश्चित्तु—"यत्रोपमेयादुपमानस्य उपमानादुपमेयस्य वा आधिक्यं स व्यतिरेक इति

उ०ः–पाडुतादीत्यर्थ। 'अत्रावेदनक्रियया विरहरोगयोरौपम्यप्रतीति। वर्ण्यनायिकासबंधित्वेन विरहरोगयो प्राकरणिकत्वम्। अचिकित्स्यत्वरूप क्षेत्रियत्व साधारणो धर्म' इत्यन्ये। अत्र क्रियारूपधर्मैक्यम्। कुमुदेति। (कान्ता प्रति कस्यचिदुक्ति।) प्रसादे कुमुदसाम्यम्। माने (रक्त) कमलसाम्यम्। प्रकृतदशाया नीलनीरजसाम्यम्। ललितो मनोहर। विलास कटाक्ष। प्रतिहत निर्जितम्। एकपदे युगपत्। आननस्येत्यस्य 'अग्रे' इति शेष। (पुष्पिताग्रा छन्द।) अधिक्षिप्तत्वेन प्रतिहतत्वेन च तेषां परस्पर साम्य प्रतीति। अत्र साम्यप्रतीतावपि तान्मात्रकृतो न चमत्कार। किं त्वेकधर्मान्वयकृतोपि। अतो गम्योपमया न निर्वाह। 'जगाल मानो हृदयादमुष्या विलोचनाभ्यामिव वारिधारा' इत्यत्र न तुल्ययोगिता। सादृश्यप्रतीत्यैव चमत्कारात्। 'चद्र इव सुदर मुखम्' इत्यत्र च न दीपकम्। एवं 'प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया' इत्यत्रापीयमेव। प्रदीयते पराभूतिरिति शब्दस्य श्लेषमूलकाभेदाध्यवसायेनाभिन्नीकृततदर्थस्य वा धर्मस्यैक्यात्। तादृशधर्मेण तयो साम्यप्रतीतौ हिताहितविषयतुल्यकर्तृत्वरूप व्यग्यं वाच्यराजोत्कर्षकतया गुणीभूत प्रतीयते इत्यन्यत्। नैतावताऽस्य तुल्ययोगितातरत्व वक्तु युक्तम्। 'लोकपालो यम पाशी श्रीद शक्रो भवानपि' इत्यत्र तु उक्तं दीपकमेवेति दिक्। इति तुल्ययोगिता। आधिक्यम्। गुणविशेषकृत उत्कर्ष। स एवेति। योगेनैव लक्षणलाभात् न व्यतिरेकनामालंकार

प्रभाः–विशेषेणेति। तेन मुखमिव चन्द्र इति प्रतीपे उपमानीकरणप्रयुक्तस्याधिक्यस्य गम्यत्वे विशेषनस्तद्बोधकशब्दाभावान्नातिव्याप्ति। स एवेति। न तूपमेयादुपमा-

इत्यादावुपमानस्योपमेयादाधिक्यमिति यत् केनचिदुक्तम्, तदयुक्तम्। अत्र यौवनगताऽस्थैर्याधिक्य हि विवक्षितम्।

**( ३६ ) हेत्वोरुक्तावनुक्तीनां त्रये, साम्ये निवेदिते ॥ १९॥**
**शब्दार्थाभ्यामथाक्षिप्ते, श्लिष्टे तद्वत् त्रिरष्ट तत्।**

---

In cases like this, some have asserted that there is the transcendence of the Upamana above the Upameya That is improper Since here what is intended to be driven at is the transcendence in the matter of the instability of youth.

It (i e. the figure) is possible in varieties numbering thrice eight (i e 24) 1 when the two reasons are stated 2-4 in three cases of non statement,–the similarity being conveyed (I) by Expression or (II) by Implication, or (III) being suggested (4 × 3 = 12), likewise when it (i e similarity is based on Paronomasia (4 × 3 = 12) (12 + 12 = 24)

---

प्रदीपः – लक्षणम्। कथमन्यथा—क्षीण इत्यादिसमह । अत्र ह्युपमानभूतस्य शशिन उत्कर्ष । क्षैण्येऽपि पुनर्वृद्धे " इत्याह। तन्न युक्तम्। अस्थैर्य हि तस्योपमानता। तदाधिक्य चोपमेये यौवन एवात्र विवक्षितम्। तस्मादुपमानस्योत्कर्षे व्यतिरेक इति रिक्त वच । एव विभ-

---

उ०: – इत्यर्थ । उपमानादित्युक्ते 'कुसुदादतिरिच्यते मुखम्' इत्यादौ नायमलकार । ( **क्षीण इति** । विरम । 'अभिमानात्' इति शेष । अभिमान त्यजेत्यर्थ । प्रसीद । प्रसन्ना भव । अनिवर्ति न प्रत्यावर्तते । यातम् गतम्। आर्या छन्द ।) **पुनर्वृद्धेरिति** । यौवन तु न तथेति उपमेयस्य न्यूनतेत्यर्थ । **अस्थैर्ये हीति** । अय भाव । न ह्यत्र चन्द्रयौवनयो सादृश्यम्। किं तु तत्क्षययो । तत्र चन्द्रक्षयस्य वृद्धिबाध्यतया न्यूनत्वम्। यौवनक्षयस्य त्वबाध्यतयाधिक्यम् । मानप्रसादनानुगुणतया प्रकृतवाक्यार्थानुगुणत्वात् इति । अस्थैर्यं क्षय । एव ह्यत्र वाक्यार्थ—चन्द्रो हि पुन पुनरागमनेन लोके सुलभोऽतो न तादृशमाहात्म्यशाली । इद पुनर्यौवनमपुनरागमेनातिदुर्लभमिति मानादिभिरतरायैर्विदग्धया भवत्या मुधा गमयितु न साम्प्रतमिति । अन्यथा 'कि-मिति अस्य चन्द्रस्य यौवनस्य कृते मया मानादिरस्यते यातु नाम यौवनम्' इति

---

प्रभा :– नस्य व्यतिरेकोऽपीत्यर्थ । एतदेव दूषयितुमुपन्यस्यति—यश्चित्त्विति। अत्रानुपादानेति । श्लेषस्थलेऽनुपादानत्रयमित्यर्थ । साम्यस्य श्रौतत्वे आर्थत्वे आक्षि

व्यतिरेकस्य हेतुः उपमेयगतमुत्कर्षनिमित्तम्, उपमानगतमपकर्षकारणम्, तयोर्द्वयोरुक्तिः, एकतरस्य द्वयोर्वा अनुक्तिरित्यनुक्तित्रयम्, एतद्भेदचतुष्टयमुपमानोपमेयभावे शब्देन प्रतिपादिते; आर्थेन च क्रमेणोक्ताश्चत्वार एव भेदाः, आक्षिप्ते चौपम्ये तावन्त एव; एवं द्वादश। एते श्लेषेऽपि भवन्तीति चतुर्विंशतिभेदाः। क्रमेणोदाहरणम्—

---

*Gloss*:—The reason of transcendence, i. e. (a) the cause of the superiority of the Upameya; & (b) the cause of the inferiority of the Upamāna: (1) the statement of them both; Three cases of non statement viz. (1–2) non-statement of either or (3) of both. These four varieties when the Upamāna-Upameya relation is conveyed by Expression. (5–8) By the process of Implication of similarity the same four varieties afore-mentioned. (9–12) And when the similarity, is suggested as many varieties. Thus twelve. (12–24) These become possible with Paronomasia also. Hence *twenty four* varieties in all Instances in order.—

---

प्रदीपः—जते—हेत्वोरिति। व्यतिरेकस्य द्वौ हेतू। उपमेयगतमुत्कर्षनिमित्तमुपमानगतमपकर्षनिमित्तं च; तयोर्द्वयोरप्युपादानमित्येकः प्रकारः। अनुपादाने तु त्रयो भेदाः। प्रथमस्यैव द्वितीयस्यैव उभयोरपि वा हेत्वोरनुपादानात्। तदेव चत्वारो भेदाः। ते च प्रत्येकं त्रिधा। साधर्म्यस्य क्वचिदिवादिना शब्दशक्तेः प्रतिपादनात्। क्वचित्तुल्यादिशब्देनार्थशक्त्या। क्वचिदुभयाभावेऽप्याक्षेपेणेति द्वादश भेदाः। ते च प्रत्येकमश्लिष्टे श्लिष्टे च शब्दे इति चतुर्विंशतिभेदाः स इत्यर्थः। तत्राश्लिष्टभेदेषु हेत्वोरुक्तौ शाब्दे साम्ये यथा—

---

उ०:—प्रतिकूलेनार्थेन प्रकृतार्थस्यापुष्टतापत्तेः। प्रियहितकारिण्या दूत्या हीदं वचनम्। एतेन 'रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणैस्त्वामायाति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि। कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः॥' इत्यत्रोपमेयन्यूनतापर्यवसायी व्यतिरेक इत्यपास्तम्। सशोकत्वेन तद्गम्यचेतनत्वसहृदयत्वादिभिर्गुणाधिक्यस्यैव सत्त्वात्। न च न्यूनत्वपदेनापकर्षो विवक्षितः। स च शोकस्य स्वरूपेणापकृष्टत्वादस्त्येव। वाच्यार्थबोधकालिकोत्कर्षापकर्षयोरेव तदलंकाररूपत्वादिति वाच्यम्। प्रकृतवाक्यार्थानुगुणधर्मवत्त्वस्यैवाधिक्यपदार्थत्वात्। 'परमचेतनत्वमेव सम्यक् न पुनः प्रियावियोगादिजन्यशोकास्पदं चैतन्यादि' इति पर्यवसानेन तस्य प्रकृतवाक्यार्थभूतविरहानुगुणत्वात्। अत एव प्रियावियोग-

असिमात्रसहायस्य प्रभूतारिपराभवे ।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः ॥ ७२ ॥ (—)

अत्रैव तुच्छेति महाधृतेरित्यनयोः पर्यायेण युगपद्वाऽनुपादानेऽन्यत् भेदत्रयम् । एवमन्येष्वपि द्रष्टव्यम् । अत्र इवशब्दस्य सद्भावाच्छाब्दमौपम्यम् ।

असिमात्रसहायोऽपि प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत्सगर्वोऽयं महाधृतिः ॥ ७३ ॥ (—)

In the event of the defeat of a host of enemies, hauteur does not affect this (king) of supreme courage, whose sole helper is his sword, as it does other lay persons (72)

In this very instance, three more varieties become possible, according as 'Tuccha' and 'Mahā-dhrteh' are dropped, each one in turn or both simultaneously *The same holds good in other instances (i e of implied or suggested or paronomastic similarity) also Here the similarity is expressed owing to the presence of the word* 'Iva.

*Though, the sword be his sole helper, he, in the event of the defeat of a host of enemies is not affected by pride like other lay men, possessed of great courage as he is.* (73)

**प्रदीपः** – असीति । अत्रोपमाने तुच्छत्वमुपमेये महाधृतित्वं च हेतुः । इवशब्दसत्त्वाच्च शाब्दमौपम्यम् । अत्रैव तुच्छत्वमात्रस्य महाधृतित्वमात्रस्य वा द्वयोरपि वा क्रमेणानुपादाने हेत्वनुपादानभेदत्रयेऽपि शाब्दौपम्यभेदत्रयं द्रष्टव्यम् । हेतुद्वयोपादान एवाऽऽर्थसाम्ये यथा— असिमात्रसहायोऽपीति ।

उ० : – यदपि तुल्यमित्यर्थक्रमाश्रयो सर्ने तुल्यमिति वाक्यं चरितार्थम् । एतेनोपमालङ्कारदूरीकरणमेवात्र चमत्कारि । रसाद्यनुकूलतया कुत्रचिदङ्गात् भूषणापसरणमिव रसानुसारेण क्वचिदलङ्कारवियोगोऽपि शोभावह इति ध्वनिकृदुक्तमनुसन्धेयम् । एवं 'हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः' (नैषधकाव्ये नवमसर्गे १२३ पद्यम्). इत्यत्र नलमहीपतेः स्वनिन्दया लब्धनिर्वेदानिशापरूपप्रदर्शनावसरे दूषणत्वन्यूनतायाः एवानुगुणत्वेनाभिव्यञ्जकत्वात् । एवं 'न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः । तथापि जितमेवासीदमुना भुवनत्रयम् ॥' इत्यादावपि कठोरतीक्ष्णत्वरहितस्य भुवनत्रयजये

अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम् ।

> इयं सुनयना दासीकृततामरसश्रिया ।
> आननेनाकलङ्केन जयतीन्दुं कलङ्किनम् ॥ ७४ ॥ (—)

---

Here the affix 'Vat' is used in the sense of 'Tulya'. Hence the similarity is implied.

This lady possessing lovely eyes excels, with her spotless face that has vanquished (lit. enslaved) the beauty of the red lotus, the spotted moon. (74)

---

**प्रदीपः**—अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम् । अत्र पूर्ववदनुपादानभेदनय द्रष्टव्यम् । हेत्वोरुक्तावेवाक्षिप्ते साम्ये यथा—**इयमिति** । अनाकलङ्कित्वकलङ्कित्वे हेतू समुपात्तौ । इवादीनां तुल्यादीनां चाऽभावादाक्षिप्तमौपम्यम् । अत्रैव हेत्वनुपादाने भेदनय पूर्ववत् द्रष्टव्यम् । न चाक्षिप्तभेद उपमाया शङ्कनीय । जयत्यादिशब्दस्यावश्यकतया व्यतिरेकेण

---

**उ० :**—उत्कर्षातिशयप्राप्त्याऽभावरूपविशेषणस्याप्याधिक्यमात्रसंपादकत्वान्न दोष इत्यलम् । **असीति** । (असिरेव सहायो यस्य । प्रभूता येऽस्य तेषां परा भवे सति । स्मय गर्वे ।) मात्रेण सहायान्तरव्यवच्छेद । स्मयाभावोऽत्रोत्कर्षपर्यवसायितयाधिक्यरूप । अत्र प्रतीयमानमपि सादृश्य गुणान्तरकृतस्वनिषेधोत्थापितेनोत्कर्षेण तिरस्कृतमिति तत्तिरस्कारकतयाऽस्य चमत्कारातिशयजनकत्वम् । तिरस्कार्यतयौपम्यगर्भत्वव्यवहारोऽत्रेति बोध्यम् । आधिक्यवर्णनाभावे सादृश्य पर्यवस्यतीत्येतावता तद्गर्भत्वव्यवहारात् । एतेनैकगुणपुरस्कारेण सादृश्य निषेधे गुणान्तरेण सादृश्यप्रत्ययस्य दुर्वारत्वादुपमागर्भत्वमस्येत्यपास्तम् । किं चान्यधर्मेण प्रसिद्धसादृश्यस्यैतद्दशाधिक्यप्रतिपादनद्वाराऽभावस्यापर्यवसानस्य वा प्रतिपादनम् । स चाविशेषात्सर्वधर्मप्रयुक्त एवेति तदप्ररोहात् । 'मयं तुल्याम चल्याऽपि पङ्कजम्' इत्यादौ सर्वथैव सादृश्यनिषेधाच्च । 'देवदत्तेन सदृशो यज्ञदत्त किं तु धनमस्याधिकम्' इत्यादौ उत्कृष्टविद्यादित्वेन प्रसिद्धदेवदत्तेन विद्यादिकृतसादृश्यं प्रतीयमानमप्यपकृष्टमिति दिक् । **क्रमेणेति** । 'नूनमन्यजनस्येव' इति 'न स्मयोऽस्य महीपते' इति च पाठे इत्यर्थ । **आक्षिप्ते इति** । व्यंग्ये इत्यर्थ । (इयमिति ।) दासीकृता पद्मश्रीर्येन तेनाकलङ्केनाननेनेत्यन्वय । **अत्रैवेति** । 'आननेन मनोज्ञेन' इति 'जयत्यमृतदीधितिम्' इति च पाठे

अथेवादि-तुल्यादि-पदविरहे आक्षिप्तैवोपमा ।

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः ।
अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः ॥ ७५ ॥ (—

अत्रेवार्थे वतिः । गुणशब्दः श्लिष्टः । शाब्दमौपम्यम्

अखण्डमण्डलः श्रीमान्पश्यैष पृथिवीपतिः ।
न निशाकरवज्जातु कलावैकल्यमागतः ॥ ७६ ॥ (—)

अत्र तुल्यार्थे वतिः, कलाशब्दः श्लिष्टः ।

---

Here, the Upamā is of course suggested in the absence of words such as 'Iva' or 'Tulya.'

The virtues (by Śleṣa, fibres) of this (king), who earnestly serves those advanced in learning owing to his having subdued the senses, and whose excellences are too profound, are not perishable like those (i e fibres) of the lotus. (75)

Here 'Vat' is used in the sense of 'Iva' The word 'Guna' is paronomastic. The similarity is 'Expressed'

Behold! This glorious king, the circle of whose allies is undisrupted (by Śleṣa, with the full orb), has never suffered a depletion of arts (by Śleṣa, digits) like the moon (76)

Here 'Vat' is used in the sense of 'Tulya The word 'kala' is paronomastic

---

प्रदीपः – विषयापहारात् । अथ श्लिष्टभेदेषु हेत्वोरुभयोः शाब्दमौपम्यं यथा-जितेन्द्रियेति । अत्र श्लिष्टो गुणशब्दः । तदर्थस्यातिगाढत्वभङ्गुरत्वे च हेतू समुपात्ते । इवार्थे वतिरिति शाब्दमौपम्यम् । अत्रैव पूर्ववदनुपादाने भेदत्रयं द्रष्टव्यम् । तत्रैवाऽऽर्थे साम्ये यथा-अखण्डेति । अत्र कलाशब्दः श्लिष्टः । कलावैकल्यतदभावौ हेतू इत्योपात्तौ । तुल्या

उ० : – इत्यर्थः । जितेति । विद्यावृद्धाः पण्डिताः । विद्या च वृद्धाश्चेति वा । अतिगाढो विरोधिसहस्रैरप्यनुच्छेद्यः गुणो धैर्यादिर्यस्य । (भङ्गुरा नश्वराः ।) गुणाः पण्डितत्वादयस्तन्तवश्च । पूर्ववदिति । 'सत्कर्मनिरतस्यास्य' इति 'न तामरसतन्तुणा' इति च पाठे इत्यर्थः । अखंडेति । मण्डलं राजचक्रं बिम्बं च, श्रीः सम्पत्तिः शोभा च, कला कौशलं चन्द्रषोडशांशश्च । जातु कदापि । कलावैकल्येति । अखण्डमण्डलत्वश्रीमत्त्वे हेतू इत्यन्ये । चिन्त्यमिति । कलावैकल्यतदभावयोर्हेतुत्वेन तदनुपादाने भेदः [illegible] स्यात् । हेतुभूतधर्मवाचकस्य तदाश्रयवाचकस्य वा श्लिष्टत्वे श्लिष्टभेद इति भावः । "बहुव्यापिनोऽप्येष श्रीमद्गुणदर्शनम् ।

मालाप्रतिवस्तूपमावत् मालाव्यतिरेकोऽपि संभवति, तस्यापि भेदा एवमूह्याः, दिङ्मात्रं चोदाह्रियते, यथा—

हरवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृषः ।
रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि ॥ ७७ ॥ (—)

अत्र तुल्यार्थे वतिः । विषमादयश्च शब्दाः श्लिष्टाः ।

नित्योदितप्रतापेन त्रियामामीलितप्रभः ।
भास्वताऽनेन भूपेन भास्वानेष विनिर्जितः ॥ ७८ ॥ (—)

अत्र ह्याक्षिप्तैवोपमा । भास्वतेति श्लिष्टः । यथा वा—

---

Vyatireka, like Prativastūpamā, is possible also in the Mala form. Its varieties too could be imagined likewise It is illustrated only in a broad outline For instance —

Your outlook (by Śleṣa, eyes) is not unjust (by Śleṣa, odd in number) like Hara's, nor have you, O mighty lord! like Hari, spurned the mighty Law (by Śleṣa, the demon Vṛṣa), nor have you, like the sun, ever oppressed the earth with extremely unbearable taxation (by Śleṣa, rays) (77)

Here 'Vat' is used in the sense of 'Tulya.' and the words 'Visama' etc. are used paronomastically

The sun there, whose light is rolled up at night, is outstripped by this glorious king whose prowess is ever on the rise (78)

For, here the Upamā is suggested The word 'Bhāsvat' is used paronomastically Or as in

---

प्रदीपः—र्थे वतिरित्यार्थमौपम्यम् । अत्रानुपादानत्रय चिन्त्यम् । अयमेव मालारूपो यथा—हरवदिति । पूर्ववत् । तत्रैवाक्षिप्ते साम्ये यथा—नित्योदितेति । अत्र भास्वतेति प्रतापेति च श्लिष्ट पूर्वार्धोपात्त हेतुद्वयम् । इवादेस्तुल्यादिशब्दाना चाभावादाक्षिप्तैवोपमा । अत्रैव पूर्ववदनुपादाने भेदत्रय द्रष्टव्यम् । निर्जितजयत्यादिशब्दाभा-

---

उ०ः—न निशान्तरनजातु दृश्यतां-वसुधाधिप ॥' इति पाठेन बहुलश-ब्दे श्लेषसत्वात् अखण्डमण्डलमल्लानैकल्पयोर्हेत्वोरनुपादानेऽपि समन्वयेनानुपा-दानत्रयम् । बहुत्र कृष्णपक्ष विपुलश्चेत्यन्ये । हरवदिति । वैषम्य त्रित्वं पा-रुष्य च । विधूत कम्पित । वृषो वृषासुर बलीवर्दश्च धर्मश्च । सत्यभामापरिणयने कृष्णेन सप्तवृषास्कन्दनात् । कर किरण राजभागश्च । तापिता उद्वेजि-ता दाह प्रापिता च । भूर्धरणिस्तत्स्थलोकश्च । (आर्या छंद ।) अत्र विषमद-

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं
बिम्बप्रभाधरमकृत्रिमहृद्यगन्धम् ।
यूनामतीव पिबतां रजनीषु यत्र
तृष्णां जहार मधु नाननमङ्गनानाम् ॥ ७९ ॥ (—)

When (*in spring*), *in the nights, wine–not the face(s) of women–would quench the thirst of youths drinking hard* (*the wine, and the faces by way of kissing*) the wine and faces, in which the orb of the moon seemed to flash in virtue of their being clear by nature, which breathed alike unartificial and charming aroma, and of which wine possessed the bright hue (प्रभा) of the Bimba, and the face(s) possessed lower lips with the same hue! (79)

प्रदीपः – येऽपि श्लिष्टविशेषणेनौपम्याक्षेपादप्ययं भेदः संभवति। यथा—स्वच्छात्मतेति।

उ० : – श्लिष्टमपकर्षहेतुरुपात्तं । समदृष्टित्वमुत्कर्षहेतुर्नोक्तं । बहूपमानापेक्षया आधिक्यवर्णनान्मालाऽत्रेति बोध्यम् । **नित्येति** । प्रतापः पराक्रमः प्रकृष्टतापश्च । भास्वता कान्तिमता रविणा च । त्रियामा रात्रिः । **आक्षिप्तैवेति** । विनिर्जित-पदाक्षिप्तैवेत्यर्थः । **द्रष्टव्यमिति** । 'समरासक्तमनसा' इति 'पङ्कजा-चलितदनः' इति च पाठे इत्यर्थः । अत्रेदं चिन्त्यम् । उपात्तवैधर्म्यांशे श्लेषेणैव व्यतिरेकस्य श्लेषमूलकत्वमुचितम् । न तु यत्र कुत्रापि श्लेषेणेति धृतमेदत्रय चिन्त्यमेव । न च यत्र द्विजसुरालयमातरिश्वादिशब्दवेद्येषूपमानोपमेयेषु स्वश-ब्दोपात्त एव श्लेषो व्यतिरेकोत्थापकस्तत्रैतदुदाहरणं सूपपादम् । तत्र स्वशब्द-वेद्यस्यैव वैधर्म्यस्य संभवादिति । **स्वच्छेति** । स्वच्छात्मत्वं निर्मलत्वमेव गुणस्तेन समुल्लसितं प्रतिबिंबितमिंदुबिंबं यत्र । मुखेऽपि कपोले चन्द्रप्रतिबिंबात् । मधुपक्षेऽ-प्येवमेव । यद्वा समुल्लसितेंदुबिंबमिति रूपकम् । मुखपक्षे समुल्लसितत्वं पूर्णत्वम् । यद्वा स्वच्छात्मता चिक्कणता सैव उत्कर्षकत्वेन गुणः । बिंबप्रभोऽधरो यत्रेति मुखपक्षे । मधुपक्षे बिंबप्रभां धरति तत् । (बिम्बप्रभाया धरं धारकम् ।) जीर्णमधुनो रक्तत्वात् । अकृत्रिमो मुखवासनादिकं विना गन्धतरयोगं विना च हृद्यो गन्धो यस्य । अतीव अतिशयेन । यूना मधु तृष्णां पानेच्छां जहार नाननम् । अधरपानेच्छया अनिवृत्तेरित्यन्वयः । (वसन्ततिलका छन्दः ।) अङ्गनानामाननं मधुसदृशं हृद्यगन्धादिमत्त्वादित्येवं श्लिष्ट-

अत्रेवादीनां तुल्यादीनां च पदानामभावेऽपि श्लिष्टविशेषणैराक्षिप्तैवोपमा प्रतीयते । एवंजातीयका श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादानेऽन्येऽपि भेदाः संभवन्ति, तेऽपि अनयैव दिशा द्रष्टव्याः ।

Here, even in the absence of words like 'Iva and 'Tulya there comes to be conveyed an Upama, of course one that is suggested by the paronomastic adjectives Even other varieties of this type become possible if a word that could be used paronomastically (in two senses) happens to be used separately They also might be conceived likewise

प्रदीप. – स्पष्टम् । श्लिष्टोक्तियोग्यपदस्य पृथगुपादानेऽप्येवंजातीयका भेदाः संभवन्ति, तेऽनयैव दिशा द्रष्टव्याः ।

उ०: – विशेषणैरौपम्याक्षेपेऽपि तृष्णां जहार नाननमित्यतो वैलक्षण्यात् व्यतिरेक इति बोध्यम् । अत्र सर्वलोकलभ्यत्वपुण्यैकलभ्यत्वरूपौ तृष्णाहरणाहरणरूपोत्कर्षापकर्षहेतू नोक्तौ । उक्तेषूदाहरणेषु अयमस्मादधिक इति व्यतिरेकाकारो गम्य एव । 'इंदोः पद्माच्चाधिकं मे प्रियाया वदनं मतम् । विलासैर्हृद्यगन्धैश्च' इत्यादौ तु वाच्य एव । अयमेवात्रानुभवपर्यवसायी युच्यते । 'प्रियाया वदनेनेदं पङ्कजं सदृशं न हि । विलासे शोभमानत्वाद्विकासित्वाद्विधूदये ॥' इति पद्ये प्रतीपालंकारतिरस्कारको व्यतिरेकः । 'निष्कलंक निरातङ्क चतुःषष्टिकलाधर । सदापूर्ण महीप त्वं चंद्रोऽसीति मृषा वचः ॥' इत्यत्र रूपकतिरस्कारकोऽयम् । 'दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य । कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥' इति पद्ये केवलपदस्वारस्येन अनयोः केवलं आकारपदवाच्यत्वतदभावपदवाच्यत्वाभ्यां आकृतेश्च भेदः, गुणैस्तु साम्यमेव । दृढतरेत्यादिविशेषणसाम्यादितरगुणैश्चेति प्रतीतेर्गम्योपमैवालंकारो न त्वयम् । आधिक्यस्याचमत्कारित्वात् । कृपणस्योपमेयत्वे तद्गतत्वाभावाच्च । औपम्यतिर-

प्रभा – इवे सत्वे सति श्लेषे कथमुभयानुपादानम् । वैधर्म्यानुक्तौ श्लेषस्य निरालम्बनत्वापत्तेरित्याशयः । पृथगुपादानेऽपीति । उपमानोपमेययोर्विशेषणत्वेन पृथगुपादानेऽपीत्यर्थः । यथा– 'अमृतममृतं कः संदेहो मधून्यपि नान्यथा मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् । सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्ञनो वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥' इत्यादौ । अत्र द्वितीयोऽमृतशब्दोऽतिमधुरार्थः । नान्यथा किं त्वतिमधुराणि । अत्रोपमानभूतेष्वमृतादिषूपमेये चाधरेऽतिमधुरत्वं

**( ३७ ) निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥ २० ॥
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ।**

विवक्षितस्य प्राकरणिकत्वादनुपसर्जनीकार्यस्य अशक्यवक्तव्यत्वमतिप्रसिद्धत्व वा विशेष वक्तु निषेधो ( निषेध इव ) य. स वक्ष्यमाणविषय उक्तविषयश्चेति द्विधा आक्षेप । क्रमेणोदाहरणम्—

ए एहि किंपि कीएवि कएण णिक्किव भणामि अलमह वा ।
अविआरिअकज्जारम्भआरिणी मरउ ण भणिस्स ॥ ८० ॥ (—)

## 19 ĀKṢEPA

Where, with a view to driving at a particular feature of the matter that needs to be stated, an exception is taken to a thing yet to be spoken or already spoken there results the figure Akṣepa which (thus) is regarded to be of *two* kinds.

*Gloss* –Where in order to hint at the particular feature–viz either that it is difficult to describe it, or that it is too obvious,– of the matter intended to be stated, which since it is relevant cannot be held back, an exception (an exception in appearance) comes to be taken to it, there takes place 'Akṣepa, which is of two kinds according as it relates to the matter about to be spoken or already spoken Instances in order —

Come along O ruthless one, I *speak something on behalf of some* lady Or have done with it! Let her die who sets about doing things recklessly I would not speak' (80)

**प्रदीप –निषेध इति ।** वक्तुमिष्टस्य प्राकरणिकत्वाद्वचनार्हस्य यो निषेध स आक्षेप । निषेधो निषेध इवेत्यथ । शब्दगत्या निषेधेऽप्यर्थगत्या विधेरेव प्रतिपत्ते । तत्प्रयोजनमाह–विशेषाभिधित्सयेति । वक्ष्यमाणविषयेऽशक्यवक्तव्यत्वमुक्तविषयेऽति प्रसिद्धत्व चति विशेष । विभजते–**वक्ष्यमाणेति ।** तत्र वक्ष्यमाणविषयो यथा—ए

**उ० :** –स्फाराभाग्राचेति दिक् । इति व्यतिरेकः । **वक्तुमिष्टस्येति** । अस्य व्याख्या वचनार्हस्येति । अवचनानर्हस्येति वा पाठ । **निषेधः** । अभिधाननिषेध । अनपेक्षिताभिधाननिषेधस्य 'न पद्म मुखमेवैतत्' इत्यादेश्च वारणाय षष्ठ्यतत्तृतीयाते । **निषेध इवेति** । अभिधाननिषेधेऽप्यभिधेयानिषेधात् विशेषप्राप्त्यर्थमेवाभिधानस्यापि निषेधादिति भाव । **अर्थगत्येति** । तस्य प्रकृतत्वादेवाभिधातु पतितस्य क्रियमाणो निषेधो बाधित सन्नाभासत्वे पर्यवस्यन् विधेराक्षेपक इति भाव । केचित्तु व-

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः ।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥ ८१ ॥ (—)

The moon light, the pearl-necklace, the sandal-paste, the molten moon-stone, the camphor, the plantain tree, the coils of lotus fibres, the leaves of the lotus-plant,-Ah! these tend, due to you who dominate her mind from within, to produce the action of a heap of fiery sparks! Alas! What use talking about it? We forbear speaking! (81)

प्रदीपः—एहीति । अत्र विरहजनितदुर्दशातिशयो वक्ष्यमाणो निषिद्धः । उक्तविषयो

उ०ः—क्तुमित्युपलक्षणम् । करिष्यमाणस्यापि निषेधः आक्षेपः । 'तां सुंदरीं वर्णयितुं न मे वाणी प्रवर्तते' इत्यत्र करिष्यमाणवाणीप्रवृत्तेर्निषेधो वर्णनीयस्यानिर्वाच्यतां व्यनक्तीत्याहुः । (ए एहीति ।) 'ए एहि किमपि कस्या अपि कृते निष्कृप भणामि अलमथ वा । अविचारितकार्यारंभकारिणी म्रियतां, न भणिष्यामि ॥' किमपि तत्पीडातिशयरूपम् । ए इति सामर्षे संबोधनम् । अलमथवेति पूर्वाक्षेपे । अविचारितेत्यादि तु त्वत्प्रेम्णः स्थैर्यास्थैर्ये अविचार्यैव प्रवृत्तेत्यर्थकम् । अलमित्यनेनैव निषेधलाभे 'न भणिष्यामि' इति पुनः कथनं खेदातिशयद्योतकम् । (आर्या जघनविपुला ।) अत्र नायिकासंतापातिशयोऽवश्यं वक्तुमिष्टः, न चासौ विशिष्य वक्तुं शक्य इति व्यंजयितुं निषिद्धः । नायकं प्रति दूत्युक्तिः । एवमग्रेऽपि । ज्योत्स्नेति । (ज्योत्स्ना चंद्रिका । मौक्तिकदाम मुक्ताहारः ।) शीतांशुकांतद्रवः चंद्रकांतमणिजलम् । आः इति खेदे । अंतर्मानसम् मानसमध्ये । प्रभवता दाहकरणसमर्थेन । प्रनसतेति वा पाठः । त्वया करणभूतेन । अतो दुःसमाधानत्वम् । प्रभवतेति पाठे प्रभोरनभियोज्यत्वम् । (स्फुलिंगोत्करः

प्रभाः—पृथगुपात्तम् । प्रियादर्शनच्छद्मादन्यत्त्वाद् स्यादिति भक्त्या तस्यानिस्वादुत्वप्रन्ययात् । इति व्यतिरेकप्रकरणम् ॥ १७ ॥ निषेध इवेति । निषेधाभास इत्यर्थः । ए एहीति । 'अये एहि किमपि कस्या अपि कृते निष्कृप भणाम्यलमथवा । अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्ये ॥' निषेधाभासवद्विध्याभासोऽप्यलंकारोऽयं । यथा—'गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥' इत्यादौ । इत्याक्षेपप्रकरणम् ॥ १८ ॥

**( ३८ ) क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ॥२१॥**

हेतुरूपक्रियायाः निषेधेऽपि तत्फलप्रकाशनं विभावना । यथा—

## 20 VIBHĀVANĀ

Where the Effect is in evidence even when the cause (क्रिया) is denied, the figure resulting is 'Vibhavanā'

*Gloss* —Even when action which constitutes the cause is denied, if there is the manifestation of the effect of the same, the figure is 'Vibhāvanā To illustrate —

**प्रदीपः**–यथा—ज्योत्स्नेति । क्रियाया इति । वैयाकरणमते क्रियैव हेतुरिति क्रियेत्युक्तम् । वस्तुतस्तु कारणप्रतिषेधे कार्यवचनं विभावना । न च विरोध । स्वाभाविकत्वस्य

**उ० :**–अग्निकणसमूह तस्य व्यापार दाहोत्पादनम् । तदर्थम् । शार्दूलविक्रीडित छन्द ।) अत्र वियोगिनीना ज्योत्स्नादि स्फुलिंगायते इत्यत्रातिप्रसिद्धत्व विशेष व्यञ्जयितु ज्योत्स्नादीन्युक्त्वा तत्कथन प्रतिषिद्धम् । अत्र व्यंग्येनाशक्य वक्तव्यत्वादिना व्यंजक वाच्यमेव चारुत्वमावहतीति गुणीभूतव्यंग्यता । यत्तु वामनेन 'उपमेये सति किमुपमानेनेत्येवमुपमानाक्षेप आक्षेप' इत्युक्तम् । तत्तु वक्ष्यमाणप्रतीपरूपतया गतार्थम् । **इत्याक्षेपः** । **कारणेति** । प्रसिद्धकारणेत्यर्थ । सूत्रे क्रियतेऽनेनेति व्युत्पत्त्या क्रियाशब्द कारणपर इति भाव । एव च कारणव्यतिरेकसामानाधिकरण्येन प्रतीयमाना कार्योत्पत्तिर्विभावनेत्यर्थ । 'न कठोर न वा तीक्ष्णम्' इत्यादावपि कठोरत्वादिविशिष्टायुधस्य जयहेतोरभावेऽपि कार्यकथनाद्विभावनैव । अतिशयोक्तिस्तु तदंगम् । कारणतावच्छेदकावच्छिन्नकारणव्यतिरेकस्य विवक्षितत्वात् । ननु कारणाभावे कार्योत्पत्तौ स्फुरितस्य विरोधस्य प्रसिद्धातिरिक्तेन कारणेन परिहाराद्विरोधाभास एवायमिति

**प्रभा :**–क्रियैवेति । द्रव्यगुणादेरप्यनभिव्यक्तस्याहेतुत्वादभिव्यक्तरूपक्रियाया सर्वत्रापेक्षेति । क्रियैव हेतुरित्याशय । आत्मादेरपि हेतुत्वादाह—वस्तुतस्त्विति । तथा च क्रियतेऽनेनेति व्युत्पत्त्या क्रियाशब्द उक्त इति भाव । स्वाभाविकत्वस्य स्यप्रतीतिरेवचत्प्रत्यस्य । कुसुमितेत्यादौ सौकुमार्यातिशयस्य स्वभावजन्यत्वविभावनम् । 'पुष्पोद्गमैराभरणप्रयोग प्रारेभिरे वामदृशा युवान । ततो विना कामुककर्मसिद्धिं पुष्पायुधस्याभवदस्त्रमोक्ष ॥' इत्यादौ कारणान्तरं पुष्पाभरणमनुरागोद्दीपक

कुसुमितलताभिरहताऽप्यधत्त रुजमलिकुलैरदष्टाऽपि ।
परिवर्तते स्म नलिनीलहरीभिरलोलिताऽप्यघूर्णत सा ॥८२॥ (—)

She suffered d stress at ( the s ght of ) creepers n blossom though unsmitten by them she writhed ( परिवर्तते स्म ) at ( the s ght of ) swarms of bees though unstung by them she reeled at ( the s ght of ) the waves that passed over lotus plants though not tossed by them ( i e waves ) ( 82 )

**प्रदीप** – कारणान्तरस्य वा विभावनात् । उदाहरणम्— कुसुमितेति ।

उ०: – चेन्न । समबलयो परस्परविरोधे तत्स्वीकारात् । इह तु कारणविरहेण कार्यमेव बाध्यत्वेन गम्यते । न तु तेन कारणविरह इति विशेषात् । कुसुमितेति । ( नायिकाया विरहावस्थावर्णनम् । ) लताहनन विरहिण्या रोगहेतु । सा नलिनीति रूपकम् । भ्रमरदश परिवर्तनहेतु । तरगसबधो घूर्णनहेतु । नलिनी युक्ततरगैरिति वार्थ । ( 'नलिनी' इति नायिकानाम वा । अहता अताडिता । परिवर्तते परावृत्य वर्तते । अलोलिता अचालिता । गीतिश्छन्द । ) अत्र विरहरूपहेत्वतरजनिताना रुजादीना अन्यत्वेऽप्येकत्वाध्यवसायो विभावनामूलम् । स च प्रकृतेऽनाहार्य । 'निरुपादानसभारमभित्तावेव तन्वते । जगच्चित्र नम स्तस्मै कलाश्लाघ्याय शूलिने ॥' इत्यत्राहार्यो रूपकवत । सर्वथा कार्यांशेऽभेदबुद्धिर्विभावनाजीवितम् । सा च क्वचिदतिशयोक्त्या क्वचिद्रूपकेणेत्यन्यत् । 'अप्यलाक्षारसासिक्त रक्त तच्चरणद्वयम्' इत्यत्र स्वाभाविकत्वेन परिहार । अत्र कारणव्यतिरेक प्रतिबन्धकसत्ताया अप्युपलक्षणम् । तेन 'सातपत्र दहत्याशु प्रतापतपनस्तव' इत्यत्राप्येषा । अत्रापि स्वभावमादाय विरोधपरिहार । प्रतिबन्धकाभावस्यापि कारणत्वमादिना तु यथाश्रुतमेव सम्यक् । पर तु कारणव्यतिरेकप्रतीतिरार्थीति बोध्यम् । 'शखाद्वीणानिनादोऽयमुदेति महदद्भुतम्' इत्यत्र वीणा विनेति प्रतीतेरार्थी कारणाभावप्रतीतिरस्त्येव । अत्र शङ्खत्वेन कान्ताकठस्तत्रीनिनादत्वेन तद्गीत चाध्यवसितम् । 'शीताशुकिरणास्तन्वी हन्त सतापयन्ति ताम्' इत्यत्रापि दाहकारणतावच्छेदकधर्मावच्छिन्नाभावप्रतीतिरार्थ्यस्त्येव । विरहकालिकदाहकारणतावच्छेदकत्व शीताशुत्वेऽपीति विभावनाद्विरोधपरिहार । वस्तुत 'शखाद्वीणानिनादोऽयम्' इत्याद्युदाहरणानि विरोधस्यैव । परस्परबाध्यत्वावगमात् । 'यश पयोधिरभवत्करकल्पतरोस्तव'

## ( ३९ ) विशेपोक्तिरखण्डेपु कारणेपु फलावचः।

मिलितेष्वपि कारणेपु कार्यस्याकथन विशेपोक्तिः। अनुक्तनिमित्ता, उक्तनिमित्ता, अचिंत्यनिमित्ता च। क्रमेणोदाहरणम्—

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते
श्लथीकृताश्लेपरसे भुजंगे चचाल नालिङ्गनतोऽङ्गना सा॥ ८३॥ (—)

---

### 21 VIŚEṢOKTI

'Viśesoktı' occurs where the Effect is not presented, (even) when the Causes are intact

*Gloss* —'Viśeṣoktı' consists in the non presentment of the Effect even when the Causes have come together It can be (1) one where *the reason is not stated*, (2) *one where the reason is* stated, and (3) one where the reason is inscrutable Instances in order —

(Even) when sleep was over, the sun had risen, the circle of friends had arrived at the doorway and the lover had relaxed his ardour for embrace, that woman budged *not from the embrace!* (83)

---

**प्रदीपः—विशेपोक्तिरिति**—अखण्डेपु मिलितेपु प्रसिद्धकारणेपूक्तेपु कार्याभाववचन विशेपोक्ति। अत्राप्यप्रसिद्ध कार्याभावहेतौ पर्यवसानाद्विरोधाभाव। सा च त्रिधा-अनुक्तनिमित्ता उक्तनिमित्ता अचिन्त्यनिमित्ता च। तत्राद्या यथा—**निद्रेति।**

---

उ॰—इत्यत्रापि विरोधाभास एव। परस्परं विरोधावगते। एतेन 'कार्यात्कारणजन्माऽपि विभावना' इत्यपास्तम्। कारणान्तर विभावयतीत्यन्वर्थभावेन तस्य विभावनात्वाभावात्। एव 'निमीलितादक्षियुगाच्च निद्रया हृदोऽपि बाह्येन्द्रियमौनमुद्रितात्। अदर्शि संगोप्य कदाऽप्यवीक्षितो रहस्यमस्या महन्महीपति॥' इत्यत्रापि एषा। अक्षियुगात् हृदोऽपि संगोप्य अत एव महत् रहस्य यथा स्यात्तथा स नृपतिर्निद्रयाऽदर्शि। निमीलितत्वेनाक्षिसन्निकर्पराहित्येन गोपनम्। बाह्येन्द्रियसहकृतान्मनसश्च तद्बाह्येंद्रिय-

---

**प्रभा॰**—बोध्यम्। इति विभावनाप्रकरणम्॥ १९॥ केचिदिह्लोकानुक्तनिमित्तभेदद्वयमाहुस्तन्मते उदाहृतपद्येऽनुक्तनिमित्तता द्वितीयोदाहरणे तूक्तनिमित्ततेति द्रष्टव्यम्। अचि-

**कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने ।**
**नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥८४॥** (बालरामायण ३ ११)

_ lutation to Cupid who though burnt down, continues, like cam phor, to be potent in each and every man (84)

**प्रदीपः**–अनानुरागातिशयो निमित्त चन्द्राभावे । स च विशिष्य वक्तु शक्यत्वेऽपि नोक्त इत्यनुक्तनिमित्तेयम् । उक्तनिमित्ता यथा—**कर्पूर इति** । अत्र 'कर्पूरो दाहमात्रे उपमान न तु शक्तिमत्त्वेऽपि' इति भास्कर । शक्तिमत्त्वे इति परमार्थ । ईषद्दग्धस्य तस्य सौरभ्यातिशयात् ।

**उ०**:–व्यापाररहितात्ततोऽङ्गोपने पर्यवस्यति । 'सविशेषणे हि' इति न्यायात् । कालान्तरीणदर्शनजनितस्मरणसहकृतमनसोपनीतभान स्यादत आह—कदाप्यवीक्षित इति । एव च योगजधर्मवददृष्टविशेषाद्विनैवोपनय नलत्वेन भानमभिमतम् । 'अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम्' इत्युक्ते । अत्र दृशिधातोर्ज्ञानसामान्ये लक्षणया तत्र दर्शनाभेदलाभात् कारणाभावे कार्यलाभेन विभावना । कुसुमितेत्युदाहरणेऽनुक्तनिमित्ता एषा । उक्तनिमित्ताऽप्येषा । यथा 'यदवधि विलासभवन यौवनमुदियाय चन्द्रवदनाया । दहन विनैव तदवधि यूना हृदयानि दह्यन्ते ॥' अत्रोपात्ते यौवने दाहहेतुत्व पर्यवस्यतीति दिक् । **इति विभावना । विशेषोक्तिरिति।** विशेष कञ्चित्प्रतिपादयितुमुक्तिरित्यर्थ । **निद्रेति** । धुरल सूर्ये । (परासे प्राप्ते सति । भुजगे उपपतौ । श्लथीकृत शिथिलीकृत आश्लेषरस आलिङ्गनरसो येन तादृशे सति । उपजातिश्छन्द ।) कारणसत्त्वे कुत कार्यानुत्पत्तिरित्येवमत्र विरोध । कार्यानुपत्ते कारणसमवधानबाध्यत्वात् । अत्र निमित्त व्यङ्ग्यमपि न चार्विति गुणीभूतव्यङ्ग्यता । **कर्पूर इवेति** । (बालरामायणे तृतीयाङ्के पद्यमेतत् । अवार्य अकुण्ठित वीर्य यस्य तस्मै । मकरकेतवे मदनाय ।) अत्र शरीरदाह शक्तिध्वंसे कारणम् । सत्यपि तदनुत्पत्तिकथनम् । (भ्रूभ्या

**प्रभा**:–न्त्यनिमित्ततो वैलक्षण्यमाह–**स च विशिष्येति** । **दाहमात्र इति** । यथा कर्पूरे निरवशेष दह्यते तथेत्येतावन्मात्र विवक्षित न तु तस्य शक्तिमत्त्वम् । अप्रसिद्धेरित्यर्थ । भ्रूभ्या भ्रूस्वरूपेण भवता । धनश्चासौ सारो दृढस्तत्ता कर्पूरता च ।

**स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।**
**हरताऽपि तनुं यस्य शम्भुना न हृतं बलम् ॥**

(Cited in भामह's काव्यालङ्कार ३ २४)

---

All alone, that flower weaponed Cupid conquers the three worlds who, though deprived of his body by Śambhu, could not be (yet) deprived of his strength (85)

---

**प्रदीप :**—'भ्रूभ्या प्रियाया भवता मनोभूचापेन चापे घनसारभाव ।
निजा यदस्रोपदशामपेक्ष्य सम्प्रत्यनेनाधिकवीर्यताऽर्जि ॥'

इत्यादि नैषधदर्शनात् । अत्रावायवीर्यत्व शक्तिमत्त्वे कार्याभावरूपे हेतुरुक्त । अचिन्त्य-निमित्ता यथा—स एक इति । अत्र तनुहरणेऽपि बलाहरणस्य हेतुर्विशिष्य वक्तु न

---

**उ० :—मिति ।** नैषधीयकाव्ये सप्तमे सर्गे २५ पद्यम् । 'मनोभूचापेन मदन-बाणेन प्रियाया दमयन्त्या भ्रूभ्या भ्रूयुगुलेन भवता भ्रूत्व गच्छता सता घनो दृढो सारो मज्जा यस्य तद्भाव अतिदृढत्व च आपे प्रापे । यदैव च भ्रूत्व तदैव दृढत्वमिति चकारार्थ । पुष्पत्वदशाया नि सारस्यापि धनुषो भैमीभ्रूवदशाया ससारत्व जातमित्यर्थ । कथ ससारत्वमित्यत आह—यद्यस्मात् निजा स्वीया अम्लोपदशा अदाहावस्था अपेक्ष्य सम्प्रति दग्धस्य भैमीभ्रूभवनसमयेऽनेन धनुषा अधिकवीर्यता अतिशयितपराक्रमत्व आर्जि अर्जितम् । अदग्धपुष्परूपचापापेक्षया दग्धस्य श्यामीभवत्केसरशेषस्य भैमीभ्रूभवतस्तस्यैव चापस्य जगद्वशीकरणे अधिकसामर्थ्यदर्शनादेवमनुमीयते इति भाव । घनत्व सारत्व दृढत्व श्रेष्ठत्व च प्रापे इति वा । अथ च घनसारभाव कर्पूरत्व च । यत कर्पूरोऽपि निजागदाहात् स्वीयपक्वावस्थामपेक्ष्यादाहावस्थायामधिकवीर्यतामतिशयित सौगन्ध्य शीतलत्व चार्जयति' इति नैषधीयप्रकाशे स्पष्टम् । ) स इति ।

---

**प्रभा :**—अम्लोपदशामदहदशाम् । सम्प्रति दग्धदशायाम् । अत्राचिन्त्यत्वचिन्त्यत्वयोरनुक्तनिमित्तस्यैव भेदरूपत्वाद्भेदद्वयमेव प्राचीनैर्नवीनैश्च कैश्चिदुक्त तदयुक्तम् । अनुक्तनिमित्ताया निद्रेत्यादौ चिन्त्यस्य निमित्तस्यानुरागातिशयत्वेन विशिष्य ज्ञानमचिन्त्यत्वमिति द्रष्टव्यम् । तथथा—'ण हु रूम ण अ ऋद्धी णेअ कुल ण अ गुणा ण विण्णाणम् । एमे अ तह वि कस्स वि कोवि जणो वल्लहो होइ ॥' 'न खलु रूप न च ऋद्धिर्नैव कुल न च गुणा न विज्ञानम् । एवमेव तथापि कस्यचित्कोऽपि जनो वल्लभो भवति ॥' इति संस्कृतम् । अत्र रूपाद्यभावेऽपि वल्लभत्वस्य निमित्तमचि

## (४०) यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥ २२ ॥

यथा—

एकस्त्रिधा वससि चेतसि चित्रमत्र
देव द्विषां च विदुषां च मृगीदृशां च ।
तापं च सम्मदरसं च रतिं च पुष्णन्
शौर्योष्मणा च विनयेन च लीलया च ॥ ८६ ॥ (—)

### 22. YATHĀ-SAṄKHYA

'Yathā-saṅkhya' consists in the connection, in the (same) order, of things standing in a (particular) order

*Gloss* —To illustrate —

Here lies the wonder, O king that one as you are, you abide trebly in the heart of the enemies, the learned and the doe-eyed ones, nourishing distress, a feeling (रस) of joy, and love, by the heat of your valour, by culture, and by grace (86)

---

**प्रदीपः**—शक्यत इत्यचिन्त्यनिमित्तेयम् । **यथासंख्यमिति** । यथा—एक इति ।

---

**उ०ः**—एकोऽसहाय । कुसुमेत्यनेनायुधस्य निःसारता । **न शक्यत इति** । शास्त्रैकगम्यत्वादिति भावः । यद्यप्यनुक्तत्वाविशेषादेषाऽप्यनुक्तनिमित्तैव तथापि प्रकरणादिना ज्ञातस्य निमित्तस्यावचनेऽनुक्तनिमित्ता । अज्ञातस्यावचने एषेति भेदः । यत्तु "एकगुणहानिकल्पनया साम्यदार्ढ्यं विशेषोक्तिः । यथा 'द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम्'" इति । तन्न । अत्र द्यूते राज्यस्य तादात्म्येनारोपेण रूपकसत्त्वात् । तत्र सिंहासनरहिते द्यूते सिंहासनसहितराज्यतादात्म्यं कथं सिध्येदिति आरोपोन्मूलकयुक्तिनिरासायारोप्यमाणराज्येऽपि सिंहासनराहित्यं कल्प्यते इति दृढारोपरूपकमिदम् । एवं गुणाधिक्यकल्पनायामप्येतदेव । यथा 'धर्मो वपुष्मान् भुवि कार्तवीर्यः' इत्यादाविति दिक् । **इति विशेषोक्तिः** । **क्रमेण** । उपदेशक्रमेण । पूर्वस्य पूर्वेण मध्यस्य मध्येनान्त्यस्यान्त्येनेत्यर्थः । अन्वयिसमसंख्यपदार्थज्ञानस्य यथा—

---

**प्रभा**ः—न्त्यमित्यूह्यम् । इति विशेषोक्तिप्रकरणम् ॥ २० ॥ **यथासंख्यमिति** । अकलिततपस्तेजोवीर्यप्रथिम्नीत्यादाविवात्रापि क्रमप्रक्रमभङ्गदोषात्तदभावरूपं यथासंख्यं नामा

**(४१) सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।
यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥ २३ ॥**

साधर्म्येण वैधर्म्येण वा सामान्य विशेषेण यत् समर्थ्यते, विशेषो वा सामान्येन, सोऽर्थान्तरन्यासः । क्रमेणोदाहरणम्—

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहत शशिशुभ्र शङ्खमपि पीतम् ॥ ८७ ॥ (—)

## 23 ARTHĀNTARANYĀSA

Where a general fact or a particular one is corroborated, one by the other, the figure (that results) is 'Arthantaranyasa based on similarity or its opposite.

*Gloss* —On the basis of similarity or dissimilarity, when a general fact is corroborated by a particular one, or *vice versa*, the resulting figure is 'Arthantaranyasa. Instances in order —

To those whose minds are obsessed by their own defects, the extremely beautiful itself appears otherwise One affected by (dis urbed) bile finds the conch to be yellow though it is white like the moon (87)

प्रदीप.—स्पष्टम् । सामान्यमिति । सामान्य यद्विशेषेण समर्थ्यते विशेषो वा सामान्येन सोऽर्थान्तरन्यास । द्वयोरपि प्रत्येक समर्थनहेतु साधर्म्यं वैधर्म्यं चेति चतुःप्रका

उ० ः—स्यान्नयवोप्यन्न कार्यतावच्छेदकम् । यद्यपि कविप्रतिभानिर्मितत्वस्यालङ्कार ताजीवातोर्लेशतोऽप्यभावादस्य नालङ्कारत्वम् तथापि एकत्र पद्ये बहूना क्रमान्वये वैचित्र्यादलङ्कारत्वेनोक्त । (एक इति । राजान प्रयुक्ति । हे देव राजन् एक त्वम् द्विषाम् शत्रूणाम्, विदुषाम् पडितानाम्, मृगीदृशाम् स्त्रीणा च चेतसि त्रिधा प्रकारत्रयेण वससि । अत्र एतद्विषये चित्रम् आश्चर्यम् । शौर्योष्मणा प्रतापाग्निना, विनयेन नम्रतया, लीलया विलासेन च क्रमेण तापम् सन्तापम्, सम्मदरसम् आनन्दरसम्, रतिं प्रीतिं च पुष्णन् सन् इत्यर्थ । वसन्ततिलका छन्द ।) इति यथासंख्यम् । सामान्यमिति । अनुपपद्यमानतया सम्भाव्यमानस्यार्थस्योपपादनार्थं यदर्थान्तर

प्रभा ः—ल्कार इति नव्या । इति यथासंख्यालङ्कारप्रकरणम् ॥ २१ ॥ विशेषो वा सामान्येनेति । दृष्टान्तप्रतिवस्तूपमयोस्तु विशेषेण विशेषस्य समर्थनमिति ततो भेद ।

सुसितवसनालंकारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधु·
तदनु भवतः कीर्तिः केनाप्यगीयत, येन सा
प्रियगृहमगान्मुक्ताशङ्का, क्व नासि शुभप्रदः ॥ ८

गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते।
असंजातकिणस्कन्धः सुखं स्वपिति गोर्गलिः ॥

( Cited in सरस्वतीकण्ठाभरण ४ )

अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेदृशम्।
त एव धन्याः सुहृदः पराभवं जगत्यदृष्ट्वैव हि ये क्षयं गताः ॥९०॥(—)

When once, she with lovely eyes, and wearing garments and ornaments extremely white, was going wantonly in the splendour of the moon light, the moon set Thereupon, your glory happened to be sung by someone, in consequence of which, she could reach the beloved s home, free from fear Where have you not been a giver of blessings ? (88)

It is only through the vileness of excellences that the yoke-bearer is placed at the yoke The unruly bull dozes off at ease, without so much as sustaining a bruise on the nape of the neck ! (89)

Alas ! My (long) life is very much to blame since I have to report an unpleasant thing like this ! They alone are blessed who died without having to witness, in this world, the defeat of their ally ! (90)

**प्रदीप** :—रोऽयमित्यर्थे । तत्र विशेषेण सामान्यसमर्थनं साधर्म्येण यथा—**निजेति**। सामान्येन विशेषसमर्थनं साधर्म्येण यथा—'**सुसितवसना**'-इत्यादि। विशेषेण सामान्यसमर्थनं वैधर्म्येण यथा—**गुणानामिति**। अत्र धुर्य इत्यादि साधारण्यात्सामान्यम्। गौर्गं-

**उ०** :—न्यस्यते सोऽर्थान्तरन्यास । दृष्टान्ते तु सामान्य सामान्येन विशेषो विशेषेण समर्थ्यते इति ततो भेद । साक्षाद्व्याप्त्यादेरनभिधानादनुमानतो भेद । कविनिबद्धप्रमात्रन्तरनिष्ठानुमितेरेवानुमानालंकारविषयत्वाच्च । **निजदोषेति** । सुदरमेव सुदरमपि । ( पित्तेन उपहत व्याप्त । शशिवत् शुभ्रम् । आर्या छन्द । ) अत्र निजदोषेत्यादि सामान्य शङ्खपीतिम्ना विशेषेण समर्थितम्। यद्यपि दोषेण भ्रमो भवतीत्यर्थे पामरस्याऽपि नानुपपत्तिसम्भावना तथाप्याहार्या सा बोध्या। **सुसितेति**। राजान प्रति कन्चुक्ति । कदाचन एकदा शुभ्र—

**प्रभा** :—काव्यलिङ्गे । न सामान्यविशेषभाव इति तन्निरास । इत्यर्थान्तरन्यासप्रकरणम् ॥२२॥

## (४२) विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः।

### 24 VIRODHA

The figure is 'Virodha, when there is a presentment (of things) as conflicting, although there is no (real) conflict between them

**प्रदीप:**—क्लिरिति विशेष । वैधर्म्य च स्फुटम् । वैधर्म्येण विशेपस्य सामान्येन समर्थन यथा—**अहो इति** । सामान्यविशेपभाव उपपादनीय । **विरोध इति** ।

**उ० :**—चक्रालकाराया कौमुदीमहसि स्वैर यान्त्यामस्त विधुर्गत । ततो मत्त्वकीर्ते-गनि कौमुदीनदेव प्रकाशे जाते सा मुक्ताशका पतिगृहमगादित्यन्वय । अतस्त्व क शुभप्रदो नासि । सर्न्नैव तयेयर्थ । मूर्तत्व धवलतागुणाश्रयत्वम् । (हरिणी छन्द ।) हुसितेत्यादिनाऽभिहितो विशेष क नासीत्यादिना सामान्येन समर्थित । **गुणानामिति** । गुणरूपदोपादेव धुर्य श्रेष्ठ धुरि कार्यभारे नियुज्यते । अक्षजातनण स्कन्धो यस्य । य आसजित युग बलात्पातयति स गौर्गलि । **अहो इति**। (आपन्न) सुहृद प्रति (तदवस्योचितम्) अप्रिय वदत (खेदातिशयात् स्वजीवितं निन्दत यस्यचित्) उक्ति । ते इत्यनेन सामान्यतो मत्पदार्थस्यापि ग्रहणात्सामान्यत्वम् । (सुहृद मित्रस्य । वशस्थ वृत्तम् ।) ते धन्या इति सामान्येनाहमधन्य इति वैधर्म्यद्वारा स्वायुरपराधरूपो विशेष समर्थ्यते । अत्र हि यत् यत इत्यादे प्रतिपादकस्याभावे समर्थ्यसमर्थकभाव आर्थ । तत्सत्वे शाब्द । ननु 'उपकारमेव तनुते विपद्गत सद्गुणो नितराम् । मूर्छा गतो मृतो वा निदर्शन पारदोऽत्र रस ॥' इत्यत्र कोऽलकार इति चेदयमेव । निदर्शनशब्दस्य समर्थकपरत्वात् । उपमाऽत्रालकार इति कश्चित् । एतेनोदाहरणालकारोऽयमतिरिक्त इत्यपास्तम् । कारणेन कार्यस्य कार्येण कारणस्य वा समर्थन काव्यलिंगस्य विषय इति बोध्यम् । समर्थ्यसमर्थकयो सामान्यविशेषभावसबन्धेऽय, तदितरसबन्धे काव्यलिंगमित्युपगमात् । 'अनन्तरत्नप्रभवस्य यस्य हिम न सौभाग्यविलोपि जातम् । एको हि दोषो गुणसंनिपाते निमज्जतीन्दो किरणेष्विवाङ्क ॥' इत्यत्र द्वयोरप्यर्थान्तरन्यासयो ससृष्ट्यादि बोध्यम् । एतेन 'यस्मिन्विशेषसामान्यविशेषा स विकस्वर । यथानतेति' इति विकस्वरालकारोऽय पृथगित्यपास्तम् । इत्यर्थान्तर-

वस्तुवृत्तेनाविरोधेऽपि विरुद्धयोरिव यदभिधानं स विरोधः ।

(४३) जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद्गुणस्त्रिभिः ॥ २४ ॥

क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश ।

क्रमेणोदाहरणम्—

अभिनवनलिनीकिसलयमृणालवलयादि दवदहनराशिः ।
सुभग कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते ॥ ९१ ॥ (—)

---

*Gloss* —Where, although there is in fact no conflict (between them) there [illegible] [illegible] presentment of two things as seemingly conflicting, the figure [illegible] ' Virodha '

A Genus may be in conflict with the four, Genus etc. An Attribute with the three An Action with the two And a Substance with (another) Substance only thus they could be *ten* varieties.

Instances in order —

*Gloss* —Fresh leaves of the lotus plant, coils of lotus fibres etc become (like) a volume of conflagration, to this deer eyed one when, O blessed one! on her falls the bolt of separation from you, by force of fate (91)

---

**प्रदीपः**—वस्तुगत्या विरोधाभावेऽपि यद् द्वयोर्विरुद्धयोरिवाभिधान स विरोध । एव विभजते—**जातिरिति** । जात्याद्यैरिति जातिगुणक्रियाद्रव्यै । त्रिभिरिति गुणक्रियाद्रव्यै । द्वाभ्यामिति क्रियाद्रव्याभ्याम् । यद्यपि गुणानामपि जात्या विरोध सभवत्येव तथापि जातेर्गुणविरोध एव प्रविष्टत्वाद्गुणस्त्रिभिरित्युक्तम् । एव क्रिया द्वाभ्यामित्यपि द्रष्टव्यम् ।

---

**उ० :—न्यासः । विरुद्धयोरिति ।** विरोधप्रतिभाप्रयोजकरूपेण यदभिधानमित्यर्थ । यथाश्रुतशब्दोपस्थितिमहिम्ना विरोधज्ञानेऽपि शब्दस्यान्यत्र तात्पर्यान्न विरोध इत्यय विरोधाभास इत्युच्यते । विरोधश्चैकाधिकरणमवद्धत्वेन प्रसिद्धयोरर्थयोर्मासमानैकाधिकरणामवद्धत्वम् । एकाधिकरणासवद्धत्वेन प्रसिद्धयोरेकाधिकरणसवद्धत्वेन प्रतिपादन वा । स च बाधबुद्धयनभिभूतो दोषस्य विषय । तदभिभूतोऽलकारस्येति बोध्यम् । **क्रियेति ।** क्रियाशब्देनाऽत्र धातुवाच्योऽर्थ । **अभिनवेति ।** दवदहनो दवाग्नि । विधिवशात

---

**प्रभाः**—वस्तुगत्या विरोधस्य दापत्वादविरोधेऽपीत्युक्तम् । तद्व्याचष्टे—**वस्तुगत्येति । अभिनवेति ।** ननु जात्योर्द्रव्ययोश्च न विरोधालकारो भवितुमर्हति रूपकाकान्तत्वात् । अन्यथा मुख चन्द्र इत्यादावपि विरोधालकारप्रसङ्गात् । न च

गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः ।
विश्वंभराऽप्यतिलघुर्नरनाथ तवान्तिके नियतम् ॥ ९२ ॥ (—)

Even mountains (appear to) possess no height, even the wind (seems to be) motionless, even the oceans (appear) shallow, (and) even the earth (seems) extremely petty beside you, O king, to be sure. (92)

प्रदीपः—तद्यमर्थः—जातिनिरूपितो भेदश्चतुर्धा । गुणनिरूपितस्तु पूर्वभेदभिन्नस्त्रिधा । एवमग्रेऽपि । तत्र जात्या जातेर्विरोधो यथा—अभिनवेति । अत्र नलिनीत्वबिसलयत्वादिजातीनां दहनत्वजात्या विरोधः । वियोगातिशयेन गौणत्वात्तदाभासता । एवमग्रेऽप्यूह्यम् । जातेर्गुणेन

उ०ः—दैववशात् । त्वद्वियोग एव पविः वज्रम् । (गीतिश्छन्दः ।) गौणत्वादिति । वियोगजन्यसंतापातिशायके लाक्षणिकत्वादित्यर्थः । नन्वेवमत्रारोपमूलं रूपकमेव । न विरोधः । अन्यथा मुखं चंद्र इत्यत्रापि विरोध एव स्यादिति चेन्न । अत्र विरोधोत्थापनार्थमभेदस्य विवक्षितत्वेऽपि तस्यान्यार्थमुपादानेनाचमत्कारित्वात् । विरहिण्यवस्थायामत्यद्भुतत्वस्याऽत्र प्रतिपिपादयिषितत्वेन तदनुगुणतयांतर्गर्भितोऽप्यर्थो विरोध एव चमत्कारितया समुल्लसतीति तस्यैवालंकारत्वात् । मुखं चंद्र इत्यादौ तु चंद्रनिष्ठाह्लादकत्वादिसकलगुणानां मुखे प्रतिपत्त्यर्थं चंद्राभेद एव चमत्कारी न तु सन्नपि विरोधः । विवक्षितार्थाननुगुणत्वात् । इति रूपकमेव न तु विरोधोऽलंकारः । यदि तु विरहिण्यवस्थाया अत्यद्भुतत्वं न विवक्षितमप्यर्थश्च न गर्भीकृतः किं तु पीडाजनकत्वाद्यतिशयमात्रं तदाऽत्र रूपकमेव । यदि वा नगरविशेषस्थितेरत्यद्भुतत्वविवक्षयाऽप्यर्थगर्भीकरणेन च 'यत्र नारीणां मुखं चंद्रः' इत्युच्यते तदा तत्र विरोध एवेति दिक् ।

प्रभाः—निरवकाशं रूपकं गुणादौ सावकाशस्य विरोधस्य बाधकमिति वाच्यम् । तथा सति मृणालवलयादिदवदहनराशिरित्यादावविष्टस्य विरोधालंकारस्यासिद्धिप्रसङ्गादिति चेत्, भद्रा । परं तु यत्र यस्य चमत्कारे प्राधान्यं स तत्रालंकार इत्युच्यते । एवं च मुखं चन्द्र इत्यादौ विद्यमानोऽपि विरोधो न चमत्कारितया विवक्षितः अपि चन्द्राभेद एवेति रूपकमेव । दवदहनराशिरित्यादौ तु विरहिण्याद्यवस्थाया अद्भुतत्वविवक्षावशाद्विरोध एवेति व्यवस्था । न च रूपके विरोधाविवक्षायामपि विरोधे स्वानुगुण्येनाभेदस्य विवक्षितत्वाद्रूपकापत्तिरिति शङ्क्यम् । विरोधविवक्षाविरहविशिष्टस्य रूपकलक्षणे निवेशेनादोषात् । अभेदस्य विरोधाङ्गत्वेन प्राधान्येन विरोधस्यैव व्यपदेशौचित्याद्वा । एवं च मुखं चन्द्र इत्यादावपि विरोधविवक्षायां स एवालंकार

येषां कण्ठपरिग्रहप्रणयितां सम्प्राप्य धाराधर-
स्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च ।
तेषां सगरसङ्गसक्तमनसां राज्ञां त्वया भूपते
पांसूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ ९३ ॥ (—)

What a wonder! with volumes of dust is being accomplished by you, O king, the toilette of kings, whose minds are intent upon an encounter in battles, and growing ardent to hug whose necks your sword, sharp (by Śleṣa cruel) as it is becomes red (by Śleṣa sanguine) and attains a certain clamminess (by Śleṣa affection) (93)

**प्रदीपः**—यथा—**गिरय इति**। अत्र गिरित्वादिजातीनामनुन्नतत्वादिगुणैर्विरोधः वर्णनीयातिशयविवक्षया तु परिहारः । विश्वम्भरेति तु न जात्युदाहरणम् । जातेः क्रियया यथा—**येषामिति** । अत्र धाराधरत्वजातेरनुरागस्नेहपराप्तिक्रियाभ्यां विरोधः । लौहित्यचैक्कण्यार्थकत्वादविरोधः । एवमग्रेऽप्यविरोध ऊह्यः । तीक्ष्णत्वस्यानुरागेण विरोध इत्यपव्याख्या

**उ० :**—**गिरय इति** । नञल्पार्थे । तेनाल्पोन्नतियुजः अल्पवेगाः अल्पगभीराः इत्यर्थः । वायौ मन्दवेगत्वाद्युक्तया वर्णनीये तदतिशयप्रतीतेः । अतिलघुत्वम् अपकृष्टगुरुत्वम् । (आर्या छन्दः ।) **वर्णनीयातिशयेति** । वर्णनीयौन्नत्याद्यतिशयेत्यर्थः । अत्राद्ये शुद्धः द्वितीये श्लेषमूलः । एवमग्रेऽप्यूह्यम् । **येषामिति** । कण्ठपरिग्रहप्रणयिताम् आलिंगनप्रेमवत्ताम् । (धाराधरः खड्गः ।) तीक्ष्णः दारुणः । अनुरज्यते रक्तवर्णः प्रीतिमांश्च । स्नेहश्चिक्कणता सौहार्दं च । सगरसङ्गो युद्धप्राप्तिः (तत्र सक्तं मनो येषां तेषाम्)। प्रसाधनमलङ्करणम् । (निर्वर्त्यते क्रियते इति कौतुकम् । शार्दूलविक्रीडितं छन्दः) **लौहित्येति** । रुधिरसपर्कक्लृप्तेत्यर्थः । **अनुदाहरणत्वेति** । तीक्ष्णत्वस्य जातित्वाभावादिति भावः ।

**प्रभा :**—इत्यवधेयम् । **गिरय इति** । अनुन्नतिरल्पोच्चता । अचलत्वमल्पवेगत्वम् । अगम्भीराः अल्पगम्भीराः । नञो ह्यल्पार्थत्वात् । तथा चोक्तम्—'तत्सादृश्यं तदल्पत्वं तदन्यत्वं विरोधिता । अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिताः ॥' इति । तत्सादृश्यम्—अब्राह्मण इति । तदल्पत्वम्—अनुदरा कन्येति । तदन्यत्वम्—अघटः पट इति । विरोधित्वम्—असुरा इति । अप्राशस्त्यम्—अप्रशस्तो ब्राह्मणोऽब्राह्मण इति । अभावः—भूतले घटो नास्तीति । तेन जातिगुणविरोधोदाहरणत्वसङ्गतिरित्याहुः । वस्तुतस्त्वभावस्यापि जातिक्रियाद्रव्यातिरिक्तत्वेन गुणान्तर्भाव एवेति ग्रन्थकृद्वक्ष्यति । अतिलघुत्वमपकृष्टगुरुत्वम् । तस्य च विश्वम्भराद्रव्येण विरोधः । प्रकृते

सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम्
अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥ ९४ ॥
सततं मुसलासक्ता बहुतरगृहकर्मघटनया नृपते ।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥९५॥ (—)
पेशलमपि खलवचनं दहतितरां मानसं सतत्त्वविदाम् ।
परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥ ९६ ॥ (—)

Even that *Janārdana* who, to be sure, creates, protects and retracts this world but easily, (became) a *fish*, as the occasion demanded it it is miraculous! (94)

When you are there, O king, the hands of the wives of the Brāhmanas, which (hands) being ever pressed against the pestles in the course of the performance of diverse household duties had grown *hard*, become *tender* like the lotus (95)

The words of the villain, howsoever *tender*, make the mind of those who have an insight into truth, *burn acutely* The words of the good person, howsoever *harsh*, soothe it like the sandal paste (96)

**प्रदीपः**–स्यानम् । अनुदाहरणत्वप्रसङ्गात् । जातेर्द्रव्येण यथा—**सृजतीति**। अत्र शफरत्वजातेर्जनार्दनेन द्रव्येण विरोध । गुणस्य गुणेन यथा—**सततमिति** । कठिनत्वसुकुमारत्वयोर्विरोध । गुणस्य क्रियया यथा—**पेशलमिति** । अत्र पेशलत्वपरुषत्वगुणयोर्दाहप्रमोदक्रियाभ्या विरोध । यथा वा मद्भागु श्रीहर्षस्य—

सर्वत पुरत एव दृश्यसे पात्रता न पुनरेति चक्षुषो ।
हृद्गतोऽपि भुजयोर्न भाजन कोऽयमालि वनमालिन क्रम ॥

अत्र दर्शनगमनक्रिययोर्गमनाभावभुजभाजनत्वाभावाभ्याम् । उक्तत्रयातिरिक्तस्यैव गुणशब्देन विवक्षणात् । 'गिरय—' इत्यादि तथैवोदाहृतम् । गुणस्य द्रव्येण यथा—

**उ०**ः–तीक्ष्णस्यापि क्वचिदनुरागदर्शनाच्चेत्यपि बोध्यम् । (**सृजतीति**। हेलयैव लीलयैव । अवसरवशात कालगते । शफर मत्स्यो जात इद चित्रम् । आर्या छन्द ।) अत्र **शफरत्वेति**। लीलया सर्गमभवात् मत्स्यशरीरपरिग्रहस्यागमसिद्धत्वादविरोध । **द्रव्येणेति**। आगमपरत्वाज्जनार्दनपदस्य द्रव्यपरत्वम् । (**सततमिति**। मुसलेषु आसक्ता । बहुतर यत् गृहकर्म गृहव्यापार तस्य

प्रभा –तु तस्य नोदाहरणत्वम् । व्यक्त्यभेदेन विश्वम्भरत्वस्य जातित्वाभावादित्याह—
**विश्वम्भरेति** । **अनुदाहरणत्वेति** । तीक्ष्णत्वस्य जातित्वाभावादिति भाव । जनार्दनस्य मत्स्यशरीरपरिग्रह आगमसिद्ध इति विरोध । शराभिघाततैक्ष्ण्यातिशय

कौञ्चाद्रिरुद्दामदृषद्दृढोऽसौ यन्मार्गणाऽनर्गलशातपाते ।
अभून्नवाम्भोजदलाऽभिजातः स भार्गवः सत्यमपूर्वसर्गः ॥९७॥ (—)

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥९८॥ (मालतीमाधव १ ३१.)

---

That descendant of Bhrgu (viz. परशुराम)–at the unstemmed and sharp charge of whose arrows, the mount Krauñcha, solid as it was with massive rocks, became soft like a fresh lotus-petal–creates, in truth, things without a precedent! (97)

Some inscrutable feeling that transcends measure, which could not be described by any word, which has never again repeated itself in the sphere of experience, and which is bewildering owing to the great infatuation deepened by the lapse of discernment, chills (me) from inside and causes worry! (98)

---

प्रदीपः—क्रौञ्चेति । अत्राम्भोजदलाभिजातत्वस्य गुणस्य क्रौञ्चाद्रिणा द्रव्येण विरोधः । क्रियायाः क्रियया यथा—परिच्छेदेति । अत्र जडयति च तापं च

---

उ० :—चरणेन मत्पादेन कठिनाः द्विजपत्नीनां कराः भवति दातरि सति सरोजवत् सुकुमारा जाताः । गीतिश्छन्दः । ) विरोध इति । भवद्दानवशात् गृहव्यापारनिवृत्त्या तत्परिहारः । पेशलमिति । पेशलम् कोमलम् । सतत्त्व तत्त्वमिति च पर्यायः । मलयरसश्चन्दनद्रवः । (आर्या छन्दः । ) विरोध इति । पेशलपरुषपदयोः सुभगत्वदुःभगत्वार्थकतया दहतिपदस्य सन्तापार्थकतया च तत्परिहारः । सर्वत इति । दृश्यते । शाश्वतो ज्ञायते इत्यर्थः । क्रौंचेति । अतिमहद्भिः पाषाणैर्दृढोऽपि यस्य ( भार्गवस्य ) बाणानामनर्गलं अप्रतिनिरुद्धं शातवत् तीव्रं पाते सति नवपद्मपत्रकोमल इत्यर्थः । ( भार्गवः परशुराम । अपूर्वः सर्ग रचना यस्य । यत्कर्तृकः यत्कर्मको वा । उपजातिश्छन्दः । ) विरोध इति । भार्गवमहिम्नाऽभिजातपदस्य सुखेनैष्यत्वपरतया परिहारः । यद्यपि

---

प्रभा :—विदलनस्यौपचारिकत्वेन नवाम्भोजदलसौकुमार्यस्य विवक्षितत्वात्परिहार्यं । जडीकरणतापक्रिययोः कालभेदेन वा क्रियाया जलनिधिना विरोधस्तत्प्रभावत्वातिशयेन

**अथ वारामेको निलय इति रत्नाकर इति**
**श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।**
**क एवं जानीते निजकरपुटीकोटरगतं**
**क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ ९९ ॥** ( भल्लटशतक १०८ )

With our minds unsettled by thirst (of water and jewels), we had recourse to the ocean, thinking "This is the sole abode of waters, this the mine of jewels' Who could foresee that the sage would in a moment quaff it off, held in the cavity of his folded hands, with its sharks and crocodiles in agony? (99)

**प्रदीपः**—कुरुत इति क्रिययोर्विरोध । क्रियाया द्रव्येण यथा—**अयमिति** । अत्र पानक्रियाया कर्मीभूतेन जलनिधिना विरोध । यद्यपि जलनिधीनां बहुत्वेन न द्रव्यविरोधोदाहरणत्वमुचित तथाप्येकलवणाम्बुधिपरतया समर्थनीयम् । द्रव्यस्य

**उ०**: —कुमार. क्रौंचदारण इति कोशात्स्कन्दे तत्त्व प्रसिद्धम् । तथाऽपि स्कन्दसाहाय्यार्थं भार्गवोऽपि तत्कृतवानिति पुराणे प्रसिद्धम् । **परिच्छेदेति** । मालतीमाधवे मकरन्द प्रति माधवस्य स्वावस्थाकथनमेतत् । परिच्छेद इयत्ता तमतीतस्तद्रहित इत्यर्थ । सकलानां सामान्यविशेषशक्तलाक्षणिकव्यञ्जनिकानां वचनानामविषय । तैर्निर्वक्तुमशक्य इति भाव । पुनरन्यदा कालान्तरे अस्मिन् जन्मनि अनुभवपथ तद्विषयत्व यो न प्राप्त इत्यर्थ । विवेकप्रध्वंसादिति । विवेको दोषगुणविभाग । प्रशब्देन समूलोन्मूलनलक्षण प्रकर्षस्तेन मोहप्रकर्षस्तेन च रागातिशयस्तेन च विप्रलम्भातिशयो व्यङ्ग्य । तद्धेतुका उपचितिं वृद्धिं प्राप्तो यो महामोह सकलविषयाणामज्ञान विपरीतज्ञान वा यत्र तादृशश्चासौ गहनश्च दुर्लक्ष्य इत्यर्थ । ईदृश कोऽप्यनिर्वचनीय विकार अन्त अन्तःकरण जडयति विषयग्राहिवृत्तिविषये स्तब्ध करोतीत्यर्थ । ( शिखरिणी छन्द । ) **विरोध इति** । अत्र विरहवैचित्र्येण कालभेदात्तत्परिहार । **अयमिति** । ( भल्लटककृते भल्लटशतके प्रथम् । अथ जलनिधि समुद्र वारा जलाना निलय स्थानम् । तृष्णया तरलितं आक्रान्तं मनो येषा तैरस्माभि । ) स्वीयकरचुलुकगर्तगत । कोटरो गर्त । ( ताम्यन्त ग्लायन्त तिमय मत्स्या मकराश्च यत्र

समदमतङ्गजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् ।
क्षितितिलक त्वयि तटजुषि शंकरचूडापगाऽपि कालिन्दी ॥ १०० ॥ (—)

( ४४ ) स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥ २५ ॥

स्वयोस्तदेकाश्रययोः । रूपं वर्णः संस्थानं च । उदाहरणम्—

---

In consequence of its contact with the river formed by the flow of the liquid ichor of (your) intoxicated elephants, even the river on the crown of Śankara (i. e. the Ganges) becomes, O crestmark of Earth, the Jumna, when you encamp on its (i. e. of the Ganges) bank. (100) I

## 25. SVABHĀVOKTI.

As for Svabhāvokti, it consists in the description of the action or form peculiar to the child etc.

*Gloss* :—स्व i. e. those (action and form) that are found solely in them (i. e. child etc.). Form i. e. Complexion and Posture. To illustrate.—

---

प्रदीपः – द्रव्येण यथा—समदेति । अत्र गङ्गायमुनयोर्विरोधः । स्वभावोक्तिरिति । स्वत्वं च स्वमात्राश्रितत्वम् । न तु स्वाश्रितत्वमात्रम् । अतो न साधारणधर्मवर्णनेऽ-

---

उ० ः—तादृशम् । शिखरिणी छन्दः ।) विरोध इति । अगस्त्यतपःप्रभावातिशयेन परिहारः । न द्रव्येति । किं तु जातीत्यर्थः । एतेन 'असंभवोऽर्थनिष्पत्तेरसंभाव्यत्ववर्णनम्' इत्यसंभवाऽलंकारोऽस्तीति परास्तम् । तदुक्तेर्विरोधपरिपोषकत्वात् । समदेति । मत्तगजमदजलप्रवाहनदीसंबंधात् । शिवस्य जटा जटासमूहस्तत्संबंधिनी आपगा गंगा, । कालिंदी यमुना । (गीतिश्छन्दः ।) विरोध इति । कालिंदीपदस्य श्यामाभामात्रपरत्वात्परिहारः । इति विरोधः । स्वमात्रेति । डिम्भादेरित्यनेनैव संबंधात्रगतेः स्वशब्दोऽन्ययोगव्यवच्छेदक इति भावः । रूपशब्देनेति । अजहत्स्वार्थलक्षणयेति भावः । अत्र चमत्कृतिहेतुत्वं अलंकारसामान्यलक्षणप्राप्तम् । तेन 'पश्य चायं बलीवर्दो घासमत्ति मुखेन तु' इत्यादेर्निरासः । साधारणस्वभाववर्णनस्य स्फुटत्वान्नालंकारत्वम् । असाधार-

---

प्रभा ः—परिह्रियते । एवं कालिन्दीपदस्य श्यामत्वेनौपचारिकतया विरोधपरिहार इति दिक् । इति विरोधप्रकरणम् ॥ २३ ॥ वर्णस्वभावोक्तिः प्रथममरुणच्छाय इत्यादौ बोध्या

पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाऽङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥१०१॥

( हर्षचरित. ३ )

## ( ४५ ) व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ।

व्याजेन व्याजरूपा वा स्तुतिः । क्रमेणोदाहरणम्—

His sleep over, the horse, stretching out his hind legs, drawing out his body that appears extensive owing to the arch of the spine, with (his) neck bent, pressing (his) mouth against the bosom, tossing his mane smudged with dust, with his nostrils and lips ceaselessly moving in his craving for a mouthful of fodder, and neighing gently, scratches the ground with the hoof ! (101)

### 26. VYĀJASTUTI.

'Vyājastuti' is what is censure or praise on the *face of it*, but whose upshot [illegible] otherwise.

*Gloss.*—( The figure is so called because therein is found ) either praise in disguise or pretended praise Instances in order —

---

**प्रदीपः** – तिव्याप्तिः । रूपशब्देन वर्ण· सस्थान चोच्यते । उदाहरणम्— **पश्चादिति** । अत्राऽश्वमात्रगतयो· क्रियासस्थानयोर्वर्णनम् । **व्याजस्तुतिरिति** । मुखे निन्दावगतौ यत्स्तुतौ पर्यवसान स्तुतेर्वा मुखेऽवगमो निन्दाया पर्यवसान तद्व्याजस्तुतिपदवाच्यमित्यर्थः । कथमुभयोरनेनाभिधानमिति चेत्, आद्यस्य व्याजेन

---

**उ० :** – णस्तु लोकसिद्धोऽपि प्रतिभामात्रवेद्यत्वादलौकिकत्वद्धातीयलङ्कारः। डिम्भ शिशुः । आदिना युवतिमुग्धकातरतिर्यग्भ्रांतहीनपात्रादिसंग्रहः । एनामेव 'जाति. ' इति केचिद्व्यवहरन्ति । **पश्चादिति** । पश्चादंघ्री पश्चिमपादौ प्रसार्य त्रिकं पृष्ठवंशः तस्य नम्रतया विस्तृतमङ्गं उच्चैरतिशयेन द्राघयित्वा दीर्घं कृत्वा आभुग्नकंठो वक्रग्रीव· उरसि मुखं संयोज्य सटा ग्रीवाकेशाः तान् विधूय कंपयित्वा तृणग्रासवाञ्छया अनवरतं निरंतरं चलन्तौ प्रोथतुण्डावोष्ठाधरौ ओष्ठाग्रे वा यस्य ( क्ष्मा भूमिम् । विलिखति उत्किरति । स्रग्धरा छन्दः । ) **अत्रेति** । पश्चादि-

---

**प्रभा :** – पश्चादित्युदाहरणेऽङ्घ्रिप्रसारणादिक्रियाप्रयुक्त सस्थान बोध्यम् । इति स्वभावोक्तिः ॥ २४ ॥ **रूढिरिति** । एतद्याचष्टे—**पर्यवसानमिति** । इति व्याजस्तुतिः ॥ २५ ॥

हित्वा त्वामुपरोधवन्ध्यमनसां मन्ये न मौलिः परो
लज्जावर्जनमन्तरेण न रमामन्यत्र संदृश्यते ।
यस्त्यागं तनुपेतरां मुखशतैरेत्याश्रितायाः श्रियः
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥ १०२ ॥ (—)
हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥ १०३ ॥ (—)
(Cited in पुञ्जराज's टीका on वाक्यपदीय २·२४९.)

---

Excepting yourself none else, I believe, is the foremost of those whose minds are void of complaisance: in none else but Ramā (i. e. लक्ष्मी) is found shamelessness (so flagrant). Since, you resolutely renounce Wealth that takes your shelter, coming to you through hundreds of openings; and since she (Wealth) abides only in you, even after having suffered the rebuff occasioned by renunciation! (102)

O ocean, that have easily surpassed the Buddha, where is the need for prolixity of words? There is none else that has, like you, taken the vow to bestow favour on others! Since you, out of compassion, render help to the Desert in shouldering the burden of infamy fallen to (its) lot, owing to (its) being averse to do an obligation to the thirsty traveller! (103)

---

प्रदीपः—स्तुतिरिति ग्रहणात्, अन्त्यस्य तु व्याजरूपा स्तुतिरिति । तत्राद्या यथा—हित्वेति । स्पष्टम् । अन्त्या यथा—हे इति । अत्रोपकारवैमुख्ये पर्यवसानम् ।

---

उ० :—त्यादिना सत्यागस्य, घासग्रासेत्यादिना क्रियाया इत्यर्थः । इति स्वभावोक्तिः । रूढिः । पर्यवसानम् । अन्यथा । स्तुतौ निंदायां वा । मुखे इत्यनेन पर्यवसानाभाव वदन् बाधितत्वमभिप्रैति । अत एव नास्या ध्वनित्वम् । तत्र हि निर्बाधेन वाच्येन व्यंजनयाऽर्थांतरावगति । न चैवं प्रकृते । बाधेन लक्षणाप्रसरात् । उपकृत बहु नामेत्यादिवत् इति बोध्यम् । हित्वेति । अनुरोधहीनमनसां मूर्धन्यस्त्वदपरो न । लज्जाशून्यत्व च लक्ष्मीं विना नान्यत्र । उभयत्र हेतुमाह—य इति । मुखशतैः युद्धोदिप्रकारशतैः । (शार्दूलविक्रीडितं छन्दः ।) राज्ञ आश्रितत्यागरूपनिंदाव्याजेन महादातृत्वेऽपि लक्ष्मीरत्नाभिधानात्स्तुतिः । हे इति । हेलया लीलया जिता बोधिसत्त्वा बौद्धा येन । अतिकारुणि-

(४६) सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥२६॥

एकार्थाऽभिधायकमपि सहार्थबलात् यत् उभयस्यावगमकं सा सहोक्तिः । यथा—

सह दिअहणिसाहिँ दीहरा सासदण्डा
सह मणिवलएहिँ बाप्पधारा गलन्ति ।
तुह सुहअ विओए तीअ उव्विग्गिरीए
सह अ तणुलदाए दुब्बला जीविदासा ॥ १०४ ॥ (कर्पूरमञ्जरी. २.९.)

---

## 27. SAHOKTI.

That is 'Sahokti' where one (expression), on the strength of a word signifying 'together with,' ~~conveys two senses.~~ significant for two things

*Gloss* :—That is 'Sahokti' where an expression, though expressing one sense, becomes the conveyer of two, on the strength of a word meaning 'together with.'

To illustrate:—

The heavy sighs grew long *along with* the days and nights; streams of tears slipped *down along with* the jewelled bracelets; and the hope of life grew feeble *along with* the creeper-like body of that lady who got depressed at (her) separation from you, O blessed one! (104)

---

प्रदीपः—सेति । शब्दशक्तया एकार्थाभिधायकं पदं यत्सहार्थान्वयबलादनेकार्थाभिधायकं सा सहोक्तिः । 'चैत्रमैत्रौ गच्छतः' इत्यादौ तु शब्दशक्त्यैवोभयाभिधानम् ।

---

उ० :—कामानामपि जेतरित्यर्थः । परहिताधाने परहितकरणे । ( शार्दूलविक्रीडितं छन्दः । ) मरुदेशेन एकाकिना निर्जलत्वात् तृषितपांथोपकाराभावजन्याऽयशोभारो गृहीतः । त्वयाऽपि क्षारजलत्वात् तं भारं गृह्णता तस्य साहाय्यकेनोपकारः कृत इति स्तुत्या तृषितपांथाऽनुपकारेण निंदायां पर्यवसानम् । न चात्राऽप्रस्तुतप्रशंसैवास्तु । स्तुतिनिन्दात्मकतया विच्छित्तिविशेषात् । कार्यकारणभावादिसंबन्धाभावाच्च । शुद्धव्यञ्जनाविषयत्वाभावाच्च । ननु स्तुत्या निन्दायाः कथमलंकारत्वम्, वाच्यानुत्कर्षकत्वात् इति चेन्न । बीभत्सहास्यान्यतर-

---

प्रभा :—शब्दशक्त्येति । विशेषणपदस्य समानविभक्तिकनामार्थान्वयबोधकत्वसामर्थ्येन क्रियापदस्य च प्रथमान्तोपस्थाप्यान्वयबोधकत्वसामर्थ्येन चेत्यर्थः ।

**श्वासदण्डादिगत दीर्घत्वादि शाब्दम्, दिवस-निशादिगत तु सहार्थसामर्थ्यात्प्रतिपद्यते ।**

The attribute of being long etc is *expressed* in so far as it pertains to the heavy sighs etc. As relating to the days and nights etc., however, it is conveyed on the strength of (the word) with the sense of 'together with'

**प्रदीपः**– यथा—**सहेति** । अत्र दीर्घत्वादीना श्वासादिभिरन्वय साक्षादेव शाब्द, दिवसादिभिस्तु सहान्वयबलात् ।

**उ० :**–रसालवनत्वान्नियस्य तद्रसानुकूलोत्कर्षकत्वस्य सत्त्वात् इत्याहु । अन्यस्तुत्याऽन्यस्तुतेरन्यनिन्दयाऽन्यनिंदाया अन्यनिन्दयाऽन्यस्तुतेर्गम्यत्वेऽप्येषा । स्तुतिपदेन बोधनस्य बोधनात् । निन्दादीना व्यङ्ग्यत्वेऽप्यलङ्कारत्वमप्रस्तुतप्रशसावद्बोध्यम् । **इति व्याजस्तुतिः** । **एकार्थाभिधायकम्** । एकान्वय्यर्थाभिधायकम् । **अनेकेति** । अनेकान्वय्यर्थाभिधायकमित्यर्थ । अत्र सहशब्दार्थ साहित्यम् एकजातीयैककालिकक्रियाद्यन्वयित्वसमनियतम् । 'पुत्रेण सहागत' इत्यत्र पुत्रप्रतियोगिकसाहित्यवानागत इति शाब्दबोध । तेन पुत्रवृत्त्यागमनसमानकालिकसमानदेशागमनवान् पितेति मानसो बोध । तत्र तृतीयान्तस्य विशेषणतया गुणत्वम् । प्रथमान्तस्य विशेष्यतया प्रधानत्वम् । एव च प्रथमान्ते आगमनस्य शाब्दोऽन्वय । तृतीयान्ते तु सहार्थसामर्थ्यादार्थ । एव च यत्र गुणप्रधानभावावच्छिन्नयो शाब्दार्थमर्यादया एकधर्मसबन्धस्तत्रायमलङ्कार । समुच्चये तूभयत्र प्राधान्य,

**प्रभा**.–**एकार्थेति** । उक्तैकार्थान्वयगमकमित्यर्थ । **सहार्थेति** । समानकालीनैकधर्मसत्त्वरूपसाहित्यान्वयबलादित्यर्थ । **अनेकार्थेति** । अनेकार्थान्वितस्वार्थबोधकमित्यर्थ । एतच्चोदाहरणे स्पष्टीकरिष्यते । **सहेति** । 'सह दिवसनिशाभिर्दीर्घा श्वासदण्डा सह मणिवलयैर्बाष्पधारा गलन्ति । तव सुभग वियोगे तस्या उद्वेगशालिन्या सह च तनुलतया दुर्बला जीविताशा ॥' अत्र यथा 'पुत्रेण सहागत पिता' इत्यत्र पुत्रवृत्तिधर्मसमानकालीनधर्मवान्पिता । आगत इत्यागमनस्य पितर्येव शाब्दोऽन्वय । पुत्रे तु सहार्थसाहित्यबलादागमनबोध । आगमनरूपधर्मस्यैवागतपदसमभिव्याहारेण धर्मत्वेन बोधात् । (विरोधात्) । एवमिहापि श्वासदण्डेषु दीर्घत्वान्वय शाब्द विशेषतो

**'(५७) विनोक्तिः सा विनाऽन्येन यत्रान्यः सन्न नेतरः ।**

क्वचिदशोभनः, क्वचिच्छोभनः । क्रमेणोदाहरणम्—

अरुचिर्निशया विना शशी शशिना साऽपि विना महत्तमः
उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः ॥ १०५ ॥ (—)

## 28 VINOKTI.

That is 'Vinokti' where *without* one thing another ceases to be good or ceases to be its contrary (i e non good)

*Gloss* —(The thing becomes) in some cases, bad, in some, good Instances in order —

In the absence of the Night, the Moon becomes void of splendour; likewise, in the absence of the Moon, it (i e Night) becomes one patch of (महत्) *of darkness In the absence of both, the spark of love on the part of lovers does not flash at all* ! (105)

**प्रदीपः–विनोक्तिरिति** । सन्न शोभनो न, नेतरो नाशोभन इत्यर्थः । तेन केनचिद्विना कस्यचिदशोभनत्वं शोभनत्वं वा प्रतिपाद्यते सा विनोक्तिः । तत्राशोभनत्वं यथा–**अरुचिरिति** । शोभनत्वं यथा—**मृगेति** । अत्र मृगलोचनया दुष्टसुहृद्विशेषेण च विना नरेन्द्रसूनोर्विचित्रव्यवहारप्रगल्भत्वचन्द्रसुन्दराशयत्वरूपं शोभनत्वमुक्तम् । **परिवृत्तिरिति** । परिवृत्तिरिति

उ०ः–शाब्द एव चैकान्वय इति ततो भेद । 'चैत्रमैत्रौ सह गच्छत' इत्यादावपि तथैवेति नायमलङ्कार । इयञ्च चालङ्कारसामान्यलक्षणप्राप्तम् । तेन 'अनेन सार्द्धं विहराम्बुराशेः' इत्यादौ नेयम् । इयञ्च चास्याः श्लेषमित्तिकाभेदाध्यवसानात्मकेन केवलाभेदाध्यवसानात्मकेन वाऽतिशयेनानुप्राणने भवतीति बोध्यम् । (**सहेति** ।) 'सह दिवसनिशाभिर्दीर्घा श्वासदण्डा सह मणिवलयैर्बाष्पधारा गलन्ति । तव सुभग वियोगे तस्या उद्विग्नाया सह च तनुलतया दुर्बला जीविताशा ।' (कर्पूरमञ्जर्यां द्वितीयजवनिकान्तरे नायिकाया विरहावस्थावर्णनम् ।) दण्डाकारा श्वासा श्वासदण्डा । बाष्पो नेत्राम्बु । अत्र दिवसनिशादौ दीर्घत्वं दुःखदायित्वादौपचारिकम् । इय धर्मयोरभेदाध्यवसायमूला । **इति सहोक्तिः** । **विनोक्तिरिति** । अत्रापि विनाशब्दार्थ एव विवक्षित । तेन नञ् निर् वि-

**प्रभा**ः–दिवसनिशादौ साहित्यप्रतीत्या आर्षं इति लक्षणसंगति । दीर्घादिपदं तु दिवसादीनामपि धर्मत्वेन दीर्घत्वादिबोधे तात्पर्यमाहकतया हेतुरिति बोध्यम् । इति सहोक्तिप्रकरणम् ॥२६॥

मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः ।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः ॥१०६॥ (—)

**( ४८ ) परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः ॥ २७ ॥**

When *apart from* the deer-eyed one, this son of the king becomes bright with the flash of (his) genius for diverse affairs. He comes to possess a heart as lovely as the moon, *in the absence of* that friend! (106)

## 29. PARIVṚTTI.

'Parivṛtti' is an exchange that may take place of objects for (others) equal or unequal (to them).

---

**प्रदीपः**—लक्ष्यालङ्कारनिर्देशः। पूर्वाचार्याणां तथैवोद्देशदर्शनात्। अतो न लक्ष्यलक्षणसंदेहः। समासमैरिति विभागः। विनिमयो हि केनचिद्वस्तुना दत्तेन कस्यचिदादानम्। तच्च क्वचित्समेन समस्य। क्वचिदसमेनासमस्य। अन्त्यमपि द्विधा—क्वचिन्न्यूनेनोत्तमस्य, क्वचि-

---

**उ०**:—अंतरेण-ऋते-रहित-विकलेत्यादिप्रयोगेऽपि इयमेव। **अरुचिरिति**। (अपरवक्त्रं छन्दः।) न चात्र शशिसहितैव निशा रमणीयेति सहोक्तिध्वनिरेव युक्तः। तत्कृतस्यैव चमत्कारस्य सत्त्वादिति वाच्यम्। वाच्यार्थकृतस्य चमत्कारस्यानपलपनीयत्वात्। **मृगेति**। (विचित्रेषु व्यवहारेषु प्रतिभा झटिति स्फूर्तिः तस्याः प्रभया प्रकाशेन प्रगल्भः चतुरः। अमृतद्युतिः चन्द्रः तद्वत् सुन्दरः स्वच्छः आशयः अन्तःकरणं यस्य।) य एव राजपुत्रः स्त्रीमोहितः कृत्यविकलः स एव तया विनाऽतिव्यवहाराभिज्ञः। य एव दुष्टसुहृदालिङ्गितो विषमहृदयः स एव तेन विनाऽतिसदयहृदय इत्यर्थः। (मालभारिणी छन्दः।) इति वि-

---

**प्रभा**:—विनोक्तिरित्यादि स्पष्टम्। इति विनोक्तिप्रकरणम् ॥ २७ ॥ न्यूनेनोत्तमस्येति। न्यूनेन दत्तेनोत्तमस्यादानमित्यर्थः। एवमुत्तमेन दत्तेन न्यूनस्योपादानमित्यर्थो ज्ञेयः। अत्र समेन समस्येत्यस्यानुपादेयत्वेन समत्वविवक्षायां चतुर्थोऽपि भेदः कैश्चिदुदाहृतः। यथा—'अस्थिमालामयीं दत्त्वा मुण्डमालामयीं तनुम्। गृह्णतां त्वत्पुरस्थानां को लाभः स्मरशासन ॥' इति। एवं दानाद्यभावेऽपि धर्मिधर्मभावव्यत्यासे वा विपर्ययाख्योऽलंकार उक्तः। यथा—'काचो मणिर्मणिः काचो येषां तेऽन्ये हि देहिनः। सन्ति ते सुधियो येषां काचः काचो मणिर्मणिः ॥' अत्र काचस्य धर्मित्वं मणेर्धर्मत्वमुक्त्वा अनन्तरं मणेर्धर्मित्वं काचस्य धर्मत्वमुक्तमिति धर्मभावविपर्यासः। धर्मस्पर्शो यथा—'यस्य न सविधे दयिता'—

परिवृत्तिरलंकारः । उदाहरणम्—

> लतानामेतासामुदितकुसुमानां मरुदयं
> मतं लास्यं दत्वा श्रयति भृशमामोदमसमम् ।
> लतास्त्वध्वन्यानामहह दृशमादाय सहसा
> ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥ १०७ ॥ (—)

अत्र प्रथमेऽर्धे समेन समस्य, द्वितीये उत्तमेन न्यूनस्य ।

> नानाविधप्रहरणैर्नृप संप्रहारे
> स्वीकृत्य दारुणनिनादवतः प्रहारान् ।

'Parivṛtti' is (the name of) the figure To illustrate.—

Bestowing graceful movements that are highly prized on those Creepers in blossom, this Wind accepts (from them) often unequalled fragrance, the Creepers, on the contrary, receiving at once the glance of the passers by, give (in return) a blend of anguish, disease, delusion, sobs and swoons! (107)

*Here in the first half, there is an exchange of an equal for another* equal, in the second half, of the superior for the inferior.

The host of haughty hostile warriors, having received, in the encounter, *blows of terrific din, with a variety of weapons, made*

प्रदीपः—उत्तमेन न्यूनस्येति द्विविधेयमित्यर्थः । समासमत्वं चोपादेयत्वानुपादेयत्वाभ्याम् । तत्राद्यद्वयं यथा—लतानामिति । अत्र प्रथमार्धे लास्येनोपादेयतया समस्यामोदस्य,

उ० :—नोक्तिः । कस्यचिदादानमिति । परकीयस्य कस्यचिदादानमित्यर्थः । विनिमयपदस्य तत्रैव शक्तेः । एवमादाय दानमपि सा । दानादानव्यवहारः कविकल्पित एव न वास्तवस्तत्रालंकारत्वाभावात् । तेन 'क्रीणन्ति यत्र मुक्ताभिर्बदराण्यपि बालिका.' इत्यत्र नेयम् । परकीयस्येत्युक्तेः 'किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम्' इत्यत्र नेयम् । विनिमयाभावात् । लतानामिति । (अयं मरुद्वायुर्लतानाम् असमं अनुपमं आमोदं परिमलं श्रयतीत्यन्वयः । मतं मनोरमं लास्यं नृत्यं दत्वा । अर्थात्

प्रभा :—इति पदे । अत्र हि पूर्वार्धे तुहिनदीधितौ दवदहनत्वमुत्तरार्धे तु दवदहने तुहिनदीधितित्वमिति विपर्यासः । न तु धर्मधर्मिविपर्यासः । तस्य यथास्थितत्वेनैव विवक्ष-

दृप्तारिवीरविसरेण वसुंधरेयं
निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥ १०८ ॥ (—)

अत्र न्यूनेनोत्तमस्य ।

**( ४९ ) प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः ।**
**तद्भाविकम्**

भूताश्च भाविनश्चेति द्वन्द्वः । भावः कवेरभिप्रायोऽत्रास्तीति भाविकम् । उदाहरणम्—

over to you, O king this Earth, whose act of embracing (you) was not to be intercepted by a separation (from you)! (108)

Here is an exchange of the inferior for the superior

## 30 BHĀVIKA

That is "Bhavika" where objects past or future, come to be visualised as though they were present

*Gloss* —भूतभाविनः is a Dvandva compound to be dissolved as भूताश्च भाविनश्च (past and future) It is called 'Bhavika' since therein is present the Bhāva i e vision (?) of the poet. To illustrate —

प्रदीपः—द्वितीयार्धे उपादेयतया उत्तमया दृशा आधिव्याधीनामतादृशतया न्यूनानां विनिमयः । अन्त्या यथा—नानेति । अत्रोत्तमया वसुधरया न्यूनानां प्रहाराणां विनिमयः । प्रत्यक्षा इति । भूतभाविन इति द्वन्द्वः न कर्मधारय इत्यविरोधः । भूता भा-

उ०:—लताम्य । अध्वन्यानां पान्थानाम् । अहह इति खेदे । आधिः मनःपीडा, व्याधिः कायपीडा, भ्रमिः दिग्भ्रमणदर्शको विकारः, रुदितम् रोदनम्, मोहो निश्चेष्टता, एषां व्यतिकरः समूहम् । ) मरुत्पथेन लतानां लास्यदर्शनात् लतादर्शनेन च पथिकानामाध्यादिदर्शनादात्र्न कविकल्पितम् । ( शिखरिणी छन्दः । ) नानेति । दृप्तारिवीरसमूहेन हे नृप युद्धे ऽच्छलप्रहारा स्वीकृत्य तुभ्यं विरहशून्याऽऽलिङ्गनवती वसुमती वितीर्णेत्यर्थः । ( वसन्ततिलका छन्दः । ) इति परिवृत्तिः । प्रत्यक्षतयेति । अलौकिकप्रत्यक्षविषया अपि लौकिकप्रत्यक्षविषयतयेत्यर्थः । अभिप्रायो लौकिकप्रत्यक्षविषयत्वेन प्रतिपादनेच्छा । न

प्रभा —नान् । दयितविरहोपधिना परस्परधर्मविनिमयासत्त्वेन च वियदाणान्निवभेदम् । इति परिवृत्तप्रकरणम् ॥ २८ ॥ अविरोध इति । भूतानां भाविकस्यात्रतो तात्पर्यं ।

आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥ १०९ ॥ (—)

अत्र आद्ये भूतस्य, द्वितीये भाविनो दर्शनम् ।

(५०) काव्यलिङ्गं हेतोर्वाक्यपदार्थता ॥ २८ ॥

I see (your) eyes as they were (इति) when the collyrium *was* in them, directly do I visualise your figure (as it would be) with the set of ornaments that *will be* there (109)

*Here in the first half there is visualization of the past, in the second of the future*

## 31 KĀVYALINGA.

'Kāvyalinga occurs where the reason assumes the form of the sense of a sentence or a word

प्रदीपः—विनो भावा यत्प्रत्यक्षा इव क्रियन्ते प्रत्यक्षतयाऽभिधीयन्ते तद्भाविकम् । भाव कवेरभिप्रायो निश्चयादिप्रतीतिविषयकोऽत्रास्तीति व्युत्पत्तेरित्यर्थः । उदाहरणम्—आसीदिति । अत्र पूर्वार्धे भूतस्याञ्जनस्य उत्तरार्धे भाविनो भूषणसंभारस्य प्रत्यक्षतयाऽभिधानम् ।

उ०:—चेयं भ्रान्तिः । भूतभावित्वेनैव निर्देशात् । अञ्जनाद्यसत्त्वेऽपि तत्कृतशोभाद्यभिप्रायेण तथाप्रयोगाच्च । न चैव स्वभावोक्तिः । तत्र वस्तुधर्मो वैचित्र्याधायकः । इह तु कवेस्तन्निबद्धस्य वाऽभिप्राय इति विशेषात् । आसीदिति । अत्र यदञ्जनं दत्तमासीत् इति तद्युक्ते लोचने पश्यामीत्यर्थः । भाविभूषणे सम्भ्रियते सा । तद्युक्तामित्यर्थः । (भाविभूषणानां संभारः समूहो यत्र तादृशीम् इति वा) यथाश्रुते आसीदिति पश्यामीत्यन्वये भूतादेर्लौकिकसाक्षात्कारविषयत्वं नोपपादितं स्यात् । अत्राञ्जनभूषणादिकं विनाऽपि स्वरूपवैलक्षण्येनैव शोभातिशयात्तेषां वैयर्थ्यं ध्वन्यते । क्वचिद्भूतत्वादिनिर्देशं विनाप्येव दृश्यते । 'अह विलोकयेऽद्यापि युध्यतेऽत्र सुरासुराः' इत्यादौ । अत्रेदं चिन्त्यम् । असम्बन्धे सम्बन्धरूपातिशयोक्त्यैव गतार्थोऽयम् । प्रत्यक्षासम्बन्धेऽपि तत्सम्बन्धवर्णनात् । इति भूतादिरस्त्वसम्बन्धेऽपि तत्सम्बन्धवर्णनाद्येति । साऽनुप्राणिकाऽत्रेति कश्चित् ।

प्रभाः—निश्चयादीति । अञ्जनादि पूर्वकालीनमसत्त्वनिश्चयसूचनेऽभिप्राय इत्यर्थः । आदिनाञ्जनादिकं विनापि तत्कृतशोभासत्त्वादिकं गृह्यते । इति भाविकप्रकरणम् ॥ २९ ॥

वाक्यार्थता यथा—

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान्।
नमन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिभाक्
महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥ ११० ॥ (—)

---

*Gloss*:—In the form of the sense of a sentence as in:—

That, in all probability, I never saluted you, O enemy of Pura (i. e. Śiva), in any of my former births was inferred (by me) from the manifestation of (my) body. Now, saluting (you) and (thereby) becoming emancipated, when I become bodiless, I shall fail to salute you, also in time to come. O great lord! pardon *both these lapses* (on my part)! (110)

---

**प्रदीपः**—**काव्यलिङ्गमिति** । अत्र विवक्षितविवेकेन हेतुवचनं काव्यलिङ्गमिति लक्षणम् । वाक्यपदार्थतेति विभागः । वाक्यार्थता पदार्थता चेत्यर्थः । तत्र वाक्यार्थता यथा—**वपुरिति** । अत्र पुरा क्वचिदपि नाहं भवन्तं प्रणतवान् अग्रेऽप्यहमनतिभा-

---

**उ०**:—**भाविकम्** । **हेतोरिति** । स्वतोऽनुपपद्यमानार्थोपपादकहेतोर्वचनमित्यर्थः । **पदार्थतेति** । पदमप्येकमनेकं चेति बोध्यम् । व्याप्त्याद्यनिर्देशान्नानुमानसंकरः । श्रोतुर्यल्लिङ्गकानुमितिमुद्बोधयिषया कवेर्व्याप्त्यादिविशिष्टहेतुबोधककाव्यनिर्माणं तल्लिङ्गमनुमानविषयः । काव्यलिंगजानुमितिस्तु न कविना श्रोतुर्मुद्बोधयिषिता किं तु श्रोतर्युत्पिपादयिषितेति भेद इत्यन्ये । **वपुरिति** । क्वचित्कस्मिन्नपि जन्मनि । ( पुरा प्रायः भवन्तं अहं न प्रणतवान् । इदं वपुषः प्रादुर्भावादनुमितम् । ) त्वन्नतौ शरीरोत्पत्तेरभावात् । ( संप्रति नमन्मुक्तः अतनुः शरीरशून्यः अहं अग्रेऽपि अनतिभाक् नतिरहितः । इदं अपराधद्वयं क्षंतव्यम् । शिखरिणी छन्दः । ) अग्रेऽप्यनतौ अतनुत्वमेकपदार्थो हेतुः । अतनुत्वे च नमन्मुक्त इत्यनेकपदार्थो हेतुः । **अनमनमपराधे इति** । यद्यप्यनमनमेवापराधस्तयोश्च न हेतुहेतुमद्भावस्तथापि तदिदमित्यस्य सर्वनाम्नो बुद्धिस्थपरामर्शित्वात् दुरितविशेषरूपमित्यर्थः । क्षंतव्यमित्यस्य च लक्षणया नाशनीयमित्यर्थ इत्यदोषः । **प्रणयीति** । ( मालतीमाधवे पंचमाङ्के ) मालतीवधोद्यतम-

---

**प्रभा**:—**अनमनमपराध इति** । अपराधोऽत्र दुरितं विवक्षितम् । तत्रानमनस्य हेतुत्वम् । अपराधस्य क्षमणं च तत्फलानुत्पादनं तन्नाशनं वेति नानुपपत्तिः । तदिति चानम-

अनेकपदार्थता यथा—

प्रणयिसखीसलीलपरिहासरसाधिगतै—
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥१११॥ (मालतीमाधव. ५·३१.)

एकपदार्थता यथा—

भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं
हा सोपानपरम्परां गिरिसुताकान्तालयालंकृतिम् ।
अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥ ११२ ॥ (—)

---

In the form of the sense of words more than one, as in.—

Let this arm alight unawares, like the staff of Yama, on your head, when you are hurling your weapon, with the intent of killing, against that figure there, which gets distressed even with the flicks of the tender शिरीष blossoms, sustained, thanks to the fancy for sportive merriment on the part of (her) loving friends ! (111)

In the form of the sense of one word as in —

Farewell to thee, O Smearing of ashes ! O Rosary of Rudrākṣas, good bye ! Alas ! how I feel for the flight of steps, the ornament of the temple of Śiva, the beloved of Pārvatī ! This day, we are being plunged by Śiva, pleased with the worship, in the great *delusion* called Emancipation, that puts an end to the light (आलोक) of pleasure derived from treating you (viz भस्मोद्धूलन etc.) with esteem ! (112)

---

प्रदीप : — गित्यवान्तरवाक्ययोरर्थोऽनमनमपराधे हेतुः । अनेकपदार्थता यथा—प्रणयीति । अत्र शस्त्रोपक्षेपो भुजपाते हेतुः । न चायं वाक्यार्थः । 'शस्त्रमुपक्षिपतः' इत्येतावन्मात्रस्यावाक्यार्थत्वात् । तत्र वपुषि वधाय शस्त्रमुपक्षिपत इत्यस्यापि न वाक्यत्वम् । विशेषणत्वादिति

---

उ० : — घोरघण्टं प्रति माधवस्येयमुक्तिः । प्रियसख्याः सलीलो यो हास्यरसस्तेन प्राप्तैः । ललितम् मनोहरम् । ( तत्र वपुषि वधाय शस्त्रं उपक्षिपतः तव शिरसि एष भुजः अकाण्डे अकाले यमदण्ड इव पततु इत्यन्वयः । नर्कुटकं छन्दः । ) अवाक्यार्थत्वादिति । विशेषणीभूतार्थोपस्थापकत्वेन विशेष्यसाकांक्षत्वादिति भावः ।

---

प्रभा : — नद्वयजन्य दुरितद्वयपरामर्शकम् । न त्वनमनद्वयस्य । हेतुत्वस्य शाब्दत्वेऽलंकारत्वस्यानिष्टत्वात् । विशेषणत्वादिति । तत्रेति षष्ठ्यन्तार्थे विशेषणत्वादित्यर्थः ।

**एषु अपराधद्वये पूर्वापरजन्मनोरनमनम्, भुजपाते शस्त्रोपक्षेपः, महामोहे सुखालोकोच्छेदित्वं च यथाक्रममुक्तरूपो हेतुः।**

In these instances, (1) in the matter of the two lapses, the failure to salute in the former and later births, (2) in the matter of the alighting of the arm, the hurling of the weapon, and (3) in the matter of the great delusion, the characteristic of putting an end to the light of pleasure, are respectively the reason of the nature specified (in the definition)

---

**प्रदीपः**—तदर्थस्यापि हेतुत्वे न वाक्यार्थस्य हेतुत्वमिति। एकपदार्थता यथा—**भस्मेति**। अत्र महामोहत्वे सुखालोकोच्छेदिता हेतु। तच्च समासादेकपदार्थं एव। अर्थान्तरन्यासे तटस्थतयोपनिबद्धस्य हेतुत्वे पर्यवसानम्, इह तु साक्षादेव हेतुविभक्त्यादिना हेतुतयोपनिबद्ध

---

**उ०**:—**भस्मेति**। शिवप्रसादेन जाततत्त्वज्ञानस्येयमुक्ति। हा सोपानपरंपराम्। तस्याः शोच्यतेत्यर्थ। तत्संस्कारकर्त्रभावात्। (गिरिसुताकान्तस्य शिवस्य आलयः प्रासाद तस्य अलङ्कृतिम् अलङ्कारभूताम्। युष्माकं भस्मोद्धूलनादीना या सपर्या पूजा तत्सुखस्य आलोक प्रकाश तदुच्छेदके तन्नाशके मोक्षसञ्ज्ञके महामोहे निधीयामहे। 'वयम्' इति शेष। शार्दूलविक्रीडित छन्द।) **तटस्थतयेति**। परस्परमनन्वितत्वेनेत्यर्थ। **पर्यवसानमिति**। सामान्याद्यर्थस्योक्तस्य प्रामाण्यग्रहहेतुत्वमित्यर्थ। **इह तु साक्षादेवेति**। तत्तत्पदार्थनिरूपितहेतुतयोपनिबद्ध इत्यर्थ। हेतुविभक्त्यादिनेति क्वचित्कोऽपपाठ। गम्यमानहेतुत्वकस्यैव हेतो सुन्दरत्वेन प्राचीनै काव्यलिंगाभ्युपगमात्। अत एव वपु प्रादुर्भावादनुमितमित्यंशो नायमलङ्कार इत्याहु। सामान्यविशेषभानमवधानालिंगितत्वेन ततो भेद इत्यन्ये। केचित्तु निर्हेतुरूप-

---

**प्रभा**:—**अर्थान्तरन्यास इति**। अत्रेद विचार्यम्—काव्यलिङ्गेऽपि सुखालोकोच्छेदितेत्युक्तोदाहरणेऽन्यत्र च बहुशो हेतुविभक्तितच्छब्दादिहेतुवाचकपदाभावात्कथं काव्यलिङ्गता। अर्थान्तरन्यासे निजदोषावृतमनसामित्यादावतिसुन्दरस्य विपरीतत्वेन भाने तादृशजनवृत्तित्वेन साक्षात्पित्तोपहतत्व हेतुर्नोच्यते किंतु शङ्खपीततादर्शजनगतत्वेनेति ताटस्थ्यम्। काव्यलिङ्गे [illegible] मोक्षरूपे पक्षे साक्षादेव सुखालोकोच्छेदित्वमुच्यते इति भेद इत्युच्यते। तथापि हेतुविभक्त्यादिनेत्यसंगतमेव। उक्तोदाहरणे तदभावात्। प्रत्युत पञ्चम्या हेत्वभिधाने 'आत्मनिचपलत्वात्' 'प्रजाना विनयाधानात्' इत्यादौ काव्य-

## ( ५१ ) पर्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः ।

वाच्यवाचकभावव्यतिरिक्तेनावगमनव्यापारेण यत् प्रतिपादनम्, तत् ( पर्यायेण भङ्ग्यन्तरेण कथनात् ) पर्यायोक्तम् । उदाहरणम्—

य प्रेक्ष्य चिररूढाऽपि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे मानेन हृदये हरेः ॥ ११३ ॥ ( हयग्रीववध ? )

### 32 PARYĀYOKTA

'Paryāyokta' is that statement which is without the Expressed-Expresser relation

*Gloss* —The statement by the process of suggestion which is distinct from the Expressed-Expresser relation is called 'Paryāyokta' since it is based on a statement by Paryaya, i e a different mode

To illustrate —

At whose sight, was given up by Ichor and Pride their fancy to abide (respectively) in the face of Airavana and the mind of Hari (i e Indra) (113)

---

**प्रदीपः**—इति ततो भेद । **पर्यायोक्तमिति** । वाच्यवाचकभावभिन्नेनावगमनव्यापारेणार्थाद्वाच्यस्यैव यदभिधान तत्पर्यायोक्तम् । पर्यायेण भङ्ग्यन्तरेणाभिधानात् । ध्वनेस्तु न वाच्य एवार्थो विषय इति ततो भेदः । उदाहरणम्—**यमिति** । अत्रैक एवार्थ ऐरावतशक्रौ मदमानविमुक्तौ जाताविति व्यञ्जनया मदमानाभ्या तयोरधिकरणयोर्निवासप्रीतिरुज्झितेत्यभिधया च प्रतिपाद्यते । तेन च यदेवोच्यते तदेव व्यङ्ग्यम् । न चैव प्रतिपन्नस्यैव प्रति

---

**उ०**:—दोषाभाव काव्यलिंगम् । हेतुहेतुमद्भावस्य वस्तुसिद्धत्वेन कविप्रतिभानिर्वर्त्यत्वाभावात् । तत्प्रयुक्तचमत्काराभावेनालंकारताया दुरुपपादत्वाच्च । श्लेषादिसमिश्रणेऽपि तत्कृत एव चमत्कारो नैतत्कृत इत्याहु । इति काव्यलिंगम् । **पर्यायोक्तमिति** । **वचः** । प्रतिपादनम् । अवगमनव्यापारो व्यजना । अन्यतर प्रकारभेद । तेन न पौनरुक्त्यम् । **ध्वनेस्त्विति** । व्यग्यस्यागूढ-

---

**प्रभा**:—लिङ्गस्यानिश्चितत्वात् । तस्मात्साक्षात्परम्परया वा यत्र कारकहेतुरर्थोऽवगम्यते तत्काव्यलिङ्गम् । उक्तार्थदृढप्रत्ययाय यत्रार्थान्तरन्यसन तत्रार्थान्तरन्यास । किंचिदर्थज्ञापकतया हेतुकथनमनुमानमित्येव व्यवस्था युक्ता । तथा हि काव्यलिङ्गोदाहरणे ध्वनमनस्यापराधे कारकहेतुत्वमेव । तथा भुजपाते शस्त्रोपक्षेपस्य, मुखेर्मोदरूपत्वे आलोकोच्छेदस्यापि कारणत्व योगक्षेमसाधारण विवक्षितम् । एवं निजदोपेत्यादै

अत्र ऐरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्यमपि शब्देनोच्यते, तेन यदेवोच्यते तदेव व्यङ्ग्यम्, यथा तु व्यङ्ग्यं न तथोच्यते, यथा गवि शुक्ले चलति दृष्टे, 'गौ' शुक्लश्चलति'—इति विकल्पः, यदेव दृष्टं तदेव

Here, the idea that ऐरावण and शक्र (i e इन्द्र) got purged of ichor and pride, though suggested, is yet expressed by words Consequently, whatever is expressed, is itself suggested but it is not expressed in the way in which it is suggested To illustrate On the sight of a bull white

**प्रदीपः**—परिस्फलेति किं व्यापारद्वयेनेति वाच्यम्। यतो यथा व्यङ्ग्यं तथा नोच्यते। प्रकारयोर्भेदात्। एकरूप एव वस्तुनि प्रकारभेद एव कथं स्यादिति चेत्, यथा शुक्ले गवि चलति

**उ०**:—त्वादिति भाव। (**यमिति**) यं रावणम्। हरे इन्द्रस्य। **एक एवार्थ इति**। विमोचननिवासप्रीतित्यागयोरेकत्र पर्यवसानादिति भाव। **तेन चेति**। तथा च लक्षणसगति। पौनरुक्त्य शक्ते। **न चेति**। **यथेति**। येन प्रकारेण व्यग्य तेन रूपेण शब्देन नोच्यत इत्यर्थ। एकस्यैव प्रकारभेदेन वाच्यत्वव्यग्यत्वयोरविरोध। यथा यावककुसुमजपाकुसुमादिरूपाणा रक्तत्वादिना वाच्यत्वेऽपि तत्तद्वैजात्यरूपेण प्रत्यक्षत्वमेव न वाच्यत्व तथेहापीति भाव। **न पुनर्यथेति**। निर्विकल्पके शुक्लतदाश्रयगोत्वतदाश्रयचलनतदाश्रया विशकलिता भासंते, सविकल्पके तु ससृष्टतयेत्यर्थ। निर्विकल्पकस्य विशिष्टधीहेतुत्वादिति भाव। **भिन्नत्वेति**। भेदोऽतद्व्यावृत्तिस्तच्छून्यत्वेन ससर्गराहित्येन च निर्विकल्पकविषयता। भेदोऽतद्व्यावृत्ति परनये। तस्या सविकल्पके विशेषणत्व बाह्या मन्यते। अन्यमते **संसृष्टत्वेति**। प्रकारशब्दो विषयमात्रपर। एव च यथा निर्विकल्पकस्य विशिष्टविज्ञानहेतुत्वात्ततो वैलक्षण्यं तथा निवासप्रीतित्यागरूपवाच्यज्ञानस्य मदमुक्तत्वरूपव्यग्यज्ञानहेतुत्वाद्वैलक्षण्यमिति भाव। यद्वा निर्विकल्पके विचित्त्वेन वस्तु भासते, सविकल्पके तु तत्त

**प्रभा**:—दोपस्य भ्रम प्रति कारकहेतुत्वोक्ते पूर्वार्धे काव्यलिङ्गम्। तस्य तु दृढप्रत्ययार्थमुत्तरार्धे विशेषसहचारोपन्यास। न तु विशेषरूपोऽर्थ। सामान्यार्थे कारकहेतुरिति न काव्यलिङ्गतेति। अनुमाने तु ज्ञापकहेतूपन्यास। अस्मादिदं गम्यत इति। तेन यत्र ज्ञापकहेतुनानुमिति कवितात्पर्यविषया तत्रानुमानालंकार इति दिक्। इति काव्यलिङ्गम् ॥ ३० ॥ अर्थादिति। पर्यायोक्तपदसामर्थ्यादित्यर्थ। यथा निर्विक

**विकल्पयति, न तु यथा दृष्टं तथा। यतोऽभिन्नाऽसंसृष्टत्वेन दृष्टम्, भेदसंसर्गाभ्यां विकल्पयति।**

and moving we get the determinate idea, "There moves the white bull, there one cognises determinately the same object as was sighted, but not in the way in which it was sighted Since, one cognises determinately by way of exclusion or association what was seen as non-excluded or non-associated.

---

**प्रदीपः**—निर्विकल्पकसविकल्पकयो एक एव ह्यर्थस्ताभ्यां विषयीक्रियते। न पुनर्यथा निर्विकल्पकविषयस्तथैव सविकल्पकेनाऽपि विषयीक्रियते। भिन्नत्वसंसृष्टत्वाविषयक निर्वि-

---

**उ०ः**—नामरूपजात्यादिप्रकारेणेति 'न पुनर्यथा' इत्यादेरर्थ। इदमेव भिन्नत्वाविषयकत्वादीति बोध्यम्। अत्र व्यङ्ग्यमगूढ वाच्याद्चारु चेति न ध्वनित्वम्। 'नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ' इत्यत्रापि भगवान् वासुदेवो राहुशिरश्छेदकारित्वरूपेण स्वासाधारणधर्मेण व्यङ्ग्यस्ततोऽपि चारुतरेण राहुवधूकुचवैयर्थ्यकारित्वेन रूपान्तरेणाभिहित। केनचिद्रूपेण व्यञ्जनया लभ्यस्यार्थस्य ततोऽपि चारुतरेण रूपेण यत्र 'वाच्यतेति लक्षणतात्पर्यात्। यद्यपि भगवत पूर्वप्रक्रान्तत्वावच्छेदेनाभिधानाच्च न व्यङ्ग्यत्वम्, तथापि व्यङ्ग्यतावच्छेदकरूपेण वाच्यत्वाभावाद्व्यङ्ग्यत्वमेव। एव च प्रकारभेदाद्व्यङ्ग्यस्यैवाभिधानविषयत्व युक्तम्। न च प्राप्ताप्राप्तविवेकन्यायेन धर्मांशे एव व्यङ्ग्यत्व न धर्म्यंशे इति वाच्यम्। धर्मिण स्वरूपतोऽवाच्यत्वात्। यदि धर्मी स्वरूपत कस्यचिद्वाच्य स्यात्स्यादपि तथा। औपाधिकभेदेन घटाकाशादिषु भेदप्रतीतिवत् तत्तद्धर्मरूपोपाधिभेदेन धर्मिणोऽपि भेदेन धर्मिणोऽपि व्यङ्ग्यत्वाच्च। एतेन 'व्यङ्ग्यस्य प्रकारान्तरेणाभिधानासंभवात् कार्यमुखेन कारणाभिधान पर्यायोक्तम्। उदाहरणे राहुवधूकुचनैष्फल्यरूपेण कार्येण राहुशिरश्छेद कारणरूपो गम्यते' इत्यलङ्कारसर्वस्वोक्तमपास्तम्। प्रकाशोदाहरणविरोधाच्च। यत्तु 'पर्यायोक्त तदप्याहुर्यद्व्याजेनेष्टसाधनम्। शुक मो-

---

**प्रभाः**—रूपकविषय इति। निर्विकल्पकविषयो यथा केवलस्तथा सविकल्पकेन न विषयीक्रियत इत्यर्थ। तथा चैकप्रकारत्वाभावेऽयं दृष्टान्त इति ज्ञेयम्। भिन्नप्रकारत्वे तु निर्विकल्पके प्रकाराभावादसंगति स्यादिति। अत एव निर्विकल्पकसविकल्पक

## (५२) उदात्तं वस्तुनः संपत्

संपत् समृद्धियोगः । यथा—

> मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
> प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
> दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
> यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥ ११४ ॥ (—)

### 33 A UDĀTTA

'Udātta' consists in the abundance of a thing

*Gloss*—*Sampat* means 'possession of superabundance'.

To illustrate—

It is the play of the generosity of King Bhoja that, in the mansions of the learned, the parrots meant for amusement pick up the pearls, from a distance, suspecting in their minds that they are pomegranate seeds pearls that had slipped down the necklaces, the threads of which had given way in the course of dalliance (केलि), and which (pearls) on being swept off by brooms got tinged red in the morning with the lac-dye on the feet of the maidens as they trudged along the border of the front court-yard' (114)

प्रदीपः—पत्यक, मिलत्वसमुत्थत्वप्रकारं तु सविरल्पकमिति । उदात्तमिति । संपत्स-मृद्धियोग । न तु तत्संपातिशय । उदाहरणम्—मुक्ता इति । अत्र विद्वद्भवनस्य

उ०ः—जयितु यामि युगाभ्यामास्यतामिह ॥ अत्र नायिकां नायकेन सगमय्य शुकभोजनव्याजेन निर्गच्छन्त्या सख्या तत्राप्युन्मपरोक्षसाधनं पर्यायोक्तम्' इति । तत्तु ध्वनिमर्यादां नातिक्रोते इति दिक् । एव च 'अनायि देश. कतमस्त्वयाऽद्य यस-न्तमुक्तस्य दशां वनस्य' (नैषधेऽष्टमसर्गे २५ पद्यम्) इत्यत्रापि अपमेर । 'अय देशोऽलंकर्तव्य' इत्यादौ चेयम्न् । इति पर्यायोक्तम् । उदात्तमिति । महतां चोपलक्षणमिति वक्ष्यमाणतया नपुंसकनपुंसकयोरेकशेष । वस्तुनः । धनशौर्यौ-दार्यादि । एतेन 'शौर्यादिस्तद्युतो अयुक्तिनामा पृथगलंकार.' इत्यपास्तम् । अ-प्रार्नोऽपि संपदासिद्धेतिरनुमाणिका । मुक्ता इति । (केली क्रीडार्था विसूत्र

प्रभा :—प्रारम्भप्रभेदार—मिश्रयेति । मिश्रय विद्वद्भ्या श्लयतामि । पृनी पर्भिमायेरसंमभ्यारम्भे बोध्य । केलिषु निर्विस्मतेऽपि यस्थिविदमिति [illegible]

(५३) **महतां चोपलक्षणम् ॥ २९ ॥**

उपलक्षणमङ्गभावः, अर्थादुपलक्षणीयेऽर्थे । उदाहरणम्—

तदिदमरण्यं यस्मिन्दशरथवचनाऽनुपालनव्यसनी ।
निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः ॥ ११५ ॥ (—)

न चात्र वीरो रसः । तस्येहाङ्गत्वात् ।

## 33 B UDĀTTA

And it consists in the subservience of the great

*Gloss* —उपलक्ष ॥ Subservience, of course to the thing which is to be described To illustrate —

This is the same forest dwelling in which Rama who courted distress for upholding the word of Dasaratha exterminated the demons, with the arm for his helper (115)

It should not be urged that here the Heroic Sentiment (is prominent), since it is, in this case, subservient

**प्रदीपः**—मुक्तादिधनसमृद्धियोग । **महतामिति ।** महता यदुपलक्षणमङ्गभाव अर्थाद्वर्णनीये, तदप्युदात्तमित्यर्थं । उदाहरणम्—**तदिदमिति ।** अनेतादृशो महान्रामो दण्डकाया वर्णनीयाया अङ्गम् । नन्वत्र रामगत उत्साहातिशय एव चमत्कारनिदानं, तस्य प्रधानत्वाद्विच्छित्यन्तराभावाच्च किंविषयोऽयमलङ्कारव्यपदेश इति

**उ०ः**—छिन्नसूत्रा ये हारा तेभ्य गलिता ।) बाला पोडशवर्षा । (त्यागलीला दानलीला सैव आचरितमित्यर्थ । शार्दूलविक्रीडित छन्द ।) **समृद्धियोग इति ।** तेन वर्णनीयनृपते समृद्ध्यतिशय । 'सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम्' इत्यादौ पौरसमृद्धिर्व्यंग्येति व्यंग्योऽयम् । **वर्णनीये इति ।** अङ्गिनीत्यर्थ । **तदिदमिति ।** पुष्पकविमानस्थस्य लक्ष्मणस्याग्रे प्रतीयमुक्ति । (आर्या छन्द ।) महत्त्व च रामस्य दशरथाज्ञानशासाम्राज्यत्यागपूर्वकवनवासात् बाहुमात्रसाहाय्येन समस्तरक्षःक्षयकरणाच्च । अत्र दण्डकारण्यस्याऽङ्गित्वम्, रामस्याङ्गत्वम् । ईदृशो रामो यत्र स्थित इत्यरण्यस्यातिशयम् । **उत्साहातिशय एवेति ।** वीरप्रधानस्य रामस्य बाहुसहायत्वेन तदतिशयप्रतीते रक्षःक्षयस्यानु

प्रभाः—रत्नेन वस्तु भासत इति यथाश्रुतोपपत्तिमाह । इति पर्यायोक्तप्रकरणम् ॥ २० ॥ न **तु** तस्यैवेति । बदरामलकाम्रदाडिमानामित्यादौ पर्यायालङ्कारभेदेऽतिप्रसङ्गादिति भाव । उपलक्षणमिति भावप्रधानमित्याशयेनाह—**अङ्गभाव इति ।** वर्णनीयाया

## (५४) तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करं भवेत् ।
## समुच्चयोऽसौ

तस्य (प्रस्तुतस्य कार्यस्य) एकस्मिन् साधके स्थिते साधकान्तराणि यत्र संभवन्ति, स समुच्चयः । उदाहरणम्—

दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।

### 34 A. SAMUCCAYA.

That is 'Samuccaya' where one cause capable of achieving that (thing) being present, another achieving the same, presents itself.

*Gloss* —Where one circumstance, capable of bringing about that i. e. the effect under consideration, being present, other circumstances capable of achieving it present themselves, the figure is 'Samuccaya.' To illustrate:—

Irresistible are Cupid's arrows; the beloved is away, the mind most uneasy; the passion vehement, the age in its prime, the life very tenacious, the family untainted, the feminine nature opposed to

**प्रदीपः**—वाच्यम् । नत्वत्र वीरो रसः प्रधानम् । तस्येहाङ्गत्वात् । **तत्सिद्धीति** । तत्सिद्धिहेतौ तस्य प्रस्तुतस्य कार्यस्य साधके । समाधावतुल्यकक्षयोः कारणयोरुपादानमत्र तु तुल्यकक्षयोरिति विशेषः । उदाहरणम्—**दुर्वारा इति** । अत्र स्मरमार्गणा एव

**उ० :**—भावस्य प्रतीतेश्च ध्वनित्वं स्यादिति भावः । **अंगत्वादिति** । अंगोत्कर्षकत्वादित्यर्थः । अंगांगस्य चाप्राधान्यान्न ध्वनित्वमिति भावः । रामविषयकरतिभावस्याप्यपरिपुष्टत्वान्न भावध्वनित्वम् । **इत्युदात्तम्** । **इति विशेष इति** । समाधौ हि एकेन कार्ये निष्पाद्यमानेऽन्येनाकस्मादापतता सौकर्यादिरूपातिशयमपादनम् । (अत्र तु) एककार्यसंपत्तौ सर्वेषां खलेकपोतन्यायेन पातः, कार्यस्य च न कोऽप्यतिशय इति भावः । काव्यलिंगे हेतुत्वमात्रं विवक्षितं न तु हेतूना गुणप्रधानभावस्यैकत्वानेकत्वस्य वा चिन्ता । अत्र तु एकस्यैव तत्कार्यकारित्वेऽन्येषां साहाय्यमात्रमिति ततो विशेषः । **दुर्वारा इति** (मयूरसूनोः शम्भुवर्मस्य पद्यमिति शार्ङ्गधरपद्धतौ स्पष्टम् ।) स्वं प्रति विरहिणी प्रति वा काचिद्वदति । (स्मरस्य मदनस्य मार्गणाः बाणाः ।) दूरे प्रवासात् । गाढं अतिशयितम् ।

**प्रभाः**—इति तस्याः प्राधान्यसूचनायोक्तम् । इत्युदात्तप्रकरणम् ॥ ३१ ॥ समाधावितिं । 'समाधिः सुकरं कार्यं कारणान्तरयोगतः' इति लक्षणात्समुपीयमानमपि कारणा-

स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमो
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं शठः ॥ ११६ ॥
(मयूरसूनोः शंकुकर्णस्य ?)

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति, तदुपरि प्रियतमदूरस्थित्यादि उपात्तम् । एष एव समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्यवस्यतीति न पृथक् लक्ष्यते । तथाहि—

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम्
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥ ११७ ॥ (—)

equanimity; the season friendly to love, Death relentless; the friends not at all tactful. How indeed could such roguish separation be borne! (116).

Here, the arrows of Cupid by themselves render the separation intolerable. Over and above that are stated (as being present) the stay of the beloved in the distance etc. This very Samuccaya may take place with the combination of circumstances that are (1) good, or (2) bad, or (3) good and bad, hence it has not been defined separately (*for the different combinations*) To illustrate —

A spotless family, a winning figure, an intellect equipped with learning, enough strength of the arm, vast wealth, unimpaired sovereignty these things are naturally enviable, on the score of these, man here gets a good deal affected by conceit. But they themselves are as goads to you, O king! (117).

**प्रदीपः**–विरहासहत्वं कुर्वन्ति ततोऽधिकं प्रियतमदूरस्थित्याद्युपात्तम् । एष एवोक्तलक्षणः समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्यवस्यतीति यत्वेनन्विते पृथग्लक्षितास्तद्युक्तम् । तथाहि—कुलमिति । अत्र कुलादीनां समीचीनानामेव

**उ०**:–कुलनैर्मल्यात्स्वाच्छंद्याभाव । न चैवं धैर्यमेव कार्यमत आह–स्त्रीत्वमिति । मन्मथसुहृत् । विरहिणीपीडकत्वात् । कालः वसंतः । अक्षम. मारणे । झटिति नाशाकर्तृत्वात् । अचतुरा नायकादिघटनाऽसमर्थाः । शठः पीडादायीति विरहविशेषणम् । शठेति विधिसंबोधनं वा । (शार्दूलविक्रीडित छन्दः ।) **पृथगिति** । सद्योगसमुच्चयत्वादिनेत्यर्थः । **कुलमिति** । निर्मलं कुलम् । सुंदरता । वेदादि-

**प्रभा**:–न्तरं सौकुमार्यमात्रोपयोगि न स्वितरकारणतुल्यकक्षमित्यर्थः । चिन्त्यत्वे

अत्र सतां योगः । उक्तोदाहरणे त्वसतां योगः ।

> शशी दिवसधूसरो गलितयौवना कामिनी
> सरो विगतवारिज मुखमनक्षरं स्वाकृतेः ।
> प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
> नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ११८ ॥

( भर्तृहरि, नीतिशतक ५६. )

अत्र शशिनि धूसरे शल्ये शल्यांतराणीति शोभनाऽशोभनयोग ।

Herein there is the combination of good things, in the instance already cited, however, there is the combination of bad ones

The moon that becomes obscure by day, the passionate woman whose youth is lost, the lake destitute of lotuses, the mouth, void of syllables, of one of graceful form, the master given to (amassing) wealth, the virtuous person ever in distress, (and) the villain in the royal courtyard–these are the seven thorns (rankling) in my mind! (118)

Here, when the thorn of the moon getting obscure is there, other thorns present themselves, thereby giving rise to a combination of the good and bad

प्रदीपः–योग । दुर्वारा इत्याद्युक्तोदाहरणे स्मरमार्गणादीनामसमीचीनानाम् । शशीति । अत्र सदसतोर्योग । दुर्जनस्यासत्त्वात् शश्यादीनां सत्त्वात् । एतस्मिन्पद्ये पूर्वं दूरस्थित्यादिविशेषणेन, धूसरत्वादिनाऽप्यसम्यक्त्वमिति । समुच्चयान्तरमाह—स

उ०ः–ज्ञानम् । अतिशयित बलम् । लक्ष्मीवृद्धि । अतुल प्रभुत्वम् । ( प्रकृत्या सुभगा सुंदरा भाना पदार्था ।) दर्पोऽहङ्कारोऽपथप्रवर्तक । अनुशास्तृप्रतिबन्धक । ( हरिणी छन्द ।) कुलादीना प्रकृतिसुभगत्वेन समीचीनत्वम् । अत्र निरङ्कुशे दर्पतदभावहेतौ सत्येव भद्रमूर्त्यादिकमपि तत्त्वेनोपात्तम् । एव स्मरमार्गणादिना विरहिणीदु खदत्वादसमीचीनत्वम् । शशीति । ( भर्तृहरिकृते नीतिशतके पद्यम् । स्वाकृते शोभनाकृते । दुर्गत दरिद्र । शल्यानि बाणाग्राणि । पृथ्वी वृत्तम् ।) शशी स्वरूपेण सन्नपि दिनमधूसरत्वेनासन् । एवम

प्रभा.–हेतुमाह—पूर्वमिति । दुर्वारा इत्युदाहरण इत्यर्थ । विशेषणतागम्यस्य मित्यन्वय । तत्रापि हि प्रियतमस्य सत्त्वमेव दूरस्थितिविशेषणेन परमगत्त्वम् । इहापि स्वत सुन्दरस्य शशिनो दिवसधूसरत्वेनासद्योग इत्यर्थ । आदिपदेन गलितयौवनत्वादि परिग्रह । वस्तुतस्त्वत्र सदसद्योगपद न द्वन्द्व किं तु कर्मधारय । सैतावता शशी सदसनि-

## (५५) स त्वन्यो युगपद्या गुणक्रियाः ॥ ३० ॥

गुणौ च क्रिये च गुणक्रिये च गुणक्रियाः । क्रमेणोदाहरणम्—

विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च ।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥ ११९ ॥ ( — )

---

### 34 II SAMUCCAYA

While it is another (variety of it) where Attributes and Actions are (described as being) simultaneous.

*Gloss* —Attribute and Actions may be two attributes, two actions, or one attribute and one action Instances in order —

No sooner did this army of yours that had annihilated the entire host of the enemies become *bright* all at once than those faces of the miscreants turned *gloomy* ! (119)

---

**प्रदीपः**—त्वन्य इति । अत्र गुणा क्रियाश्चेति विग्रहे सङ्ख्याविशेषस्याविवक्षणात् विशेषविवक्षाविरहेण च सजातीयवद्विजातीयस्यापि यौगपद्यस्य लाभात् गुणौ च क्रिये च गुणक्रिये च युगपद्भवत, स निरुप समुच्चय । तत्र गुणयोर्यौगपद्य यथा—**विदलितेति ।**

---

**उ० :**—भेऽपि । एवमत्र सदसता शस्यादीना योग । **अत्र सदसतोर्योगः दुर्जनस्यासत्त्वात् शस्यादीनां सत्त्वादिति** । इद चिन्त्यम् । एवं हि सहचरभिन्नता स्यात् । सर्वत्र विशेष्यस्य शोभनत्व विशेषणस्याशोभनत्व च प्रक्रान्तमिति भग्नप्रक्रमता वा स्यात् । तस्मान्नृपाङ्गणमसद्युतमिति पाठो युक्त । सदसदिति च कर्मधारयो युक्त । अत्रैकैकमपि मानसशल्यभूतज्ञानजनने हेतुस्तत्रान्यदपि पट्कमुपात्तमिति लक्षणसमन्वय । **पूर्वमिति ।** प्रियतम शोभनोऽपि दूरस्थत्वदोषेणाशुभ इत्यर्थ । चिताबीज तु एकस्य तथात्वेऽपि मार्गणत्रयोपसतानां केवलानामपि विरहिणीदुःखदाना सत्त्वमिति असद्योगोदाहरणमेव तदिति । उक्तोदाहरणेषु सता योगस्यासता योगस्य सदसद्योगस्य वा युक्तत्व-

---

**प्रभाः**—(दि) ति । तादृशानामनेकेषामेकार्थजनने समुच्चय इत्यर्थ । एवमपि दुर्वारा शशीत्यनयो कथं भेद इति चेत्, इत्यम्—दुर्वारा इत्यत्र विरहासहिष्णुतया प्रियतमादीनां सतामप्यसत्त्वेन विवक्षा । इह तु शोभनस्य सतो धूसरत्वादिना अशोभनत्वमपीति विवक्षा । अत एव पूर्वं कथ (नु) सोढव्य इत्युपसहारो दुष्टत्वाभिप्रायेण । अत्र तु मनसि सप्त शल्यानीत्युपसहृत सुन्दरत्वेनान्तः प्रविष्टानामपि व्यथा-

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥ १२० ॥
(विक्रमोर्वशीय ४·३.)

कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥ १२१ ॥ (—)

'धुनोति चासिं तनुते च कीर्तिम्'—इत्यादेः, 'कृपाणपाणिश्च भवान् रणक्षितौ,ससाधुवादाश्च सुराः सुरालये'—इत्यादेश्च दर्शनात्, 'व्यधिकरणे'—इति 'एकस्मिन् देशे'—इति च न वाच्यम् ।

---

Here has befallen me all of a sudden this extremely intolerable separation from that beloved at a time when the days are to become pleasant on account of their being free from heat, thanks to the advent of fresh clouds! (120)

As soon as your eye whose grace is like that of a white lotus, fell on the enemy suddenly becoming grim, there also fell apparently on their person the oblique glances of Miseries, O pre-eminent king!

It should not be urged (that the figure takes place, only if the simultaneous attributes etc, abide) in the different abodes, or only if they abide in the same abode, as one comes across instances (to the contrary), like "He brandishes the sword and extends his fame," and "You are armed with the sword on the battlefield when the gods acclaim you in heaven."

---

प्रदीपः—अत्र विमलत्वमलिनत्वयो । क्रिययोर्यथा—अयमिति । अत्रोपगतो भवितव्य चेति क्रिययो । गुणक्रिययोर्यथा—कलुषमिति । अत्र कलुषत्वपतनयोर्गुणक्रिययो । अत्र कश्चिद्वैयधिकरण्य एव समुच्चय इत्याह । तन्न युक्तम् । 'धुनोति चासिं तनुते च

---

उ०:—स्यायुक्तत्वस्य वाऽप्रतीतेर्न समस्य विषमस्य वाऽलङ्कारस्यात्र प्रसंग इति दिक् । विशेषविवक्षाविरहेणेति । गुणत्वक्रियात्वरूपविशेषेणेत्यर्थः । केचित्तु गुणौ च क्रिये च गुणक्रिया:, गुणश्च क्रिया च गुणक्रिये, तयोरेकशेषेण वक्ष्यमाणार्थलाभ इत्याहु: । युगपदिति क्रमव्यावृत्त्यर्थम् । ( विदलितेति । विदलित नाशित समराङ्गना अरीणां कुलं येन तत् । बलम् सैन्यम् । प्रकृष्टाः खला:

---

प्रभाः—हेत्वादिन्यनवचम् । ननु गुणकिया इति बहुवचनाद्गुणा कियाश्चेति विग्रहे बहूना गुणाना यौगपद्यमेव लभ्यते । एव बहीनां क्रियाणामेव तल्लभ्यते । न तु द्वयोर्गुणयोर्द्वयोश्च क्रिययोस्तथा द्वयोर्गुणक्रिययोस्तल्लाभोऽयमाह—अत्रेति । सत्यम् ।

## ( ५६ ) एकं क्रमेणानेकस्मिन्पर्यायः

एक वस्तु क्रमेणानेकस्मिन् भवति क्रियते वा, स पर्यायः ।

क्रमेणोदाहरणम्—

नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।

---

## 35A PARYĀYA

When one happens to be in many, in turn, the figure is 'Paryāya.'

*Gloss*—When one object, in turn, abides or is made to abide in different places, the figure is 'Paryāya.'

Instances in order—

*O Virulent Poison, who indeed taught you this manner of staying in abodes, in which the successive positions are more and more exalted?*

---

**प्रदीपः**—कीर्तिम्' इत्यादौ सामानाधिकरण्येऽपि दर्शनात् । केचित्तु सामानाधिकरण्य एवायमित्याहुस्तदपि न सम्यक् । 'कृपाणपाणिश्च भवान्रणक्षितौ ससाधुवादाश्च सुराः सुरालये' इत्यादौ वैयधिकरण्येऽपि तद्दर्शनात् । **एकमिति** । एकत्वेन विवक्षितं वस्तु यत्र क्रमेणानेकस्मिन्भवति क्रियते वा स एकः पर्यायः । अत्र क्रमेणेति समुच्चयव्यावर्तनाय । प्रयोजकानिर्देशतन्निर्देशौ भवतिकरोत्यर्थौ । न तु स्वाभाविकत्वास्वाभाविकत्वे । वृषलक्ष्मणः कण्ठे कालकूटवासस्यास्वाभाविकत्वेन भवतीत्यनायुदाहरणत्वापत्तेः ।

---

**उ०**:—दुष्टा । आर्या छन्दः ।) **अत्रेति** । तयोराश्रयभेदेन चाम्या समुच्चय इत्यर्थः । (**अयमिति** । विक्रमोर्वशीये चतुर्थाङ्के पुरूरवस उक्तिः ।) एकपदे अकस्मात् । (प्रियया उर्वश्या । उपनतः प्राप्तः । निरातपत्वेन आतपराहित्येन रम्यैः । भवितव्यम् भूतम् । मालभारिणी छन्दः ।) **अत्रेति** । अत्राप्याश्रयभेदः । (**कलुषमिति** । स्वभावतः सितपङ्केरुहसोदरा श्वेतकमलतुल्या श्रीः यस्य तादृशं चक्षुः अहितेषु शत्रुषु विषये अकस्मात् कलुषं क्रोधात् रक्तं च । मालभारिणी छन्दः ।) **वैयधिकरण्ये एवेति** ।) आश्रयभेद एवेत्यर्थः । **इति समुच्चयः** । **समुच्चयेति** । वक्ष्यमाणविशेषालङ्कारद्वितीयभेदवारणाय चेत्यपि बोध्यम् । तत्र यौगपद्यसत्त्वादिति भावः । **नन्विति** । (भल्लटकविकृते भल्लटशतके पद्यम् ।) आश्रयस्थिति आश्रयणरीतिः । विशिष्टपदा विशिष्टाधिकरणा ।

प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥ १२२ ॥ (भल्लटशतक ४)

यथा वा—

बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत ।
अधुना हृदयेऽप्येष मृगशावाक्षि लक्ष्यते ॥ १२३ ॥

(नवसाहसाङ्कचरित ६ ६० )

---

First you dwelt in the heart of the Ocean then in the throat of the bull-signed Śiva and now you abide in the speech of the wicked! (122)

Or as in

O slim lady, formerly the Raga (red hue) was to be seen only in your Bimba like lips. Now it (Raga, i e passion) is noticed O fawn-eyed one, even in the heart! (123)

---

प्रदीपः—तनाद्यो यथा—तन्वियति । अत्र कालकूटस्य वस्तुत एकस्यानेकत्र वामे प्रयोजक किंचिदपि नोक्तम् । न केवलमय वास्तविक एकत्वे, किं त्वारोपितेऽपि । यथा— बिंबोष्ठ एवेति ।

---

उ० :—( वसन्ततिलका छन्द । ) अत्राधारभेदाद्भिन्न आधेय एकत्वेनाध्यवसित । *श्रोणीति । श्रोणीभागादीना प्राथमिकाधारत्वमार्थम् । सेवते इत्यनेन मध्ये पूर्वमतनुतासत्ता बोधिता । एवमग्रेऽपि । अत एव विनिमय सगच्छते । तनुता कार्श्यम् । तरलगतय चञ्चलगतय चञ्चलदर्शन च । कुचसचिवताम् सद्वितीयताम् । धत्ते इत्यनेन तस्मिन्प्रागद्वितीयता या स्थिता सा वक्त्रेण गृहीतेति बोधितम् । मुखेऽद्वितीयत्व निरपमत्वम्, वक्षसि द्वितीयराहित्यम्, तयोश्चाभेदाध्यवसाय । कुचसचिववक्षस्त्वेनैव मुखस्य निरपमत्वम् । अत्र तनुत्वत्यागादिना तत्तद्गुणवर्णो व्यजनया बोध्यते । बिंबोष्ठ एवेति । न चैकसनधनाशोत्तरमपरसनने सयेन लोके पर्यायप्रसिद्धे कथमिदमुदाहरणमिति वाच्यम् । एकस्मिन्ननेकस्मिन्क्रमेणेयेन लक्षणात् । शब्दसाम्यमात्रेण लौकिक-

---

*अयमपि श्लोक काव्यप्रकाशस्य इति क्वचित् पठ्यते—" श्रोणीभागस्त्यजति तनुतां सेवते मध्यभाग पद्भ्यां मुक्तास्तरलगतय संश्रिता लोचनाभ्याम् । धत्ते वक्षःकुचसचिवतामद्वितीयं च वक्त्रम् तद्गात्राणां गुणविनिमय कल्पितो यौवनेन ॥ "

**रागस्य वस्तुतो भेदेऽप्येकतयाऽध्यवसितत्वादेकत्वमविरुद्धम् ।**
**तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करस ।**
**बिम्बाहरे पिआणं णिवेसिअ कुसुमबाणेण ॥ १२४ ॥ (—)**
**( आनन्दवर्धनस्य विषमबाणलीला )**

Though, as a matter of fact, the Raga (abiding in the two things) is distinct, still, in so far as it is conceived to be identical its identity is not incongruous

That heart of theirs (i e demons), solely absorbed in Viṣṇu (lit whose ornament is the jewel कौस्तुभ that sprang from the same source as Lakṣmi) was riveted by the flower-arrowed Cupid, on the Bimba like lower lips of beloveds! (124)

**प्रदीपः**—अत्र प्रयोजकानिर्देश स्फुट एव । रागपदार्थस्य त्वोष्ठे लौहित्यात्मकतया हृदये तु स्नेहात्मकत्वेन भेदेऽप्येकत्वस्याध्यवसानेनैकत्वविवक्षाविरोध । द्वितीयो यथा—

**उ० :**—र्थाविवक्षणात् । एतेनात्र वर्धमानालङ्कार पृथगिति अपास्तम् । ( तं ताणेति । ) 'तत्तेषा श्रीसहोदररत्नाभरणे हृदयमेकरसम् । बिम्बाधरे प्रियाणा निवेशित कुसुमबाणेन ॥' श्रीसहोदर रत्न कौस्तुभस्तदाभरणे हरौ । एकरस तत्परम् । कामेन प्रियाबिम्बाधरचुम्बनाद्यासक्त कृतमित्यर्थ । केचित्तु यदसुराणा हृदय विजिगीषाज्वलनजाज्वल्यमानं श्रीसहोदररत्नानामासमतात् हरणे तत्परमासीत्, तत्सुकुमारतरोपकरणेनाऽपि कामेन प्रियाबिम्बाधरे निवेशित सरत्नरत्नसारतुल्यो बिंबाधर इति तेषामभिमानोत्पत्ते । एव च व्यङ्ग्योपमाऽत्रेत्याहु । तन्मतेऽपि हरणस्य वैषयिकाधारत्वात्पर्यायाक्षतिरेव । ( गाथा छन्द । ) अत्रोऽपि क्रमेणेति

**प्रभा :**—बहुत्वविवक्षायामुक्तदोष स्यात् । न चेह सख्याविशेषविवक्षा । एव सजातीययौगपद्यस्यापि । एव च गुणयो क्रिययोश्च यौगपद्यस्येव गुणक्रिययोर्यौगपद्यस्यापि लाभादुक्तार्थलाभो निरवद्य इत्यर्थ । अन्ये तु गुणाश्च क्रियाश्चेति द्वन्द्वे बहूनामेव समुच्चय स्यात्तो गुणौ च क्रिये चेति द्वन्द्वोत्तर गुणक्रियाश्च गुणक्रिये चेति गुण क्रिया इत्येकशेषद्वयोर्द्वयोरेव समुच्चय इति त्रिविध समुच्चयोऽयमित्याहु । एतन्मते द्विवचनान्तेनोत्सर्गत समासाभावात्तत्कल्पनक्लेश । द्वयोरेव समुच्चय इत्यप्ययुक्तम् । 'प्रादुर्भवति पयोदे कज्जलमलिनं बभूव नभ । रक्त च पथिकहृदय कपोलपाली मृगीदृश पाण्डु ॥' इत्यादौ बहूनामपि गुणानां समुच्चयस्येष्टत्वात् । तथा—'उदित मण्डलमिन्दो रुदित सद्यो वियोगिवर्गेण । मुदित च सकललललनाचूडामणिशासनेन

( ८७ ) अन्यस्ततोऽन्यथा ।

अनेकमेकस्मिन् क्रमेण भवति क्रियते वा, सोऽन्यः । क्रमेणोदाहरणम्—

मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति ।
अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥१२५॥ (—)

तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः ।

## 35 B PARYĀYA

The other ( variety of it ) is the reverse of it.

*Gloss*·—That is the other ( variety of पर्याय ) where things more than one abide or are made to abide, in turn, in one and the same place.

Instances in order —

Pleasing on account of ( their ) sweetness, Oh! the words of the wicked first hold out plenty of nectar! Later, they themselves intimate the virulent poison, that was as though hiding in them, a source of stupefaction! ( 125 )

Where there was that house with drooping walls, there this mansion ( now ) invades the region of the sky! Where there was that milch-

प्रदीपः—तं ताणेति । अत्र 'कुसुमबाणेन' इति प्रयोजकनिर्देश । अन्य इति । अनेकमेकस्मिन्क्रमेण यद्भवति क्रियते वा, सोऽन्य पर्याय इत्यर्थ । पूर्ववद्व्याख्येयम् । तत्र भवत्यर्थे यथा—मधुरिमेति । अत्रैकस्मिन्खलवचसि क्रमेणामृतव्यञ्जने विषव्यञ्जने च न प्रयोजकनिर्देश । करोत्यर्थे यथा—तद्गेहमिति ।

उ०ः—समुच्चयवारणाय । ( मधुरिमेति । ) मधुरिम्णा रुचिरम् । अथ ( विचारानंतरम् ) मोहहेतुं तदेवान्तर्गतं विषं कथयतीत्यन्वय । ( पुष्पिताग्रा छन्द । तद्गेहमिति । ) नतभित्ति नम्रम् । दिव स्वर्गाल्लब्धावकाशम् । मं-

प्रभाः—मदनेन ॥' इत्यादौ बह्वीनां क्रियाणां समुच्चयस्यार्थमहत्त्वप्रकाशनम् । अत न यथोक्त एव प्रकार समीचीन इति संक्षेप । इति समुच्चयप्रकरणम् ॥ ३२ ॥ मतान्तरनिरासायाह—प्रयोजकेति । तं इति । 'ततीया श्रीसहोदररत्नाभरणे हृदयनेत्रम् । बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥' इति संस्कृतम् । सेयानिति । दैत्यानामित्यर्थ । पूर्ववदिति । भवति क्रियते इत्येतदित्यर्थ । इति पर्यायप्रक-

स क्षुद्रो मुसलध्वनिः कलमिदं संगीतकं योषिताम्
आश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥ १२६ ॥
(Cited in ध्वन्यालोक. ३)

अत्र एकस्यैव हानोपादानयोरविवक्षितत्वात् न परिवृत्तिः ।

**(५८) अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः ॥ ३१ ॥**

पक्षधर्मान्वयव्यतिरेकित्वेन त्रिरूपो हेतुः साधनम्, धर्मिणि अयोगव्यवच्छेदो व्यापकस्य साध्यम् । यथा—

---

cow grown old, there roar these cloud-like rows of elephants! Where there was that low thud of pestles, there (is heard) this sweet music of damsels! O wonder! Thus Brahman has been lifted to such a position *by days!* (126)

*Here the figure is not Parivṛtti since it is not intended to convey* the giving and receiving by one and the same person

## 36 ANUMĀNA.

That is said to be 'Anumana' where we have the statement of the deduction and the means thereto

*Gloss* —The means to deduction is a reason that is threefold, in so far as it (1) must be the attribute of the particular case, (2) must be *present in a positive case*, (3) and must be absent from a negative case. The deduction consists in the denial of absence of the more extensive in the object qualified (*by the means to deduction*)

---

प्रदीपः—अत्रेश्वस्मिन्द्विजे तद्गृहतन्मन्दिरयोरनेकैः दिवसैरिति प्रयोजकनिर्देशः । न चेयं परिवृत्तिः हानोपादानयोरविवक्षितत्वात् । **अनुमानमिति** । पक्षे सत्त्वम्, सपक्षवृत्तित्वं, विपक्षावृत्तित्वं चेति रूपत्रयवान्हेतुः साधनम् । व्यापकत्वाभिमतस्य पक्षेऽयोगव्यवच्छेदो व्यापकसर्वधपर्यवसन्नः साध्यम् । तदुभयवचनमनुमानालंकारः । यथा—

---

उ० :—द्विर राजयोग्य गृहम् । (जरती जीर्णा । घनाभा । घनतुल्या । घटाश्रेणयः । कलम् मधुरस्वरम् ।) दिवसैर्न मासैर्वर्षैर्वा । (भूमिम् । अवस्थाम् । समारोपितः प्रापितः इत्याश्चर्यम् । शार्दूलविक्रीडितं छन्दः ।) **हानम्** । स्वीयवस्तुसमर्पणम् । **उपादानम्** । परकीयवस्तुग्रहणम् । **इति पर्यायः** । **साधनमिति** ।

---

प्रभा :—रणम् ॥ ३४ ॥ **पक्षे सत्त्वम् इति** । पक्षधर्मत्वेत्यर्थः । सपक्षवृत्तित्वेनान्वया

**यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं**
**यत्तत्रैव पतन्ति सततममी मर्मस्पृशो मार्गणाः ।**

Since these arrows piercing the vitals fall there only where these (women), whose eyes are extremely unsteady like waves, employ their eyebrow, therfore, Cupid, whose thrilling hand is set on the arrows that

**प्रदीप.**—**यत्रेति** । अत्र पूर्वार्धे साधनस्य उत्तरार्धे साध्यस्य वचनम् । प्रयोगश्चैवम्— एताश्चक्रीकृतचाप सदा पुरोधावदर्पितशरत्वादिविशिष्टमनोभवा सततनिपतन्मर्मभेदिबाणकलसद्भ्रूव्यापारस्थानत्वादिति । नन्वत्र पूर्वं साधनवत्साध्यस्यापि वचनं संभवति । यथा—

**उ०**:—एतद्रूपत्रयविशिष्टो हेतु साधनपदेनोच्यते इत्यर्थ । **व्यापकत्वाभिमतस्येति** । अस्य ‘ यस्य ’ इत्यादि । **साध्यमिति** । अस्य ‘ तत् ’ इत्यादि । व्यापकसंबंधः । व्यापकारितत्वम् । **तदुभयेति** । ‘ कविप्रतिभोल्लिखित ’ इत्यादि । ( **यत्रेति** । ) चलाचला अतिचचला । चलाचलेति पाठे चचलप्रातचक्षुप इत्यर्थ । व्यापारयन्ति वक्रीकुर्वन्ति । यत्र पुंसि । ( मर्मस्पृश मर्मभेदिन । चक्रीकृत कर्मणेन वर्तुलीकृत चापो यस्मिन्कर्मणि तथा । अर्पिते धनुषि योजिते शरे बाणे प्रेंखन् चलन् कर यस्य । शासन आज्ञा तस्य धर । ) अग्रत । पुर । ( शार्दूलविक्रीडित छन्द । ) अत्र पूर्वार्धे सततनिपतन्मर्मभेदिबाणकलसद्भ्रूव्यापारकस्थानत्व साधन पक्षवृत्तित्वेनोक्तम् । परार्धे साध्यम् । यत्तद्भ्यां व्याप्ति सूचिता । तत्र वस्तुतो व्याप्त्यसत्त्वेऽपि कविप्रौढोक्त्या तथाभिधानम् । अत्रानुमानमित्यत्र भावे ल्युट् । तेन जायमानाऽनुमितिरलंकार । सा च मन्ये शङ्केऽवैमि जाने इत्यादिवाचकोपादाने वाच्या । यत्र लिंगलिंगिनो सत्त्व तत्र तेषामनुमितिबोधकत्वात् । यत्र सादृश्यादिनिमित्तसद्भावस्तत्रोत्प्रेक्षाबोधकत्वम् । धत्ते कथयति इत्यादिलक्षणपदोपादाने लक्ष्या । उभयानुपादाने साध्यसाधनाभ्यां तदाक्षेपे प्रतीयमानेति बोध्यम् । न-

**प्रभा.**—व्याप्तिप्रदर्शनं विपक्षावृत्तित्वेन व्यभिचारविरहप्रदर्शनम् । अयोगव्यवच्छेदोऽवश्य संबन्ध । व्याप्यस्य व्यापकं विनानुपपत्ते । एतच्च हेतूत्प्रेक्षाव्यावृत्त्यर्थमुक्तम् । तत्र योगस्याप्युक्ततया भानादिति । एता इति स्त्रिय पक्षभूता निर्दिष्टा । चक्रीकृतचापं यथा स्यात्तथा सदा पुरो धावन्नर्पिते धनुषि योजिते शरे प्रेङ्खन् चपल करो यस्य स । क्रोधन क्रोधशील । शासनमाज्ञा तद्धारको मनोभवो यासां तथाभूता इति साध्यम् । सतत निपतन्तो मर्मभेदिनो बाणा यत्र तादृशो लसद्भ्रूव्यापारो

## (५९) विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ।

अर्थाद्विशेष्यस्य । उदाहरणम्—

महौजसो मानधना धनार्चिता
धनुर्भृतः संयति लब्धकीर्तयः ।
न संहतास्तस्य न भेदवृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥ १२८ ॥

(किरातार्जुनीय १ १९.)

---

### 37. PARIKARA.

That is 'Parikara' where we have a statement with attributes that are pregnant with significance

*Gloss* —(Statement), of course of the thing qualified by the attributes To illustrate –

They, of mighty spirit, who cherish their honour as treasure, honoured with wealth, archers, who have won fame in warfare, who do not enter into conspiracy (संहता) and are not inclined to discord, long to achieve things pleasing to him, with their lives! (128)

---

**प्रदीपः**—साभिप्रायैः । उक्तिः अर्थाद्विशेष्यस्य । उदाहरणम्—**महौजस इति।** अत्र महौजस्त्वादिविशेषणानि परानभिभवनीयत्वाद्यभिप्रायकाणि । न च वाच्यम्—अपुष्टार्थत्वस्य दोषत्वाभिधानादर्थसिद्धं पुष्टार्थत्वमिति दोषाभावत्वमात्रतया कुतोऽलंकारमध्ये पठितोऽयमिति । एकनिष्ठत्वेन बहूनां विशेषणानामुक्तोदाहरणवदुपादाने वैचित्र्यमपि त्वनुभवसिद्धं, न तु दोषाभावत्वमात्रमिति संप्रदायः । वयं त्वालोचयामः—साकूतवि

---

**उ०ः**—अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥' इत्यर्थापत्तिस्त्वनुमानमेवेति दिक् । **इत्यनुमानम् । उक्तिः** परिपुष्टिः । **अर्थाद्विशेष्यस्येति ।** विशेषणानां परस्परनिराकाङ्क्षत्वादिति भावः । साभिप्रायत्वं प्रकृतार्थोपपादकचमत्कारिव्यंग्यवत्त्वम् । **महौजस इति ।** (किरातार्जुनीये प्रथमसर्गे युधिष्ठिरं प्रति चारस्योक्तिः ।) तेजस्विनो मानिनः धनैः पूजिता रणे प्राप्तकीर्तयः न संहता न परैरुपजप्ताः परस्परमैकमत्यमाप्ता इत्यर्थः । तस्य प्रियाणि प्राणैरपि कर्तुं वाञ्छन्तीत्यन्वयः । (वंशस्थं वृत्तम् ।) **आदीति ।** मानभङ्गभीरुत्वोपस्कृ-

---

**प्रभाः**—प्रकरणम् ॥ ३५ ॥ संप्रदायपदसूचितमस्वरसं प्रकाशयन्स्वयं समाधत्ते—वयं

यद्यप्यपुष्टार्थस्य दोषताऽभिधानात्तन्निराकरणेन पुष्टार्थस्वीकारः कृतः, तथाऽप्येकनिष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलंकारमध्ये गणितः ।

---

Though by pronouncing an irrelevant thing to be a defect, a relevant one comes to be accepted (as a pre-requisite of Poetry), yet when *many* attributes are so stated as applying to one and the same thing, there arises a certain charm Hence has it been reckoned among Figures

---

प्रदीपः – शेषणोपन्यासेऽप्यलंकारत्वमुचितम् । अपुष्टार्थत्वविरहस्य निर्विशेषणतयाऽप्युपपत्तेरर्थसिद्धत्वाभावाद्वैचित्र्यस्य चानुभवसिद्धत्वात् । यथा—'शुद्धे सद्मनि पक्षविन्दुपवने'

---

उ० : – तत्पुद्धोत्सुकत्वकार्यकारणतदेकप्रयोजनापेक्षित्वान्यादिपदार्थाः । तेनाय दुर्जय इति व्यङ्ग्यम् । बहूनामिति । विशेषणैरिति बहुत्वं विवक्षितमित्यर्थः । तादृशेनेति । 'अयि लावण्यजलाशय तस्या हा हन्त मीननयनायाः । दूरस्थे त्वयि किं वा कथयामो विस्तरेणालम् ॥' इत्यादौ । अनुभवसिद्धत्वादिति । यथा नित्ये संध्यावन्दनादौ दोषाभावस्यांगवैगुण्येऽपि सिद्धौ सांगतयाचरणं फलातिशयायैव । तथा दोषाभावस्य विशेषणानुपादानेऽपि संभवेन स्वाभिप्रायेणविशेषणनिबंधनश्चमत्कारो दुरपह्नव इति भावः । किंच 'सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः' इत्यादौ यत्र सुधांशुकलितोत्तंस इति विशेषणाभावेऽपि तापहरणसामर्थ्यस्य सामर्थ्यातिशयेनाप्युपपत्तेस्तद्विशेषणानुपादानेऽपि न क्षतिस्तत्र तद्विशेषणोपादानमधिकचमत्कारायैवेति बोध्यम् । अत्र व्यङ्ग्यं च कचिद्वाच्यसिद्ध्यङ्गं कचिदपरांगमिति गुणीभूतव्यङ्ग्यमेव । अत्र विशेषणैरित्युपलक्षणं विशेष्यस्यापि । तेन साभिप्राये विशेष्येऽप्ययम् । यथा 'चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः' इत्यत्र । अत्र चतुर्भुज इति विशेष्यं पुरुषार्थचतुष्टयदानसामर्थ्याभिप्रायगर्भम् । बाहुल्यमल्पमपर्यस्तु [illegible] विशेषणशब्दयोरेकशेषो वा । उक्तिरित्यस्यार्थमाप-

---

प्रभा : – त्विति । अनुभवसिद्धत्वाभावादिति । पुष्टार्थत्वस्येति दोष । [illegible]—वैचित्र्यस्य चेति । 'शुद्धे सद्मनि पक्षविन्दुपवने वाप्यां नवाम्भोरुहे कौमुदी च सरोरुहे विमलितपीयूषैर्युता रसा ।' इत्यादावित्यर्थ । तथा च दोषाभावस्यापि पुष्टार्थत्वस्य [illegible] पत्तेरसंदिग्धमिति भावः । इति परिकरप्रकरणम् ॥ १६ ॥ साम्यसंभव

## ( ६० ) व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥ ३२ ॥

निगूढमपि वस्तुनो रूपं कथमपि प्रभिन्नं केनापि व्यपदेशेन यदपह्नूयते, सा व्याजोक्तिः । न चेषाऽपह्नुतिः, प्रकृताप्रकृतोभयनिष्ठस्य सा-

### 38 VYĀJOKTI

'Vyājoktı' consists ın the concealment, under a pretext, of [illegible] thing that has betrayed ıtself

*Gloss* —When the form of a thıng, whıch though secret ıs somehow betrayed, comes to be concealed under some pretevt, there results the figure 'Vyājoktı' Thıs ıs not Apahnutı, sınce here ıs no lıkelıhood of sımılarıty existıng ın the matter under consıderatıon and ın the matter

**प्रदीपः**—इत्यादौ। व्याजोक्तिरिति। उद्भिन्नत्वमस्फुटस्य प्रकाश । तथा चास्फुटमपि वस्तुस्वरूप कथञ्चिद्व्यक्तमथ केनापि यदपह्नूयते सा व्याजोक्ति । न चेयमपह्नुति । प्रकृताप्रकृतयो साम्ये तत्स्वीकारात्। अत्र तु तदभावात्। [illegible] च प्रथम गूढस्यानन्तरं प्रकाशस्यापह्नव इति सामग्रीभेदादेवापह्नुतिभेद इति वाच्यम्। एवंविधेऽपि विषये साम्यसमवेऽपह्नुतेरेवोपगमात्। ननु यत्रापह्नवार्थं सादृश्योपक्षेप सा व्याजोक्ति, सादृश्यार्थमेव तु यत्रापह्नवोपक्षेप साऽपह्नुतिरिति चेत्, न। तत्रोभयत्राऽप्यपह्नुतेरेवोपगमात्। यदाहु —

> साम्यायापह्नवो यत्र सा विज्ञेया त्वपह्नुति ।
> अपह्नवाय सादृश्य यस्मिन्नेषाऽप्यपह्नुति ॥ इति ॥

**उ०**:—नमित्येनार्थ । एतेन 'साभिप्राये विशेष्ये परिकराङ्कुरनामा भिन्नोऽलङ्कार' इत्यपास्तम्। इति **परिकरः**। **कथंचित्**। लिङ्गादिना। **केनापि**। कपटेन। **प्रकृताप्रकृतयोरिति**। इदमुपलक्षणम्। तत्रोपमेयनिषेधपूर्वकमुपमानव्यवस्थापनम् । अत्र तु किंचिदनिषिध्यैव निमित्तान्तरप्रयुक्तत्वज्ञापनमित्यपि

**प्रभाः**—इति। (कुवलयानन्दे पद्यमिदम्।) यथा 'सीत्कारं शिक्षयति' इत्यादौ गुप्तस्य नायकस्य सीत्कारेत्याद्युक्त्या व्यक्तस्य नहीत्यादिनापह्नवेऽप्यपह्नुतिरेवेत्यर्थ । **नन्विति** । उक्तोदाहरणे साम्यसत्त्वेऽपि तस्याङ्गत्वेनापह्नवप्राधान्याभावाद्व्याजोक्तिरेव अपह्नवप्राधान्ये त्वपह्नुतिरिति व्यवस्थेत्यर्थ । **यदाहुरिति** । उद्भटादिमतानुसारिण इत्यर्थ । **उभयत्रेति**। अपह्नवप्राधान्येऽङ्गत्वे च सति साम्य इत्यर्थ । तथा

अत्र पुलकवेपथू सात्विकरूपतया प्रसृतौ शैत्यकारणतया प्रकाशितत्वादपलपितस्वरूपौ व्याजोक्तिं प्रयोजयतः ।

## ( ६१ ) किंचित्पृष्टमपृष्टं वा कथितं यत्प्रकल्पते ।
## तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता ॥ ३३ ॥

प्रमाणान्तरावगतमपि वस्तु शब्देन प्रतिपादितं ( प्रयोजनान्तराभावात् ) सदृशवस्त्वन्तरव्यवच्छेदाय यत् पर्यवस्यति, सा भवेत्परिसंख्या ।

Here the horripilation and tremor, though developed as an outcome of inward feelings, were given out as having been occasioned by cold. Thus owing to their (real) nature being concealed they bring about a Vyājokti.

### 39. PARISAṄKHYĀ

That [illegible] stated to be 'Parisankhyā,' where something stated, whether in response to a query or not, tends to exclude others akin to it.

*Gloss* —That is 'Parisankhyā' where a thing tends to exclude similar others, as it, even though understood from other means of knowledge, happens to be stated explicitly, and as there is no other reason ( but that

प्रदीपः–किंचिदिति । तादृक् तुल्यम् । व्यपोहाय व्यवच्छेदाय । यत्किंचित्कथित सत्तत्तुल्यस्यान्यस्य व्यवच्छेदाय यत्कल्पते सा परिसंख्या मतेति लक्षणम् । अन्यस्य कथनमन्यव्यपोहाय कथ कल्पत इति चेत् । प्रमाणान्तरेणावगतस्यैव वस्तुन पुन शब्देन प्रतिपादनस्य

उ०ः–परक्षेत्रादायाति क्षेत्ररक्षक ॥' इति गूढोक्त्यलङ्कारः परास्तः । तस्य ध्वनित्याक्रान्तत्वात् । क्वचित् गुणीभूतव्यंग्यत्वात् । अलङ्कारत्वं तु नोचितम् । उपस्कारकत्वाभावात् । प्रकृते शिवविषयकभावोपस्कारकत्वं स्पष्टमेव । एतेन 'गच्छाम्यच्युत' इत्यादौ विवृतोक्तिर्गुप्ताविष्करणरूपेत्यपास्तम् । गुणीभूतव्यंग्यमात्रत्वात् । वाच्यरसाद्युपकर्षकत्वाभावाच्च । एतेन 'लोकप्रवादानुकृतिर्लोकोक्तिरिति गण्यते । सहस्व कतिचिन्मासान् मीलयित्वा विलोचने ॥' इत्यपास्तम् । उपस्कारकत्वाभावात् । नन्वत्र कोऽलंकार इति चेन्न कोऽपि । एतेन 'छेकोक्तिर्यत्र लोकोक्ते स्यादर्थान्तरगर्भता । भुजंग एव जानीते भुजग-

प्रभाः–कयो कम्परोमाञ्चयो शैत्यजन्यत्वप्रतिपादनेनापलपो व्याख्यात । तत्र कम्परोमाञ्चयो पूर्वगूढत्वाभावादुद्भिन्नेत्यस्यासंगते स्वयमुदाहरन् संगमयति—यथं त्विति । 'गूढा रति' इत्येव पाठ । 'भवगति' इति त्वपपाठ । एव [illegible] पूर्वं

अत्र च कथन प्रश्नपूर्वक तदन्यथा च परिदृष्टम्, तथा उभयत्र व्यपोह्यमानस्य प्रतीयमानता वाच्यत्व चेति चत्वारो भेदाः ।

क्रमेणोदाहरणम्—

किमासेव्यं पुंसां सविधमनवद्य द्युसरितः
किमेकान्ते ध्येय चरणयुगलं कौस्तुभभृतः ।
किमाराध्य पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति ॥ १३० ॥ (—)

of exclusion for its being so stated) Here the statement is found to be either in sequel to a query or otherwise Likewise, in both cases, the thing excluded may be suggested or expressed Thus *four* varieties in all

*Instances in order* —

What should men resort to ?–The irreproachable vicinity of the heavenly river (i e the Ganges) What should one think of, in solitude ? —The two feet of the wearer of the Kaustubha-jewel (i e. Viṣṇu), What should one strive for ?–Merit And what should one wish to have ?–Compassion by an attachment to which (all), the heart becomes able to win unbounded freedom ! (130)

प्रदीपः–प्रयोजनान्तराभावात् । पृष्टमपृष्ट चेति तु विभाग । कथन हि किंचित्प्रश्नपूर्वक किंचित्तदभावपूर्वकमिति द्वैविध्यमित्यर्थः । ते च द्वे अपि विधे व्यवच्छेद्यस्य प्रतीयमानत्ववाच्य

उ०ः–चरण सखे ॥' इति छेकोत्यलङ्कारोऽपि परास्त । उपस्कारकत्वाभावात् । क्वचिद्ध्वनित्व गुणीभूतव्यङ्ग्यत्व वा न निवारयाम । 'त्वामालिखती दृष्ट्वाऽन्य धनुः पौष्प करेऽलिखत्'—अत्रापि व्याजोक्तिरेव । उक्तिपदस्य व्यापारमात्रपरत्वात् । एतेन 'युक्ति परातिसन्धान क्रियया मर्मगुप्तये' इति युक्तिनामाऽलङ्कार इत्यपास्तम् । एवमुक्तपद्धिहेतौ तद्धेतुत्वकल्पनारूपा प्रौढोक्तिरसम्बन्धे सम्बन्धरूपाऽतिशयोक्त्या गतार्था । 'सभानन यदीय स्यादियुहोऽन्यस्य सिद्धये । यदि शेषो भवेद्वक्ता कथिता स्युर्गुणास्तव ॥' इति समाधानालङ्कारो यद्यर्थोक्तौ च कल्पनमित्यतिशयोक्त्या गतार्थ । 'किंचिन्मिथ्यात्वसिद्ध्यर्थं मिथ्याऽर्थान्तरकल्पनम् । मिथ्याध्यवसितिर्वेश्या वशयेत् खस्रजं वहन् ॥' इति मिथ्याध्यवसि-

प्रभाः–गूढस्यानुभावाभिव्यक्तस्य रतिभावस्यान्यप्रयुक्तत्वकथनेनापह्नुतिरिति लक्षणं गति । इति व्याजोक्तिप्रकरणम् ॥ ३७ ॥ परिसङ्ख्येति । परिशब्दो वर्जनार्थ । संख्या

किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्यमार्यचरितं सुकृतं न दोषः।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम् ॥ १३१ ॥ (—)
कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥ १३२ ॥ (—)

What is the greatly enduring ornament in this world?–Fame, not a jewel What is worth doing?–A pious deed, practised by the venerable ones, not a sin. Which is the unarrested sight?–Intellect not the eye. Who else but yourself knows the distinction between good and evil? (131)

Curliness (by Śleṣa crookedness) dwells in the tresses of your hair, the red hue (by Śleṣa, passion) in your sproutlike hands, feet, and lower lip, hardness (by Śleṣa harshness) in the pair of (your) breasts, tremulousness (by Śleṣa fickleness) in your eyes! (132)

प्रदीपः—त्वाभ्यां प्रत्येकं द्विविधे। तत्र प्रश्नपूर्वके कथने व्यवच्छेद्यस्य प्रतीयमानता यथा—किमिति। अत्रान्यनदीसविधादि व्यवच्छेद्यं प्रतीयमानम्। तत्रैव वाच्यं व्यवच्छेद्यं यथा—किं भूषणमिति। स्पष्टम्। अप्रश्नपूर्वके कथने व्यवच्छेद्यं प्रतीयमानं यथा—कौटिल्य-

उ०:—तिरस्कबधे सबधातिशयोक्त्या गतार्थेति दिक्। इति व्याजोक्तिः। प्रयोजनांतराभावादिति। अनुवादस्य प्रयोजनसाकाङ्क्षतयाऽन्यव्यावृत्तिरेव प्रयोजनमित्यर्थः। नियमोऽप्यत्र दर्शने उक्तलक्षणाक्रान्तत्वात्परिसंख्यैव। किमिति। अत्र किमासेव्यमिति प्रश्नः। अनिंद्यं गंगासमीपं नान्यनदीसविधं, नापि कान्तानितम्बादि। विष्णोः पादयुगं नान्यदेवस्य, नाप्यंगनादि। पुण्यं न पापं। दया न हिंसादि। (येषु गंगासमीपादिषु आसक्त्या। निरवधिर्या विमुक्तिः सायुज्यरूपा तदर्थं चेतः प्रभवति समर्थं भवति। शिखरिणी छन्दः।) किं भूषणमिति। आर्यचरितं शिष्टसेवितम्। (सुकृतं पुण्यकर्म। दोषो व्यभिचारादि। धिषणा बुद्धिः। अभिमतोत्तरदानादाह—जानातीति। सदसद्विवेकः उत्कृष्टानिकृष्टविभागः त्वदपरः त्वदन्यः कः जानाति न कोऽपीत्यर्थः। वसन्ततिलका छन्दः।) कौटिल्यमिति। (कौटिल्यं वक्रता कपटं च। कचनिचये केशसमूहे, न तु हृदये। रागः रक्तिमा प्रीतिश्च। करादिषु, न परपु-

प्रभा०—बुद्धिः। तेन वर्णेनबुद्धिरित्यन्वर्था संज्ञा। इति परिसंख्याप्रकरणम् ॥ ३८ ॥

भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥ १३३ ॥ (—)

## (६२) यथोत्तरं चेत्पूर्वस्य पूर्वस्याऽर्थस्य हेतुता ।
## तदा कारणमाला स्यात्

उत्तरमुत्तरं प्रति यथोत्तरम् । उदाहरणम्—

---

Devotion to Śiva-not to wealth; a *penchant* for scriptures, not for woman, the weapon of Love, (and) concern for fame-not for the body, are observed mostly in the case of the great! (133)

### 40 KĀRAṆAMĀLĀ.

If each preceding thing becomes the cause of each succeeding one, then there results the 'Kāraṇamālā.'

*Gloss* —यथोत्तर means 'to each succeeding one.' To illustrate:—

---

प्रदीपः—मिति । अप्रश्नपूर्वक एव कथने व्यवच्छेद्य वाच्य यथा—भक्तिरिति । श्लेषेणाप्येषा संभवति । यथा—'चित्रेषु वर्णसंकर,' 'खलसयोग शालिषु'इत्यादि । यथोत्तरमिति । यथोत्तरमिति वीप्सायां यथाशब्द । तेनोत्तरोत्तर प्रतीत्यर्थं । उदाहरणम्—

---

उ०:—दयादिषु । काठिन्य दार्ढ्य निर्दयत्वं च । कुचयुगुले, न तु हृदये । तरलत्वं चंचलता अविचार्यकारित्व च । नयनयो., न मनसि । आर्या छन्दः ।) अत्र कौटिल्यादेरितराधिकरणस्य व्यवच्छेद्य व्यंग्यम् । प्रश्नश्च नास्ति । भक्तिरिति । युवतिरूपे कामास्त्रे । (आर्या छन्दः ।) अत्र यत्र कवि-प्रतिभानिर्मिता इतरव्यावृत्तिस्तत्रालंकारता । यथा 'कौटिल्य कचनिचये' इत्यत्र कौटिल्यादिकं कविप्रतिभया एकीकृतमिति तद्द्वारा तत्प्रतियोगिकव्यावृत्तिस्तन्निर्मितेति बोध्यम् । इति परिसंख्या । यथोत्तरमिति । इदमुपलक्षणम् । यथापूर्वं परस्य परस्य कारणत्वे इत्यपि बोध्यम् । यथा 'भवति नरकः पापात्पाप दारिद्र्यसंभवम् । दारिद्र्यमप्रदानेन तस्माद्दानपरो भव ॥' इति । अत्र यथायिनपदत्वे न दोषः । प्रयुक्त पदांतरेण तस्यार्थस्योक्तौ तत्त्वप्रतिभानाभावा-द्विवक्षितार्थासिद्धेः । उपस्थितशब्दस्यापि विशेषणतया भानांगीकारात् ।

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः ॥१३४॥(—)

" हेतुमता सह हेतोरभिधानमभेदतो हेतुः "
( रुद्रट's काव्यालंकार. ७. ८२. )

इति हेत्वलंकारोऽत्र न लक्षितः । आयुर्घृतमित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति, वैचित्र्याभावात् ।

अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः ।
रम्योऽयमेति संप्रति लोकोत्कंठाकरः कालः ॥ १३५ ॥ (—)
( Cited in रुद्रट's काव्यालंकार. ७.८३. )

---

To be of subdued senses constitutes the cause of humility; from humility is derived the height of virtues, by the height of virtues do the subjects grow loyal, verily from loyalty of the people springs wealth. (134)

The figure Hetu, which (by others) is defined as:

" Hetu consists in the statement of the cause as identical with the effect,"

has not been defined (by us). For, it being of the form "Life is ghee" etc never deserves to be looked upon as an embellishment (of a poem), for want of strikingness.

Here arrives now the pleasant season, the bloom of the thickly grown lotuses, the intoxication of all the bees, the delight of the cuckoos, that gives rise to yearnings on the part of the people! (135)

---

प्रदीपः – जितेन्द्रियत्वमिति । नन्वत्र कार्यकारणभावालंकृतिप्रपञ्चनप्रसङ्गेन हेत्वलंकारोऽपि लक्षणार्हः । उक्तश्चाय भट्टोद्भटेन—' हेतुमता सह हेतोरभिधानमभेदतो हेतुः ' इति । तत्किं न लक्षित इति चेत्, आयुर्घृतमित्यादिरूपस्यास्य वैचित्र्याभावेनालंकारत्वस्यैवाभावात् । नन्वेवम्—' अविरल ' इत्यादौ प्राचां काव्यरूपताऽभिधाने विरुध्येत

---

उ॰ – जितेंद्रियत्वमिति । ( वंशस्थं वृत्तम् । ) अत्र पदे भग्नप्रक्रमत्वं दोषः । जितेंद्रियत्वं विनयस्य कारणमित्युक्ते तत्कस्य कारणमित्युदिताकांक्षा यद्यपि उत्तरवाक्येन निवर्त्यते, तथापि न साक्षात् । एवमग्रेऽपि । अस्याः किमुपस्कारकतयाऽलंकारत्वं कया रीत्या चोपस्कारकत्वमिति चिंत्यम् । उत्तरोत्तरोत्तमवस्तुकारणत्वात्सर्वे एते उपादेया इति ज्ञानं चमत्कारकारणमिति वदति । हेतुमतेति । कार्यकारणभावसंबंधनिबन्धनशुद्धसारोपासाध्यवसानामूलोऽयमिति बोध्यम् । वैचित्र्याभावेनेति । कार्यवाचकपदेन कारणाभिधाने वैचित्र्याभावे-

---

प्रभाः – हेतुमतेति । हेतुमता कार्येण सहाभेदहेतोरभिधानमित्यन्वयः । इति कारण-

इत्यत्र काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुर्न तु हेत्वलंकारकल्पनयेति पूर्वोक्तं काव्यलिङ्गमेव हेतुः ।

(६३) क्रियया तु परस्परम् ॥ ३४ ॥
वस्तुनोर्जननेऽन्योन्यम्

अर्थयोरेकक्रियामुखेन परस्परं कारणत्वे सति अन्योन्यं नामालंकारः । उदाहरणम्—

हंसाणं सरेहिँ सिरी सारिज्जइ अह सराण हंसेहिँ ।
अण्णोण्णं चिअ एए अप्पाणं णवर गरुअन्ति ॥ १३६ ॥

---

*Here they by tradition acknowledged it to be Poetry, only in virtue of its soft alliteration, and not due to any idea of the figure Hetu.* Thus Hetu is the same as the Kāvyalinga referred to above.

### 41. ANYONYA.

Where by an action two things 'produce' each other mutually, the figure is 'Anyonya'

*Gloss :*—Where two objects, through the same action, become mutually the cause, one of the other, the figure is 'Anyonya.' To illustrate,—

The beauty of the *swans* is *exalted* by the *lakes*, and that of the lakes by the swans. Thus they only make each other sublime. (*136*)

---

**प्रदीपः**—अलङ्काराभावादिति चेत्, न । कोमलानुप्रासेनैव तत्सम्भवात् । तर्कि हेत्वलङ्कारो नास्त्येव । क एवमाह । कीदृशस्तर्ह्यसाविति चेत्, पूर्वोक्त काव्यलिङ्गमेवेति । **क्रिययेति** । वस्तुनो परस्परं अन्यजनकभावोऽसम्भवी । तस्य त प्रन्येव पौर्वापर्ययोर्द्वयोरसम्भवादित्यत उक्त क्रिययेति । एकक्रियाजननद्वारेणेत्यर्थ । अविशिष्ट वस्तु तावदजातकल्पम् । तेन वैशिष्ट्यप्रयोजकक्रियाजनके जनकत्वोपचार. । तथा च मिथस्तादृशैकक्रियाजनकत्वमन्योन्यालङ्कार इति सारम् । उदाहरणम्—**हंसाणेति** ।

---

**उ०ः**—नेत्यर्थ । **अविरलेति** । ( वसंतवर्णनम् । आर्या छन्द. । ) अत्र विकासमदानन्दपदेषु तद्धेतौ लक्षणा । **कोमलानुप्रासेति** । कामोद्दीपकोऽयं

---

**प्रभाः**—मालाप्रकरणम् ॥ ३९ ॥ अविशिष्ट शोभारहितम् । निष्कृष्ट लक्षणमाह—तथा चेति । परस्परं वैशिष्ट्यजनकैकक्रियाजनकत्वमित्यर्थ । **हंसाणं इति** । 'हंसानां सरोभिः श्रीः सार्यते ( सारीक्रियते )ऽथ सरसा हंसैः । अन्योन्यमेवैते आत्मान केवल गुरूकुर्वन्ति ॥' इति । सार्यते प्रसार्यते । उत्कृष्टा क्रियत इति यावत् । इत्यन्योन्यालङ्कारः ॥४०॥

अत्रोभयेषामपि परस्परं जनकता, मिथः श्रीसारतासंपादनद्वारेण ।

**(६४) उत्तरश्रुतिमात्रतः ।**
**प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति ॥ ३५ ॥**
**असकृद्यदसंभाव्यमुत्तरं स्यात्तदुत्तरम् ।**

प्रतिवचनोपलम्भादेव पूर्ववाक्यं यत्र कल्प्यते, तदेकं तावदुत्तरम् । उदाहरणम्—

---

Here both 'produce' each other in so far as they mutually bring about the exaltation of beauty

### 42 UTTARA

(1) Where by merely hearing the reply, the query can be guessed, or (2) where it (i e query) being present, there is (made) a reply such as is unexpected, more than once, the figure is 'Uttara.'

*Gloss* —Where the earlier remark can be guessed merely by the knowledge of the reply, that is the first variety of 'Uttara.'

To illustrate —

---

**प्रदीपः**—अत्र श्रीसारणेन सरोहंसयोर्मिथोजनकता । उत्तरेति । यत्रोत्तरश्रवणमात्रेणानुपात्तमपि प्रश्नवाक्यं परिकल्प्यते तदेकमुत्तरम् । प्रश्ने सति लोकातिक्रान्तगोचरतयाऽसंभाव्यं यदसकृत्प्रतिवचनं तत्पुनरपरम् । अत्र प्रश्नोत्तरयोः सकृदुपादानं न चमत्करोतीत्यसकृदित्युक्तम् । असंभाव्यं तु चमत्कारित्वमिति मान्या । अप्रसिद्धत्वमिति तु

---

उ०:—फल इति भग्यन्तरेण प्रतिपादनेन पर्यायोक्तसत्त्वाच्च, प्रागुक्तरीत्याऽतिशयोक्ते सत्त्वाच्चेत्यपि बोध्यम् । इति कारणमाला । क्रियेति । इद गुणस्याप्युपलक्षणम् । ( हंसाणेति । ) 'हंसाना सरोभि श्री सार्यतेऽथ सरसा हंसै । अन्योन्यमेवैते आत्मान केवल गुरूकुर्वन्ति ।' सार्यते सारीक्रियते । (आर्या छन्द । ) प्रकृते शोभाविशेषविशिष्टान्हंसान्प्रति सरसा कारणत्वम्, शोभाविशेषविशिष्टसरांसि प्रति हंसाना कारणत्वम्, परस्परशोभाजननद्वारेणैवेति भाव । परस्परक्रियया परस्परमुपकारजननज्ञानकृतोऽत्र चमत्कार । इत्यन्योन्यालंकारः । उत्तर नाम प्रश्नगम्यजिज्ञासानिवर्तकज्ञानविषयीभूतोऽर्थ । अत्र प्रश्नेति । उन्नीतप्रश्ने तु सकृदुत्तरस्यापि चारुत्वमिति भाव । प्रश्नोत्तरयोरन्यतरस्याकूतगर्भत्वे बद्धप्रश्नेऽपि सकृदुपादानेन चमत्कारोऽस्त्येव ।

वाणिअअ हत्थिदन्ता कुत्तो अम्हाण वग्घकित्ती अ ।
जाव लुलिआलअमुही घरम्मि परिसक्कए सोण्हा ॥ १३७ ॥

(Cited in ध्वन्यालोक ३.)

हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी, ताः मूल्येन प्रयच्छेति क्रेतुर्वचनं अमुना वाक्येन समुन्नीयते । न चैतत् काव्यलिङ्गम् । उत्तरस्य ताद्रूप्यानुपपत्तेः । न हि प्रश्नस्य प्रतिवचनं जनको हेतुः । नापीदमनुमानम् एकधर्मिनिष्ठतया साध्यसाधनयोरनिर्देशादित्यलंकारान्तरमेवोत्तरं साधीयः ।

O tradesman, how can we be in possession of ivory and tiger skins, so long as there flits about in the house (my) daughter in law with the locks dangling on her face? (137)

"I am in need of ivory and tiger skins Give them to me for a price,'—these words of the purchaser can be guessed from this remark. This is not Kāvyalinga since the reply cannot be reasonably looked upon as being that For, the reply could not be looked upon as the *creative cause* of the query. Nor can this be looked upon as Anumāna. Since the deduction and the means thereto are *not stated* as abiding in the same thing Consequently, Uttara could be better taken as a separate figure

प्रदीपः–वयम् । तच प्रमाणान्तरागोचरविषयत्वात् । अत एव प्रश्नपरिसंख्यातो भेदः । तत्र हि लोकप्रसिद्धविषयस्योत्तरस्य प्रयोजनान्तराभावेनान्यव्यपोहे तात्पर्यम् । अत्र तु निगूढविषयतया वाच्य एव तात्पर्यविश्राम । तत्राद्ये यथा—वाणिअएत्ति । हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी, मूल्येन ता प्रयच्छेति क्रेतृवचनमनेनोत्तरवाक्येनानुमीयते । सूत्रे च प्रश्नपद पूर्ववाक्यमात्रपरमिति प्रश्नाभावेऽप्यदोष । यद्वा हस्तिदन्तव्याघ्र-

उ०:–'किमिति कृशाऽसि कृशोदरि किं तव परकीयवृत्तान्ते'–अत्र प्रश्नेन प्रतीकारसामर्थ्यं व्यग्यम् । उत्तरेण स्वस्य पातिव्रत्य व्यग्यम् । आकूतागर्भत्वे तु उत्तरमलकार एव नेत्याहुर्नव्या । तात्पर्यमिति । वाच्यस्य प्रमाणान्तरप्राप्तत्वादिति भाव । वाच्य एवेति । लोकोत्तरत्वेन चमत्कारिणि वाच्य एव विषमत्वाद्यतिशयप्रतिपादने तात्पर्यादिति भाव । (वाणिअएत्ति ।) 'वाणि-

प्रभाः–अत्रेति । द्वितीयभेद इत्यर्थ । वाणिएत्ति । 'वाणिजक हस्तिदन्ता कुतोऽस्माक व्याघ्रकृत्तयश्च । यावल्लुलितालकमुखी गृहे परिसर्पते स्नुषा ॥' इति । उत्तरं कारकहेतुत्वेनाभिमत ज्ञापकहेतुत्वेन वा । नाद्य इत्याह—उत्तरस्येति ।

प्रश्नादनन्तरं लोकातिक्रान्तगोचरतया यत् असंभाव्यरूपं प्रतिवचनं स्यात्, तत् अपरमुत्तरम्। अनयोश्च सकृदुपादाने न चारुताप्रतीतिरिति सकृदित्युक्तम्। उदाहरणम्—

का विसमा देव्वगई किं दुलहं जं जणो गुणग्गाही।
किं सोक्खं सुकलत्तं किं दुक्खं जं खलो लोओ ॥ १३८ ॥ (—)

That is the other variety of Uttara, where the reply appears unusual on account of its belonging to the province of the extraordinary Since there is no charm if the two (i e. Query and Reply) occur only once each, it is said (in the definition that they should occur) "more than once" To illustrate —

What is perverse?–The turn of fate What is it that is worth finding out? –A person who appreciates merit What is happiness?–A good wife What is the misfortune?–That the world is wicked! (138)

प्रदीपः—कुतस्तत्र सन्तीति प्रश्नवाक्यमिहोनेयम्। न च वाच्यमिदं काव्यलिङ्गविशेष एव। उत्तरस्य प्रश्नं प्रति हेतुत्वाभावात्। उत्तरस्य तदनुत्पादकत्वात्। काव्यलिङ्गस्य तदात्मकत्वात्। तर्हि ज्ञापकतयाऽनुमानमेवेति चत्, न। एकधर्मिगतत्वेन साध्यसाधननिर्देशो हि तत्। न चात्र तथा। तस्मादलंकारान्तरमेवोत्तरम्। द्वितीयं यथा—का विसमेति। अत्र दैवगत्यादेर्वैषम्यादि लोकप्रसिद्धमेव प्रकाश्यते। 'किमासेव्यं पुंसाम्' इत्यादिप्रश्नपरिसंख्यायामन्यव्यवच्छेदे तात्पर्यम्। अत्र तु वाच्य एवेति ततो भेदः।

उ०:—जक हस्तिदंता कुतोऽस्माकं व्याघ्रकृत्तयश्च। यावत् लुलितालकमुखी गृहे परिसक्रामति स्नुषा'। (लुलिता चंचला अलका केशा यत्र तादृशं मुखं यस्याः एतादृशी स्नुषा परिसक्रामति परिभ्रमति। गाथा छन्दः।) अस्यां मासक्तो मत्सुतो मृगयां न करोतीत्युत्तरं व्यग्यम्। (क्रेतारं वणिजं प्रति) वृद्धव्याधोक्तिरियम्। एकधर्मी। पक्षः। न च स्नुषागृहनिवासस्य हस्तिदंताद्यभावे निमित्तत्वेन काव्यलिंगमेवास्तु। तत्संभवेऽपि प्रश्नोन्नयनद्वारेणैव चमत्कारादित्याशयः। (केति।) 'का विषमा दैवगतिः किं दुर्लभं यज्जनो गुणग्राही। किं सौख्यं सुकलत्रं किं दुःखं यत् खलो लोकः' (गाथा छन्दः।) प्रश्नस्य सकृदुपादाने उत्तरस्यानेकत्वेऽप्ययम्। 'किं स्वर्गादधिकसुखं

प्रभाः—किमतो यद्येवं तत्राह—काव्येति। सदात्मकत्वालंकाररूपहेतुत्वात्। तस्मादिति। अर्थादनुमानेऽपि साधननिर्देशादित्यर्थः। का इति। 'का विषमा दैव-

प्रश्नपरिसंख्यायामन्यव्यपोहे एव तात्पर्यम्, इह तु वाच्ये एव विश्रान्तिरित्यनयोर्विवेकः ।

(६५) कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ॥३६॥
धर्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षते ।

कुतोऽपि आकारादिङ्गिताद्वा । सूक्ष्मस्तीक्ष्णमतिसंवेद्यः । उदाहरणम्—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं काऽपि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥ १३९ ॥ (—)

In a Parisaṅkhyā with query, the purport lies solely in the exclusion of other (things); here, however, there is a consummation of the idea in the expressed sense itself. This is the difference between the two (figures).

## 43. SŪKṢMA.

*Where on being somehow detected, a matter which though subtle comes to be disclosed to another (party), by some sign (धर्म), the figure they call 'Sūkṣma.'*

*Gloss.*—Somehow i. e. from looks or gesture. subtle i. e. such as could be understood by a person of keen intellect. To illustrate.—

Seeing the saffron at the throat (of her friend) washed out by the streams of the drops of perspiration dripping down the face, a certain friend sketched, with a smile, the outline of a sword on her palm, suggesting manly coition on the part of the slim lady' (139)

प्रदीपः—कुतोऽपीति । कुतोऽपीति आकारादिङ्गिताद्वा । सूक्ष्मस्तीक्ष्णमतिसंवेद्यः । सत्र रूपादेरन्यथात्वमाकारः । ततो यथा—वक्त्रेति । अत्र कण्ठकुङ्कुमभेदलक्षणेनाकारेण लक्षितं पुरुषायितं सख्या सखीहस्ते खड्गलेखालिखनेन वैदग्ध्यादभिव्यञ्जितम् । पुंसामेव

उ०ः—बंधुसुहृत्पंडितैः सम गोष्ठी । सौराज्यशुद्धवृत्ति सत्काव्यरसामृत स्वादु ॥' इति । एवं प्रश्नोत्तरयोरभिन्नत्वेऽप्ययम् । 'केदारपोषणरता' इत्यादौ । एवं प्रश्नद्वयस्यैकोत्तरत्वादावपि । यथा "'के खेऽटाः किं चल वयः' इत्यादौ । इत्यु-

प्रभाः—गतिः किं लब्ध यज्जनो गुणग्राही । किं सौख्यं सुकलत्र किं दुःख यत्खलो लोकः ॥' अत्र पूर्वं सामान्यत उक्तमपि उदाहरणगतत्वेन विशेषतः पुनराह—अत्रेति । एवं

अत्र आकृतिमालोक्य कयाऽपि वितर्कितं पुरुषायितम् असिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतम्। पुंसामेव कृपाणपाणिता, योग्यत्वात्॥ यथा वा—

संकेतकालमनसं विटं ज्ञात्वा विदग्धया।
ईषन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥ १४०॥

(Cited in ध्वन्यालोक. २.)

अत्र जिज्ञासितः संकेतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः।

---

Here, the manly coition guessed by some woman on seeing the looks (of her friend) comes to be disclosed intelligently by sketching a sword. It is males who, by their fitness, carry the sword in their hands. Or as in,—

Recognising that the paramour, intimating (his) intent slyly (ईषत्) with his eye, had a mind to know the time of appointment, the astute lady closed the sport-lotus! (140)

Here, the time of appointment that was sought to be known (by the paramour) and was understood (by the maiden), by mere gesture, comes to be gracefully intimated by the maiden by closing the lotus, (thereby) suggesting night time.

---

**प्रदीपः**—पाणौ कृपाणस्य योग्यत्वात्। चेष्टाविशेष इङ्गितम्। तेन यथा—**संकेतेति**। अत्र नेत्रोत्साहरूपेणेङ्गितेन लक्षितः कामिनः संकेतकालाभिलापः कामिन्या

---

**उ०ः**—त्तरम्। **अन्यथात्वमिति**। यत्नजन्यस्वेदादिनेत्यर्थः। (**वक्त्रेति**) स्यन्दिभिः प्रस्राविभिः। पुरुषायिते श्रमाधिक्यात् स्वेदाधिक्यम्। पुंस्त्वं पुरुषायितत्वम्। (शालिनी छन्दः।) **लक्षितम्**। सख्या स्वयमुन्नीतम्। **अभिव्यंजितम्**। नायिकायां वयस्यांतरेषु च। अत्र स्वेदलिंगकस्यानुमितिविषयस्य पुरुषायितत्वस्य खड्गलेखादिलिखनेन व्यंजनम्। अत्र विद्यमानमप्यनुमानं सूक्ष्मांगम्। स्ववैदग्ध्यप्रकाशनद्वारा सूक्ष्मस्यैव चमत्कारित्वात्। **संकेनेति**। (संकेतकाले मनो यस्य।) तज्जिज्ञासुमित्यर्थः। ईषत् नेत्राभ्यां अर्पितं

---

**प्रभाः**—च लोकातिक्रान्तगोचरतयेत्यस्य वृत्तिग्रन्थस्य प्रमाणान्तराविषयागोचरतयेत्येवार्थः न तु लोकोत्तरचमत्कारितयेति। प्रश्नपरिसंख्यायामपि तत्सत्त्वेन भेदानुपपत्तेरिति। इत्युत्तरालङ्कारः॥ ४१॥ **कुङ्कुमेति**। कुङ्कुमेन भेदो मिश्रणम्। इति सूक्ष्मम्॥ ४२॥

## ( ६६ ) उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः ॥ ३७ ॥

परः पर्यन्तभागः अवधिर्यस्य, धाराधिरोहितया तत्रैवोत्कर्षस्य विश्रान्तेः । उदाहरणम्—

राज्ये सारं वसुधा वसुधरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम् ॥ १४१ ॥

( Cited in रुद्रट's काव्यालंकार ७ ९७ )

---

## 44 SĀRA

'Sāra' is exaltation in a continuous gradation, with the highest for its limit

*Gloss.*—परावधि is that whose limit is the highest extreme, as exaltation comes to a halt only there rising by gradual ascent To illustrate —

*The earth* [redacted] *the core of kingship, the capital that of the earth.* The palace is the core of the capital, the bed that of the palace, and a *lovely lady, the all in-all of Love, is the core of the bed!* ( 141 )

---

प्रदीपः – निशासूचनेन पद्मसमीरणेन लीलया प्रकाशित । उत्तरोत्तरमिति । परावधिरिति परः पर्यन्तभागो गद्यस्य पद्यस्य वा अवधिरुत्कर्षसीमा यस्य । तेन पर्यन्तभागो यत्र सर्वोत्कृष्ट इत्यर्थः । धाराधिरोहितया तत्रैवोत्कर्षविश्रान्ते । उदाहरणम्—राज्ये इति ।

---

उ० : – सूचित आवृत्त येन । ईषन्नेत्रार्पिताकूतमिति विटविशेषणम् । अनुमानालंकारमाह रुद्रट । नन्वोक्तपिहितालंकारोऽप्यत्रैवान्तर्भूत । इति सूक्ष्मम् । धाराधिरोहितयेति । 'जगतीरश्रियमतिउप्य लीलयैव व्यानशीरूतनमनीयहेमभूमी । नीलाम्भोरुहनयनेऽधुना कुचौ ते स्पर्धेते खलु घनकाचलेन सार्धम् ॥' इत्यत्रापि सार एव । एतेनेदृशे विषये वर्धमानालंकारोऽतिरिक्त इत्यपास्तम् । 'मधुरविकसितोत्पलावतंसं शशिकरपल्लवितं च हर्म्यपृष्ठम् । मदनजननविभ्रमा च रामा सुरभिरमर्यसना निमाति रम्यम् ॥' इत्यादौ [redacted] नायम् । पद्यपर्यन्तभागस्य सर्वोत्कृष्टत्वाभावात् । अत्र कथितपदत्वं न दोष । प्रत्युत तेनैव सर्वनाम्ना वाऽनिर्देशे प्रतीतिस्थगनात् । उत्कर्ष श्लाघ्यगुणानामश्लाघ्यगुणानां च । तत्राद्य उदाहृत । अन्त्यो यथा—तृणाल्लघुतरस्तूलस्तूलादपि च याचक. । वायुना किं [redacted] नीतोऽसौ मामयं याचयिष्यति ॥ ( राज्ये इति । अनंगस्य मदनस्य सर्वस्वं सर्वस्वरूपा वराङ्गना । आर्या छन्द । ) इति सारः ।

(६७) भिन्नदेशतयाऽत्यन्तं कार्यकारणभूतयोः ।
युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसंगतिः ॥ ३८ ॥

इह यद्देश कारणम्, तद्देशमेव कार्यमुत्पद्यमानं दृष्टम्, यथा धूमादि । यत्र तु हेतुफलरूपयोरपि धर्मयोः केनाप्यतिशयेन नानादेशतया युगपदवभासनम्, सा (तयोः स्वभावोत्पन्नपरस्परसंगतित्यागात्) असंगतिः । उदाहरणम्—

## 45 ASANGATI

That is 'Asangati' where there is the statement of two things (धर्मयो) which, related as cause and effect show themselves simultaneously (but) in absolutely different places

*Gloss* —Here it is found that the effect like smoke takes place only in that abode where the cause abides. Where, however, due to some abnormal feature two things related as cause and effect present themselves simultaneously in different abodes, the figure is 'Asangati, so called because there is an abandonment of their mutual association that springs naturally To illustrate—

**प्रदीप** –**भिन्नेति** । अत्रात्यन्तमिति देशभेदस्यैवोपकारक, न तु पृथगपि विवक्षिता र्थम् । युगपदिति स्वरूपनिर्वचनम्, न तु व्यावर्तकम् । तेन कार्यकारणभूतयोर्धर्मयोर्यत्र भिन्नदेशतया संप्रतिपादनं सा असंगतिः । हेतुफलयोरभिधूमाद्योरिव प्रसिद्धाया समानदेशत्वरूपाया संगतेः परित्यागात् । तथाप्रतिपादनं च कारणान्तरेभ्यो वैलक्षण्यात् ।

उ०: –**स्वरूपनिर्वचनमिति** । 'उद्भिन्नमात्रे वयसि दृष्ट्वा प्रियतमाधरम् । भावी लाक्षारसोऽत्रेति कामिनो रज्यते मनः ॥' इत्यत्र कालभेदेऽपि असंगतेरिष्टत्वात् । कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्तेश्च पृथक् वैचित्र्यकारित्वेन समावेश एव युक्त इति भावः । **प्रसिद्धायाः** । कार्यकारणस्वभावसिद्धायाः । **वैलक्षण्यादिति** । कारणगतं कमप्यतिशयमभिसंधायेत्यर्थः ।

**प्रभा** –॥ ४२ ॥ सारश्च ॥ ४३ ॥ **अत्रात्यन्तमितीति** । देशभेदस्यात्यन्तिकत्वं चमत्कारोत्कर्षकतयोपकारकत्वेनोक्तमित्यर्थः । **स्वरूपेति** । द्वयोः कथनस्यान्यथा योगादिति भावः । संज्ञाया अन्वर्थतां दर्शयति—**हेतुफलयोरिति** । वृत्तिस्थ केना

जस्सेअ वणो तस्सेअ वेअणा भणइ तं जणो अलिअं।
दन्तक्खअं कवोले वहूएँ वेअणा सवत्तीणं ॥ १४२ ॥ (—)

एषा च विरोधबाधिनी न विरोधः। भिन्नाधारतयैव द्वयोरिह विरोधितायाः प्रतिभासात्। विरोधे तु विरोधित्वम् एकाश्रयनिष्ठमनुक्तमपि पर्यवसितम्। अपवादविषयपरिहारेणोत्सर्गस्य व्यवस्थितेः। तथा चैव निदर्शितम्।

What the people say, "Who sustains the wound alone suffers the pang," is untrue The tooth bite happens to be on the cheek of the (newly wed) bride, while the co wives suffer the pangs! (142)

This again is an exception to Virodha, not Virodha itself. Since here the conflict between the two is felt to be due to their being present in *different* abodes In Virodha, however, the conflict subsists between things abiding in the *same* abode. This, though not specifically stated, *follows (as a matter of course) Since the general rule applies to the exclusion of the province of the exception* And therefore has it (i e विरोध) been accordingly illustrated.

प्रदीपः—उदाहरणम्—जस्से इति। स्पष्टम्। नन्वयं विरोधालङ्कार एव। हेतुफलयोर्वैयधिकरण्यस्य विरोधरूपत्वादिति चेत्, न। वैयधिकरण्यं ह्यसंगतिः। न च सैव विरोधः। किं तु तद्बोधिका। वैयधिकरण्येन तयोर्विरोधप्रतिभासनात्। नन्वेवमपि प्रतीयमानो विरोध एवालंकारोऽस्तु, न तद्बोधिकाऽसंगतिरपि साक्षात्। न च वाच्यं समानाधिकरण एव विरोधो विरोधालङ्कारनिर्वाहको न तु व्यधिकरणोऽपीति। लक्षणे सामान्यत एव

उ०:—(जस्से इति।) 'यस्यैव व्रणस्तस्यैव वेदना भणति जनस्तदलीकम्। दंतक्षतं कपोले वध्वा वेदना सपत्नीनाम्॥' (गाथा छन्द।) व्रणक्षतपदयोः प्रक्रमभेदोऽपि। विरोधरूपत्वादिति। विरोधोऽनुपपत्तिः। सा च सहानवस्थितयोः महास्थान इव सहस्थितयोः सहानवस्थानेऽपि तुल्या। तस्याश्च प्ररोहे दोष एवेत्याभासता

प्रभा:—व्यतिरेकेणेति व्याचष्टे—तथेति। जस्सेति। 'यस्यैव व्रणस्तस्यैव वेदना भणति तज्जनोऽलीकम्। दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम्॥' अत्र शरीरमात्रयोर्दन्तक्षतवेदनयोरेकस्थानवर्तित्वाभावो मुख्यम्। ननु व्यधिकरणत्वेन स्थितयोः समानाधिकरण्यसमानाधिकरण्येन स्थितयोर्वैयधिकरण्यस्यापि विरुद्धत्वादुक्तालंकार एवेति स्थले—नन्वितिन। असंगतेर्विरोधाद्भेदाय विरोधस्यैतेऽनन्तरं गतार्थे—वैयधिकरण्यं हीति। विरोधस्फूर्तिं विना चमत्कारभावान्नालंकारः समु-

## (६८) समाधिः सुकरं कार्यं कारणान्तरयोगतः।

साधनान्तरोपकृतेन कर्त्रा यद् अक्लेशेन कार्यमारब्धमाधीयते, स समाधिर्नाम। उदाहरणम्—

### 46. SAMĀDHI.

'Samādhi' consists in an effect being rendered easy to accomplish by the occurrence of another cause.

*Gloss*:—Where by an agent, helped by an additional means, is accomplished, without difficulty, a mission he had embarked upon, there results a figure, 'Samādhi' by name. To illustrate:—

**प्रदीपः**—विरोधस्योक्तत्वादिति। मैवम्। सामान्येनोक्तस्यापि विशेष एव पर्यवसानात्। अपवादविनिर्मुक्त एव हि देशे उत्सर्गः प्रवर्तते। विरोधालङ्कारस्य चासंगत्यलंकारोऽपवाद इति व्यधिकरणविरोधस्यापवादाक्रान्ततया तद्भिन्नविरोधे विरोधालङ्कार इति। अत एव तथैवादाहृतम्। **समाधिरिति**। इष्टात्कारणादन्येन कारणेनोपकृतः कर्ता यदक्लेशेन कार्यं

**उ०**:—वाच्या। तथा च विरोधाभास एवेत्यर्थः। **व्यधिकरणविरोधस्येति**। कार्यकारणवैयधिकरण्यप्रयुक्तविरोधस्येत्यर्थः। अत्र येन केनापि प्रकारेण कार्यांशेऽभेदाध्यवसानमनुप्राणकम्। केचित्तु लक्षणे कार्यकारणभूतयोरित्युपलक्षणम्। समानाधिकरणत्वेन प्रसिद्धयोर्वैयधिकरण्यनिबंधोऽसंगतिः। 'नेत्रे निरंजने तस्याः शून्यास्तु वयमद्भुतम्' इत्यादौ निरंजनत्वशून्यत्वयोरकार्यहेत्वोरपि शुद्धसमानाधिकरणत्वेन प्रसिद्धयोरसंगतिरित्याहुः। एवमन्यत्र चिकीर्षितस्यान्यत्र करणे अन्यचिकीर्षावता तद्विरुद्धान्यकरणे चेयमेवासंगतिः। विषयताघटितसामानाधिकरण्येन चिकीर्षायाः कार्यमात्रं प्रति हेतुत्वात्। अधिकरणांतर्भावेनापि चिकीर्षायाः हेतुत्वाच्चेत्याहुः। **इत्यसंगतिः। इष्टादिति**। एककारणजन्यकार्यस्याकस्मिककारणांतरसमवधानाहितं सौकर्यं समाधिरित्यर्थः।

**प्रभा**:—चित इति। पुनराशङ्कते—**नन्वेवमपीति**। असंगतिविरोधयोर्भेदेऽपीत्यर्थः। सिद्धान्त्यभिमतां व्यवस्थां प्रमाणाभावेन दूषयितुं शङ्कते—**न चेति**। समानाधिकरण एव एकाधिकरणप्रतीयमान एव। व्यधिकरणः भिन्नाधिकरणः प्रतीयमानः। तथा च सामानाधिकरण्यकृतविरोधभाने विरोधालङ्कारः। समानाधिकरणयोर्भिन्नाधिकरणत्वनिबन्धनविरोधभाने त्वसंगतिरिति व्यवस्थेत्यर्थः। **व्यधिकरणेति**।

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥ १४३ ॥

(Cited in काव्यादर्श, २. २९९.)

**(६९) समं योग्यतया योगो यदि संभावितः क्वचित् ॥ ३९ ॥**

इदमनयोः श्लाघ्यमिति योग्यतया संबन्धस्य नियतविषयमध्यवसानं चेत्तदा समम् । तत् सद्योगेऽसद्योगे च । उदाहरणम्—

As I was about to fall at her feet in order to dispel her huff, here has luckily appeared the rumble of clouds for obliging me! (143)

### 47. SAMA.

That is the figure 'Sama' if the combination somewhere comes to be viewed as fitting.

*Gloss.*—If there be a determination, "This on the part of these two is admirable," in a particular case, as to the connection being fitting, then the *figure is* 'Sama.' *It is possible with a combination of the good, and of the bad. To illustrate:*—

प्रदीपः—करोति स समाधिः । सम्यगाधिः समाधिरिति व्युत्पत्तेः । उदाहरणम्—**मानमिति** । तयोस्तुल्यकक्षताविरहान्न समुच्चयालङ्कारान्तर्भावः । **सममिति** । योग्यता आनुरूप्यम् । संभावितः सर्वसम्मतः । तेनेदमनयोः समुचितमिति योग्यतया संबन्धस्य

उ० :—सौकर्यं च कार्यस्यानायासेन सिद्ध्या सांगसिद्ध्या च बोध्यम् । (**मानमिति** ।) दिष्ट्या भाग्येन । उदीर्णम् उद्गतम् । **तुल्यकक्षताविरहादिति** । घनगर्जितस्याकस्मिकत्वादिति भावः । अत्र कारणान्तरयोग इत्युपलक्षणम् । तेनाकस्मादीप्सितार्थलाभस्य वाञ्छितसिद्ध्यर्थयत्नात्तदधिकलाभस्योपायसिद्ध्यर्थयत्नात् साक्षात्फललाभवर्णनस्य च समाधित्वमेव । सौकर्यस्य अनायासेन सिद्ध्यादिरूपस्येवाकस्मिकत्वादिरूपस्यापि ग्रहात् । एतेनेदृशे विषये प्रहर्षणं भिन्नोऽलंकार इत्यपास्तम् । अन्यदीयगुणेनान्यत्र गुणवत्ताबुद्धिरूपः अन्यदोषेणान्यत्र दोषवत्ताबुद्धिरूपो योऽवस्तः काव्यलिङ्गेन गतार्थ इत्याहुः । वक्ष्यमाणसममेवेत्यन्ये । एवं कार्यसद्भावतया निर्णीतकारणाभावेऽपि कार्यस्य स्थितिरपि सौकर्यम् । 'दीपे निर्वापितेऽप्यासीत्काञ्चीरत्नैर्महन्महः' इति । एतेनात्र पूर्व-

प्रभा :—स्वर्णपरगन्त्वप्रयुक्तस्येत्यर्थः । तथैव सामानाधिकरण्येनैव । उदाहृतं विरोधालंकार इति शेषः । इत्यवोचत् ॥ ४४ ॥ सम्यगाधिरिति । सम्यगाधानमाहितिर्वा ;

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
रूपे देवोऽप्ययमनुपमो दत्तपत्रः स्मरस्य ।
जातं दैवात्सदृशमनयोः संगतं यत्तदेत-
च्छृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥ १४४ ॥ (—)

यथा वा—

चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥ १४५ ॥ (—)

This deer-eyed one is the touch stone of the supremacy of the Creator's skill, this king also is peerless in beauty, to whom Cupid has surrendered his charter. Since a worthy union of these two has luckily taken place, here is at hand the one umbrella *régime* of Romance! (145)

Or as in

Wonder! Oh wonder! Ah, how mightily wonderful and strange it is that fortunately the Creator has become the dispenser of a fitting arrangement! Since, on the one hand, the abundance of the ripe fruit of the Nimba trees has become worth tasting; and on the other, the crow-world has grown expert in the art of munching it! (146)

**प्रदीपः** – नियतविषयमध्यवसानं चेत्तदा सम नामालङ्कारः । योग्यता च प्रकर्षनिकर्षाभ्याम् । तत्र प्रकर्षेण यथा—**धातुरिति** । निकर्षेण यथा—**चित्रमिति** ।

**उ०ः** – रूपं नाम पृथगलङ्कारः। विकृतेऽपि वस्तुनि पूर्वावस्थाऽनुवृत्तिः पूर्वरूपमितीत्यपास्तम् । **इति समाधिः** । **योगः** । संयोगादिरूपः कार्यकारणभावश्च । **आनुरूप्यमिति** । तेन सता सतो योगोऽसता चासतो योग इति लब्धम् । तेन सदसतोर्योगे नायम् । अनौचित्यात् । समुच्चये सतोरसतोर्वा कारणयोः समुच्चयः, अत्र त्वकारणयोरपि तयोर्योगस्यौचित्याभिधानमिति विशेषः । **नियतविषयमध्यवसानम्** । निश्चयः । **धातुरिति** । निकषस्थानं परीक्ष्योपलरूपा । (अयं देवो राजा ।) स्मरस्य रूपे दत्तपत्रः कृतपत्रावलंबन इत्यर्थः । (संगतं समागमः । मन्दाक्रान्ता छन्दः ।) **चित्रमिति** । फलस्फीतिः फलसंपत् । (एतस्याः फलसंपदः ।) कवलनकला भक्षणचातुरी तत्र कोविदः पंडितः । मन्दाक्रान्ता छन्दः ।) कार्यकारणभावसंसर्गस्यानुरूपत्वं कारणात्स्वसमानगुणकार्योत्पत्त्या । यथा 'मत्रार्पितहविर्दीप्तहुताशनतनूभुवः' । शिखास्पर्शेन पांचाल्याः

(७०) क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात्।
कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत् ॥ ४० ॥
गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये।
क्रमेण च विरुद्धे यत्स एष विषमो मतः ॥ ४१ ॥

द्वयोरत्यन्तविलक्षणतया यद् अनुपपद्यमानतयैव योगः प्रतीयते [१], यच्च किंचिदारभमाणः कर्ता क्रियायाः प्रणाशात् न केवलमभीष्टं

---

## 48. VIṢAMA.

(1) Where due to extreme disparity of nature, the association (between two things) may not attain congruity; (2) where an agent does not attain the fruit of his action, but is confronted by disaster; (3-4) and where the quality and action of the cause are respectively opposed to those of the effect,—that then is held to be the figure 'Viṣama.'

*Gloss*:—(1) Where the association of two things is felt to be incongruous due to their absolute disparity, (2) where an agent setting about doing something not only fails to attain, due to the frustration of the action, its desired fruit, but might encounter an ominous matter, though unsought for,

---

प्रदीपः—क्वचिदिति। द्वयोरत्यन्तविलक्षणतया यत्र वियोगो घटनां नोपैति, किं त्वनुपपद्यमानतयैव प्रतीयते ॥ एको विषमः। यत्र क्वचित्कार्यमारभमाणः कर्ता बलवत्कारणान्तरेण

---

उ०:—शयने दग्ध सुयोधनः ॥' इति। यादृशगुणकवस्तुसंसर्गस्तादृशगुणोत्पत्त्याऽपि समम्। 'वडवानलकालकूटलक्ष्मीमकरव्यालगणैः सहैधितः। रजनीरमणो भवेन्नृणां न कथं प्राणवियोगकारणम् ॥' ॥ क्वचिदिष्टप्राप्त्यर्थं प्रवृत्तस्य कारणान्तरप्राप्त्या च। यथा—'उच्चैर्गजैरटनमर्थयमान एव त्वामाश्रयन्निह चिरादुषितोऽस्मि राजन्। उच्चाटनं त्वमपि लम्भयसे तदेव मामद्य नैव विफला महतां हि सेवा ॥' इत्यत्र। यद्यपि स्तुत्या निन्दाऽभिव्यक्तौ तदुपस्कारको विषमोऽप्यत्रास्ति। तथापि वाच्यस्तुतिकक्षायां समालङ्कारो न वार्यते। लम्भयतेर्थनस्य द्विकर्मकत्वम्। न च लोकसिद्धाया कारणानुरूपकार्योत्पत्तेर्निबन्धने न चमत्कारित्वम्। वस्तुतोऽननुरूपयोरपि कार्यकारणयोः श्लेषादिना धर्मैक्यसंपादनद्वाराऽनुरूपतावर्णने वस्तुनोऽनिष्टस्यापि तेनैवोपायेनेष्टाभेदसंपा-

यत् फलं न लभेत, यावदप्रार्थितमप्यनर्थं विषयमासादयेत् [ २ ], तथा, सत्यपि कार्यस्य कारणरूपानुकारे यत् तयोर्गुणौ क्रिये च परस्परविरुद्धतां व्रजतः [ ३।४ ], स समविपर्ययात्मा चतूरूपो विषमः । क्रमेणोदाहरणम्—

शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना ।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः ॥ १४६ ॥
( नवसाहसाङ्कचरित १६-२८ )

सिंहिकासुतसंत्रस्तः शशः शीतांशुमाश्रितः ।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥ १४७ ॥ (—)

( 3 ) likewise, though, ( as a rule ), the effect bears resemblance to the nature of the cause, where their qualities and actions become mutually opposed, the figure is 'Viṣama in four varieties, so called because of its being essentially the reverse of Sama.

Instances in order —

How wide the gulf between this lady with long eyes, whose limbs are more tender even than the Śirīṣa and this fire of love as tormenting as chaff fire ! ( 146 )

The hare when scared by one son of सिंहिका ( lioness ) took shelter in the moon. There another son of सिंहिका ( राहु ) swallowed him up along with his shelter ! ( 147 )

**प्रदीपः**–विष्टम्भात्तत्क्रियाफलं नाप्नोति, प्रत्युतानिष्टं विषयमासादयेत्स द्वितीयः । यत्र क्रियाफललाभेऽपि कार्यकारणयोर्गुणौ क्रिये वा विरुद्धे भवतस्तौ तृतीयचतुर्थौ विषमौ। सर्वत्र समताया विपर्ययात्। तत्र प्रथमो यथा—**शिरीषेति**। द्वितीयो यथा—**सिंहिकेति**। अत्र त्राणरूपफलाभावेऽन्येन ग्रासरूपोऽनर्थः । तृतीयो यथा—

**उ० :**–दनेनेष्टप्राप्तिवर्णने चारुताया अनुभवसिद्धत्वात् । **इति समम्** । ( **शिरीषादिति** । ) कुकूलाग्निः करीषाग्निः । कुम्भकारपचनाग्निरित्यन्ये । अत्रान्यतरगुणस्वरूपतिरस्कार्यन्यतरगुणस्वरूपत्वाद्वैषम्यम् । **सिंहिकेति** । राहुमाता सिंही च । ( सिंहिकासुतात् सिंहात् सत्रस्त भीत । शीतांशुम् चन्द्रम् । अन्य सिंहिकासुत राहु ।) अत्रानयोर्योगोऽनुचित इति व्यङ्ग्यम् ।

**प्रभाः**–इति समाधिः ॥ ४५ ॥ **सममिति** । स्पष्टम् । इति समम् ॥ ४६ ॥ **विष्टम्भादिति** । प्रतिबन्धादित्यर्थः । कुक्षिशरीरयोरवयवावयविनोर्वैषम्य पानकर्तृत्वपानकर्मत्व-

सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोक्याभरणं प्रसूते ॥ १४८ ॥
( नवसाहसाङ्कचरित १ ६२ )

आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥ १४९ ॥
( Cited in रुद्रट's काव्यालंकार ९ ४७ )

---

Coming into contact with whose hand, [O wonder] in each and every battle, the sword *dark-blue* like the Tamala leaf immediately gives rise to glory *white* like the autumnal moon, the ornament of the three worlds! (148)

You give this unsubdued *delight*, O lady with eyes resembling lotus petals (But) the separation *occasioned by yourself* very much *afflicts* my body (149)

---

प्रदीपः—सद्य इति । चतुर्थो यथा—आनन्दमिति । अत्रानन्ददानशरीरतापक्रिये

---

उ० :—सद्यः करेति । करस्पर्शमात्रेणैव यशो न तु युद्धापेक्षेत्यर्थः । ( उपजातिश्छन्दः । ) अत्र जन्यजनकयोः पाण्डुरनीलाख्यगुणयोर्वैषम्यम् । अत्र श्यामत्वगुणविशिष्टात्कारणात्तद्विरुद्धगुणयुक्तयशस उत्पत्तिः । अभेदाध्यवसानलक्षणेनातिशयेन समवायिकारणरूपतया स्थिते निमित्तकारणे विषयाशामालम्ब्य भातो विरोधो विषयवैशिमर्शनान्निवर्तते इति । अत्राभेदाध्यवसायोऽनुप्राणकः । तदुत्थापितविरोधश्च परिपोषकः । इदमेवानयोरलंकारत्वबीजम् । द्वितीयभेदे इष्टानवाप्त्यनिष्टाप्ती मिलिते प्रत्येकं च विषमपदार्थः । इष्टं स्वस्य सुखसाधनप्राप्तिः दुःखसाधननिवृत्तिश्च, परस्य दुःखसाधनप्राप्तिः सुखसाधननिवृत्तिश्चेति चतुर्विधम् । अनिष्टं च स्वस्य दुःखसाधनप्राप्तिः परस्य सुखसाधनप्राप्तिः दुःखसाधननाशश्चेति त्रिविधम् । तत्राद्योदाहरणं सिंहिकेत्युक्तम् । अन्येषां कुम्भपानादौ द्रष्टव्यम् । आनंदमिति । ( अमन्दम् अनल्पम् । आर्या छन्दः । ) अत्र नायिकाविरहयोर्जन्यजनकयोरानन्दजननतापनक्रिययोर्विरोधः । न चात्रासङ्गतिर्विरोधो वा । विरोधे विरोधिनोः सामानाधिकरण्यस्यासङ्गतौ कार्यकारणयोर्वैयधिकरण्यस्य चमत्कारप्रयोजकता, अत्र तु कार्यकारणयोः प्रकृतिविजातीयगुणयोगस्य चमत्कारित्वेनेति विशेषात् ।

---

प्रभा :—स्वे पानादर्पभिरप्यभेदोदाहरणेन बोध्यम् । इति विषमालंकारप्रकरणम् ॥४७॥

अथानन्ददानं शरीरतापेन विरुध्यते । एवम्—

विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥ १५० ॥

( शिशुपालवध. १३. ४०. )

इत्यादावपि विषमत्व यथायोगमवगन्तव्यम् ।

---

Here the giving of delight is opposed to the affliction of the body. Similarly,

That Kṛṣṇa, however, by the belly of whom resting in the ocean the worlds were taken in at the time of dissolution, was taken in by one of the ladies of the city with one eye that was not fully opened due to the play of passion!

In instances like these also, there should be recognised traits of Viṣama, according to the particular occasion

---

प्रदीपः—विरुद्धे । सूत्रे विभाग उपलक्षणपर । तेन सबन्धिनोरानुरूप्याभावात्मकस्य विषमस्यान्येऽपि भेदा भवन्ति । तत्रावयवावयविनोर्वैधर्म्ये यथा—विपुलेनेति ।

---

उ० :—उपलक्षणपर इति । एवमन्यालङ्कारसूत्रेष्वपि विभागोपलक्षणमिति ध्वनितम् । भवंतीति । सबधिनोर्योगवैषम्यमात्रस्यैव विवक्षितत्वमिति भाव । विपुलेनेति । ( माघकाव्ये त्रयोदशसर्गे पद्यम् । सागरे शेते इति सागरशयः तादृशस्य । यस्य श्रीकृष्णस्य । कुक्षिणा उदरेण । युगक्षये प्रलये । ) पपिरे जग्रसिरे । मदविभ्रमापूर्णया चक्षुःकोणमात्रेणैव । पपे । सादरमवलोकनमत्र पानम् । ( मञ्जुभाषिणी छन्द । ) पानपदार्थयोर्भेदेऽप्यभेदवर्णनादुदाहरणमिदम् । अत्र सागरशयत्व ससागरसकलभुवनग्रासश्चेत्येक विषमम् । एव यस्य कुक्षिरेव सकलभुवनपानसमर्था तस्य सपूर्णस्यानयविन स्त्रिया एकदेशा पान चापर विषमम् । योगवैषम्यादेव चमत्कारान्न विरोधाशङ्का । एव कस्यचिद्गुणेन कस्यचिद्दोषवर्णन, कस्यचिद्दोषेण कस्यचिद्गुणवर्णनमपि विषममेव । एतेनात्रोल्लासोऽतिरिक्त इत्यपास्तम् । एवमिष्यमाणविरुद्धार्थप्राप्तिरपि विषममेव । तादृशेच्छया तादृशलाभयोगस्य विषमत्वात् । एतेनेदृशस्थले विषादनामाऽलङ्कार इत्यपास्तम् ।

---

प्रभाः—वर्णनीयेति । वर्णनीयोत्कर्षविवक्षयेत्यर्थ । एतच्च महतीत्यत्रैव तनुर-

(७१) महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् ।
आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत् ॥४२॥

आश्रितम् आधेयम्, आश्रयस्तदाधारः, तयोर्महतोरपि विषये तदपेक्षया तनू अप्याश्रयाश्रयिणौ प्रस्तुतवस्तुप्रकर्षविवक्षया यथाक्रमं यत् अधिकतरतां व्रजतः, तदिदं द्विविधं अधिकं नाम । क्रमेणोदाहरणम्—

अहो विशाल भूपाल भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ १५१ ॥

(Cited in काव्यादर्श २ २१९)

## 49 ADHIKA

Where the thing abiding and the abode being great, the abode and the thing abiding respectively, though (really) small, might be (described as) greater, the figure is 'Adhika.'

*Gloss*—आश्रित is the thing abiding आश्रय is its abode. When in the case of both of them, though they are great, respectively the abode and the abiding thing, though small, are described as greater, in order to convey the eminence of the matter on hand, there results 'Adhika' of two varieties Instances in order—

How vast, O king, is the bosom of the three worlds, since here can be held the volume of your glory though it is impossible to hold it! (151)

प्रदीपः — एवमन्यत्राप्यूह्यम् । महतोरिति । वर्णनीयोत्कर्षापेक्षया यन्महदाश्रिते विषये तदपेक्षया तनुरप्याश्रयो महीयान्स्यात् महीयस्तया वर्ण्यते, महत्याश्रये वा विषये आधेय एव तथा वर्ण्यते तदुभयमधिकालंकारः । तत्राद्यं यथा—अहो इति । आधाराश्रयस्य

उ: ० — एवमन्यदीयगुणेनान्यत्र गुणाभावस्य अन्यदोषेणान्यत्र दोषाभावस्य वर्णनेऽपि विषमम् । क्वचिद्रूपमाणोऽनुगुणो वा । एतेनैतद्विधे विषयेऽवज्ञाऽलंकारान्तरमित्यपास्तम् । कारणे सति कार्यानुत्पत्तिरूपविशेषोक्त्यैव गतार्थोऽयमिति तत्त्वम् । उदाहरणम्—'चिर जटनिर्वो मग्नो भैन्यफे नैने मर्दनम् ।' इत्यादि । एवमिष्टमिच्छयाभिष्टिना क्रियमाणमिष्टविपरीतयत्नाचरणमपि विषममेव । यथा 'नमन्ति सन्तस्त्रैलोक्यादपि लघ्वीं समुन्नतिम्' । वाच्यत्र तीर्थिगतो योगोऽभ्युन्नतौ । एतेनात्र विचित्रालंकारः पृथगित्यपास्तम् । इति विषमम् । वर्णनीयोत्कर्षापेक्षयेति । वर्णनीयोत्कर्षं बोधयितुमित्यर्थः ।

प्रभा: — पैंग्यलास्वर्वेरी । विषये प्रतिपाद्ये । महत्याश्रये इत्यत्रापि वर्णनीयादेरन्वयः ।

युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥ १५२ ॥

(शिशुपालवध १२३)

(७२) प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया ।
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥ ४३ ॥

The raptures occasioned by the arrival of the sage could not be held in that body of Krsna, the enemy of Kaitabha who had retracted (in himself) the beings (आत्मन) at the time of the eon-end (i. e. world-dissolution) the body in which the worlds could rest roomily ! (152)

## 50 PRATYANĪKA.

Where by a party who is not able to counter his opponent is brought about the humiliation of one belonging to him (i. e. opponent) leading to his (i. e. opponent's) exaltation, the figure is 'Pratyanika'

प्रदीपः–भुवनवितयस्य महत्तया वर्णनम् । द्वितीय यथा—युगान्तेति । अनाधेयभूताया गुरो महीयस्त्व विवक्षितम् । प्रतिपक्षमिति । अपकारिणमपि विपक्षं साक्षादपकर्तुमक्षमेण केनापि तदीयस्य तिरस्करण तमेवोत्कर्षयितु

उ० :– विषये । सबधे । महत्तया वर्णनमिति । अत्र मातुमशक्यतया महत्त्वेन विवक्षितस्य यशोराशेराश्रितस्य मानकर्तृत्वेन ततस्तनोरपि भुवनत्रयस्याधिक्यमभिधीयमान वर्णनीययशोराशिप्रकर्षे विश्राम्यति । युगांतेति । (माघकाव्ये प्रथमसर्गे नारदागमने श्रीकृष्णवर्णनम् । युगातकाले प्रतिसहृत आत्मा स्वात्मभूत प्रपचो येन तस्य कैटभद्विष श्रीविष्णो यस्या तनौ जगति भुवनानि सविकाश सावकाश आसत उपविशति स्म, तत्र तस्या तनौ तपोधनस्य नारदस्य अभ्यागम आगमन तत्सभवा तज्जन्या मुदः प्रीतय न ममु न अवकाश प्रापु । वंशस्थ वृत्तम् । ) अत्र जगदाश्रयतया महत्त्वेन विवक्षितस्य भगवच्छरीररूपाश्रयस्य मानाभावरूपसबधात्ततोऽल्पस्याऽपि तपोधनागमजन्यहर्षस्य वर्णनीयस्याधिक्य चारुताहेतु । अत्र महत्त्वशब्देन महत्परिमाण अतिशयश्च । तेन यत्र सूक्ष्मत्वातिशयवत आधा-

प्रभा :–आधेय एव तनुरपि तथा महीयस्तया वर्ण्यत इत्यर्थ । इत्यधिकप्रकरणम् ॥ ४८ ॥ उत्कर्षयितुमित्यनन्तर यदिति शेष । कथ तत्प्रत्यनीकमुच्यते तत्राह—अनी-

यथा वा—

यस्य किंचिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनाऽपि बाधते ॥ १५४ ॥
( शिशुपालवध. १४·७८. )

इन्दोरत्र तदीयता संबन्धिमुखसंबन्धात् ।

(७३) समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते ।
निजेनागन्तुना वाऽपि तन्मीलितमिति स्मृतम् ॥ ४४ ॥

---

Or as in

Powerless to do any harm to whom (i. e. कृष्ण), the rapacious Rāhu who has been nursing hostility, due to the mutilation of his body, still harasses the moon whose form is similar to his (कृष्ण's) lovely face ! (154)

Here the moon becomes one belonging to him (i. e. the enemy: Krṣṇa) owing to her connection with the face that bears relation (of resemblance to the face of Krṣṇa).

### 51. MĪLITA.

Where a thing comes to be concealed by another, due to a similar *feature, intrinsic or extrinsic, the figure is* 'Mīlita.'

---

प्रदीपः—तत्राद्य यथा—**त्वमिति** । अत्र कामिन्या कामिनश्च साक्षादेव स्वस्वामिभाव सबन्ध । द्वितीय यथा—**यस्येति** । अत्र यत्पदार्थेन मुखस्यावयवावयविभाव सबन्धस्तेन चन्द्रस्य सादृश्यलक्षण इति परम्परासबन्ध. । **समेनेति** ।

---

उ०ः—सूचकत्वेन बोध्यम् । **अनीके** । सैन्ये । **अभियोज्ये** । पीडनीये । **त्वमिति** । ( नायक प्रति नायिकासख्या उक्ति' । ) जितकामसौंदर्य. । अनुशयः आक्रोश' । ( स्वागता छन्दः । ) **यस्येति** । माघकाव्ये चतुर्दशसर्गे पद्यम् । ) कायस्य शरीरस्य यो निग्रह. शिरश्छेदस्तेन गृहीतोऽङ्गीकृतो * विरोधो येन । यस्य कृष्णस्य । रमणीयकृष्णवक्त्रसदृशाकृतिम् । ( रथोद्धता छन्दः । ) न च भगवद्वैरानुबंधादिव भगवद्वक्त्रसदृशमिंदु राहुर्बाधत इति प्रतीतेर्गम्योत्प्रेक्षैवात्रास्तु, आद्ये तु शाब्यपि सेति किमनेनालकारेणेति वाच्यम् । तदपकारासमर्थस्तदीय पीडयतीति प्रतीत्यैवात्र चमत्कारादित्याहु' । **इति प्रत्यनीकम्** । **समेनेति** । अस्य व्याख्या निगूहनीयसाधारणेति । स्फुटमुपलभ्यमानस्य कस्यचिद्वस्तुनो लिंगैरतिसा-

सहजं आगन्तुकं वा किमपि साधारणं यत् लक्षणम्, तद्द्वारेण यत् किंचित् केनचित् वस्तुस्थित्यैव बलीयस्तया तिरोधीयते, तत् मीलितमिति द्विधा स्मरन्ति । क्रमेणोदाहरणम्—

> अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
> विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
> इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया
> तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ १५५ ॥ (—)

अत्र दृक्तरलतादिकमङ्गस्य लिङ्गं स्वाभाविकम् साधारणं च मदोदयेन, तथाप्येतस्य दर्शनात् ।

When through a common feature, intrinsic or extrinsic, something comes to be obscured in fact (as a matter of course) by another due to the latter being the stronger, that they hold to be '*Mīlita*,' which, (*accordingly*), is of two kinds. Instances in order :—

The eyes have become fickle at the corners; the words consist of syllables sweet and ornate; the gait is heavy with the pressure of amours; the face is lovely in the extreme : thus Grace itself has been active in the person of the deer eyed one. Consequently, the advent of intoxication though it has secured a footing here is not yet detected ! (155)

Here the fickleness of the eye etc. is a feature intrinsic to the body, and it is common to the advent of intoxication, since there also it is to be found.

प्रदीपः—मिलितं स्वाभाविकं लक्ष्म निगूहनीयसाधारणं चिह्नं द्वारेण केनचिद्वस्तुना बलवत्तया यत्किंचिद्वस्तु वस्तुस्थित्यैव तिरोधीयते तन्मीलितमित्यर्थः । तच्च द्विधा—लक्षणस्य स्वाभाविकत्वागन्तुकत्वाभ्यां भेदात् । तत्र स्वाभाविकेन लक्ष्मणा मीलितं यथा—अपाङ्गेति । अत्र तरलत्वादि अङ्गस्य स्वाभाविकं लिङ्गं, मदस्य च तिरोधेयेन मदेन ।

उ०:—स्यात् मिलितं ... [illegible] ... मीलितम् । 'लिप्तोऽपि ... ' इत्यादावतिव्याप्तिरिति । ... [illegible] ... । अपाङ्गेति । ( अपाङ्ग तरले ... अपाङ्गयो तरले चञ्चले इति

प्रभाः—मुद्रितेऽयं पाठः ... ॥ ४० ॥ वस्तुस्थित्येति । ... [illegible] ...

१९

ये कंदरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते ।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो बत भियां न बुधोऽप्यभिज्ञः ॥ १५६ ॥ (—)

अत्र तु सामर्थ्यादवसितस्य शैत्यस्य आगन्तुकत्वात्तत्प्रभवयोरपि कम्पपुलकयोस्तादूप्यं समानता च, भयेष्वपि तयोरुपलक्षितत्वात् ।

**( ७४ ) स्थाप्यतेऽपोह्यते वाऽपि यथापूर्वं परं परम् ।**
**विशेषणतया यत्र वस्तु सैकावली द्विधा ॥ ४५ ॥**

Oh ! Even the astute person fails to see through the fright of those enemies of yours, though they possess bodies in a state of horripilation and shudder: enemies who being in their minds afraid of your onslaught always dwell in the caves of the Himālaya, quite helpless ! ( 156 )

*Here the cold that is determined ( to be the reason of the horripilation and shudder ) on the strength ( of probability ) is extrinsic.* Therefore, the horripilation and shudder arising therefrom are also similar in nature. Further they are common, since they are observed even in cases of fright.

### 52 EKĀVALĪ.

It is Ekāvali of two varieties where each succeeding thing is established or denied as being an attribute of each preceding one.

**प्रदीपः**—तत्राऽन्यतदुपलम्भात् । आगन्तुकेन लक्ष्मणा यथा—ये इति । अत्र कम्पपुलके अङ्गस्य लिङ्गे, हिमाद्रिकन्दरानिवाससामर्थ्याधिगतशीतरूपकारणस्यागन्तुकत्वेन तत्कार्यभूतयोस्तयोरप्यागन्तुकत्वं भये. समानता च । तेष्वपि तयोरुपलम्भात् । स्थाप्यते इति ।

उ० :—वा । मधुराः वक्राः वक्रोक्तिसमर्पकाः वर्णाः यासु । मृगदृशः अंगके कोमलशरीरे लीलया स्वतः स्वभावतः स्फुरितम् । मदोदयः मधुपानजन्यमदस्य उदयः । कृतपदोऽपि कृतस्थानोऽपि । ( पृथ्वी छन्दः । ) अत्र स्वाभाविकेन दक्तारल्यादिना निगूहनीयमदसमानधर्मेण बलवता मदोऽभिभूयते । (ये इति । त्वत्पाते त्वदागमने शङ्किता धीः येषाम् । विवशाः विह्वलाः । वसंततिलका छन्दः । ) इति मीलितम् । विशेषणतयेति । विशेष्यतयेत्यपि बोध्यम् । यथा—'धर्मेण बुद्धिस्तव देव शुद्धा बुद्ध्या निबद्धा सहसैव लक्ष्मीः । लक्ष्म्या च तुष्टा भुवि सर्वलोका

**प्रभा :**—प्रकरणम् ॥ ५० ॥ बाहुल्येनेति । सकृत्तथोक्तौ चमत्काराभावात् । तथा

पूर्वं पूर्वं प्रति यत्रोत्तरोत्तरस्य वस्तुनो वीप्सया विशेषणभावेन यत् स्थापनं निषधो वा सम्भवति, सा द्विधा बुधैरेकावली भण्यते। क्रमेणोदाहरणम्—

पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्ग्यः।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य॥ १५७॥
(नवसाहसाङ्कचरित १)

*Gloss* —Where in relation to each preceding thing, each succeeding *thing is repeatedly established or denied as being an attribute (of the former)* that figure, in two varieties, is called Ekavali by the learned

Instances in order —

Where (in Ujjain), the houses (पुर) have in them lovely women, the lovely women have their bodies exalted by beauty, the beauty is such as unfolds exquisite amours, the amours are the missile of Cupid! (157)

---

**प्रदीपः**—स्थापनं विधिः। अपोहो निषेधः। यथापूर्वमिति वीप्सायामव्ययीभावः। तेन पूर्वं पूर्वं वस्तु प्रति उत्तरस्य वस्तुनो यत्र विशेषणतया बाहुल्येन विधिः, यत्र वा तथा निषेधः, सा द्विधैकावली। विशेषणतया विधिरित्यस्य विधेर्विशेषणत्वमित्यर्थः। एवं विशेषणतया निषेधोऽपि। कश्चित्तु 'पूर्वकालविशेषणतया स्थितं वस्तु परं विशेष्यं कृत्वा यत्र स्थाप्यतेऽपोह्यते वा सैकावलीति सूत्रार्थः' इत्याह। तत्तु पूर्वं प्रति यथोत्तरस्य वस्तुन इत्यादिग्रन्थविरुद्धम्। तत्र विधौ यथा—**पुराणीति**। अत्र पुराणामङ्गनास्तासामङ्गविशेषणक्रिया-

---

**उ०**:—छोरैश्च नीता भुवनेषु कीर्तिः॥' इति। अत्रोत्तरोत्तरविशेषणं पूर्वंपूर्वं प्रति विशेष्यम्। अत्रैव पूर्वंपूर्वं परस्य परस्योपकारः क्रियमाणो यद्येकरूपस्तदा मालादीपकमुक्तं प्राक्। **स्थापनमिति**। स्थापनत्वं च स्वमनभ्रेन विशेष्य-

---

**प्रभा**:—बाहुल्ये तद्विशेषणतयेति। उत्तरोत्तरस्य विधिः सम्बन्धबोधनम्। तथा निषेधोऽभावबोधनम्। तत्र विशेषणतयेति तृतीयया प्रकारार्थत्वे विशेषणत्वप्रकारेण विधिर्निषेधो वेत्यर्थः स्यात्। न चासौ सम्भवति। प्रकारत्वे प्रकारेण बोधस्योदाहरणेष्वभावात्। अत उपलक्षणे तृतीयेति विशेषणभूतयोर्विधिनिषेधयोरवगतिरित्याशयः। **कश्चित्त्विति**। परमनन्तरं विशेष्यं कृत्वा यत्र स्थाप्यते अथाद्विशेषणेन स्वधर्मवैशिष्ट्यमुपपाद्यत इत्यर्थः। अथवा अपोह्यते स्वव्यतिरेकेण विशेष्यतावच्छेदकनिषेधबुद्धिविषयीक्रियत इत्यर्थः। अत्रोदाहरणम्—'स पण्डितो यः स्वहितार्थदर्शी हितं न तद्यत्र परानपक्रिया। परे न ते ये श्रितसाधुभावा सा साधुता यत्र चकास्ति केशवः॥' अत्र

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न यो
न गुञ्जितं तन्न जहार यन्मनः ॥ १५८ ॥ (भट्टिकाव्य. २ १९ )

पूर्वत्र पुराणां वराङ्गनाः, तासामङ्गविशेषणमुखेन रूपम्, तस्य विलासाः, तेषामप्यस्त्रमित्यमुना क्रमेण विशेषणं विधीयते । उत्तरत्र प्रतिषेधेऽप्येवं योज्यम् ।

---

That is no water where does not grow the extremely charming lotus, that is no lotus in which the bee has not nestled, that is no bee which has not got the sweet hum, that is no hum that has not ravished the mind! (158)

In the former instance, an attribute is established in the order, *viz* lovely women the attribute of the houses, beauty (attribute) of them (i e lovely women), *through the former being the attribute of their bodies*, of that the amours are the attribute, of those (amours) again (being) a *missile is the attribute. In the latter instance which embodies a denial* similar should be the way of construing

---

**प्रदीपः**–मुखेन रूप तस्य विलासास्तेषामस्त्रमिति क्रमेण विशेषणतया विधि । निषेधे यथा—**न तदिति** । अत्र जले पङ्कजस्य, तत्र षट्पदानां, तत्र गुञ्जितस्य, तत्रापि मनोहारितायाः विशेषणतया निषेध । **यथेति** । अनार्षस्य स्मृति स्मरणालकार

---

**उ०ः**–ताऽवच्छेदकनियामकत्वम् । अपोहकत्व च स्वव्यतिरेकेण विशेष्यताऽवच्छेदकव्यतिरेकबुद्धिजनकत्वम् । **बाहुल्येनेति** । तत्रैव चमत्कारादिति भाव । (**पुराणीति** ।) पुराणि गृहाणि । यस्या नगर्याम् । (रूपेण परिष्कृत भूषित अङ्गं यासा ता । विलासा कुसुमायुधस्यास्त्रमिति रूपकम् । उपजातिश्छन्द ) **न तदिति** । भट्टिकाव्ये द्वितीयसर्गे शरत्कालवर्णनम् । न लीन षट्पदो भ्र-

---

**प्रभाः**–तच्छब्दार्थ विशेषण पण्डित पश्चात्स्वहितार्थदर्शित्व प्रति विशेष्यस्तेन विशेषणेन पण्डितत्वेनोपपाद्यते । द्वितीयभेदस्य तु 'न तज्जल यन्न सुचारुपङ्कज' इति वक्ष्यमाणम् । अत्र हि सुचार्वित्यादिविशेषणेन स्वव्यतिरेकेण विशेष्यतावच्छेदकजलत्वनिषेधबुद्धिरिति । अत्र पुराणि यस्यामित्युदाहरणावाप्ति सूत्राक्षराननुसारतश्चेति दोष स्फुट एव । दोषान्तरमप्याह—**प्रकाशेति** । इत्येकावलीप्रकरणम् ॥ ५१ ॥

## ( ७५ ) यथाऽनुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।
### स्मरणम्

य. पदार्थः केनचिदाकारेण नियतः यदा कदाचित् अनुभूतोऽभूत्, स कालान्तरे स्मृतिप्रतिबोधाधायिनि तत्समाने वस्तुनि दृष्टे सति, यत् तथैव स्मर्यते, तत् भवेत् स्मरणम् । उदाहरणम्—

निम्ननाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः ।
तद्भवैः कुहरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम् ॥ १५९ ॥ (—)

---

## 53 SMARANA

When there results the remembrance of a thing as it was experienced, on the sight of something similar to it, the figure is 'Smarana.'

*Gloss* —When a particular object, defined by some form, was at some time experienced, and when, at some other time, it happens to be remembered in the same form, at the sight of another object similar to it, which brings about an awakening of the memory, the figure is 'Smarana.' To illustrate —

By the gurgles produced by the water impinging on the hollows of the navels of the fickle-eyed ones, the divine damsels were put in mind of the trill in the throat at the time of dalliance' (159)

---

प्रदीपः— इति लक्षणम् । यथाऽनुभवमिति स्मृत्याकारदर्शनम् । दृष्टे तत्सदृश इति तद्धेतुसंस्कारोद्बोधहेतुर्निर्देशः । अदृष्टादेरप्युपलक्षणात् । यद्वा अन्यादृशस्मृतेश्चारुत्वाभावे- नालंकारत्वाभावाय्यवच्छेदकतया लक्षणान्तर्गतमेवैतत् । तदयं वाक्यार्थः—केनचिदाकारेण नियतो यदा कदाचित्केनचित्प्रमाणेनाऽनुभूत स कालान्तरे संस्कारोद्बोधहेतौ तत्समानधर्मदर्शने सति यदनुभूतेन प्रकारेण स्मर्यते तत्स्मरणालंकारः । स द्विधा—एतज्जन्मनि जन्मान्तरे वाऽनुभूतस्य स्मृतेः । क्रमेणोदाहरणे । निम्नेति ।

---

उ०: —मरो पत्र । (कठ धर्मस्वरयुतम् । वैशास्य वृत्तम् ।) इत्येकावली । अन्यादृशस्मृतेरिति । अदृष्टोद्बुद्धजन्मान्तरीणसंस्कारजन्यस्मृतेः, चिन्ताद्युद्बुद्धसंस्कारजन्यस्मृतेः, तावद्भिश्चदिमां स्मृतस्तन भुज इत्यादिभूयारणमनश्चज्ञानजन्यस्मृतेश्चेत्यर्थः । अन्यादृश्या अपि स्मृतेः सचारितया भूमद्विषयकरतिभावांगतया प्रेयोऽलंकारत्वेनैव चमत्कारित्वेनैतदलंकारत्वाभावात् । सादृश्यमूलस्मृतेरेव चमत्कारित-

---

प्रभा:— अन्यादृशेति । सादृश्यमूलत्वेत्यर्थः । 'स तथेति प्रणिहाय विसृज्य कथञ्चु- माम् । कुपीप्रोक्तिर्मेयान्तात तस्मार स्मरशासन ॥' इत्यादौ हि न स्मृतेश्चारुत्वमिति नालं-

यथा वा—

करज़ुअगहिअजसोआत्थणमुहविणिवेसिआहरपुडस्स ।
संमरिअपञ्चजण्णस्स णमह कण्हस्स रोमञ्चं ॥ १६० ॥ (—)

(७६) भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने ॥ ४६ ॥

तदिति अन्यत् अप्राकरणिक निर्दिश्यते, तेन समानम् (अर्थादिह) प्राकरणिकम् (आक्षीयते), तस्य तथाविधस्य दृष्टौ सत्यां, यत् अप्राकर-

Or as in

Do homage to the horripilation of Kṛṣna who remembered the Pāñchajanya as he applied his tight lower lip to the nipple of Yaśoda ■ breast which he held between his hands! (160)

## 54 BHRĀNTIMĀN

Where there is a cognition of something else, at the sight of one similar to it, the figure is ' Bhrantimān

*Gloss* —By तत् ■ signified अन्य i e the thing other than the one under consideration as similar to it, is assumed, in the present case, of course, the matter under consideration At the sight of it (i e. matter under considera tion) which is of that description (i. e. similar), when there arises a cognition of its being the thing other than the one under consideration, the figure

प्रदीपः—स्पष्टम् । भ्रान्तिमानिति । अत्राप्यन्यसंविदिति लक्षणम् । तत्तुल्यदर्शन इति हेतुनिर्देश । अन्येति पदार्थं परामृशता तदित्यनेनाप्राकरणिक निर्दिश्यते । तथा च तेन तुल्यमर्थादिह प्राकरणिक लभ्यते । तेन प्राकरणिकस्याप्राकरणिकतुल्यस्य दर्शने सति

उ० :—याऽलङ्कारत्वमिति भाव । (निम्नेति । अप्सरसा जलक्रीडावर्णनम् । ) लहरीभिस्तरगैश्चलदृशा नायिकाना निम्ननाभिकुहरेषु यदम्भ प्लावित तद्भवे सुरतकालिककण्ठध्वनिसदृशौ कुहकुहेति ध्वनिविशेषैरित्यन्वय । कठो यो-निरूपो गर्न । 'कठारटश्चभग्नर्ता' इति कोशात् । रतानामिति कर्मणि षष्ठी । (स्वागता छन्द ।) करेति । 'करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपु-टस्य । सस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम्'॥ (आर्या जघनविपुला । ) इति स्मरणम् । दर्शने सतीति । प्राकरणिकार्थदर्शनेऽदुद्भसत्स्वरजन्याप्रय-

प्रभा:—कारत्वम् । करज़ुएति । 'करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य । सस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥' इति स्मृतिप्रकरणम् ॥ ५२ ॥

णिकतया संवेदनम्, स भ्रान्तिमान् । न चैष रूपकं प्रथमातिशयोक्तिर्वा । तत्र वस्तुतो भ्रमस्याभावात् । इह च (अर्थानुगमनेन सञ्ज्ञायाः प्रवृत्तेः) तस्य स्पष्टमेव प्रतिपन्नत्वात् ।

उदाहरणम्—

कपाले मार्जारः पय इति करॉल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान्विसमिति करी सकलयति
रतान्ते तल्पस्थान्हरति वनिताऽप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥ १६१ ॥

(Cited in सरस्वतीकण्ठाभरण ३)

---

33 'Bhrantiman This is not the same as Rūpaka or Atiśayokti of the first variety Since there is no real error in them Here, on the other hand, it (real error) is obviously assumed as the name (of the figure) gets currency due to its being in agreement with the tenor (of the figure)

To illustrate —

The cat licks the rays of the moon (fallen) in the jug taking them for milk, the elephant grips them as they shoot through the interstices of trees thinking them to be lotus fibres, the woman, at the end of dalliance, snatches at them that are spread on the bed mistaking them for her silken garment Oh! the Moon maddened by his glory plunges this world in confusion! (161)

---

**प्रदीपः**—यदप्राकरणिकत्वेन ज्ञानं स भ्रान्तिमानित्यर्थः । न च रूपके निगीर्याध्यवसानरूपायामतिशयोक्तौ चातिव्याप्तिः । तत्र वस्तुतो भ्रमाभावेऽप्यध्यवसानमात्रस्वीकारात् । इह त्वर्थानुगमेन सञ्ज्ञाप्रवृत्तेर्भ्रमोपगमस्य स्पष्टमेवोपगमात् ।

---

**उ०**:—णिरस्मृतिजन्यमित्यर्थः । **अप्राकरणिकत्वेनेति** । अप्राकरणिकतादात्म्येनेत्यर्थः । **ज्ञानम्** । निश्चयात्मकम् । तेन 'कान्ते तव मुखं पद्मं चन्द्रो वेति न निर्णयः ।' इति संदेहे नातिव्याप्तिः । तत्र सयतेनानुभूयमानारोपस्य चिन्तादिजन्यस्मृतिजन्यारोपस्य च व्युदासः । अप्राकरणिकतादात्म्येनेत्युक्तेर्मीलितसामान्यतद्गुणवारणम् । भ्रान्तिमाननामालङ्कारः । सा च कविप्रतिभानिर्मितैव । तेन रङ्गे रजतमिति बुद्धेर्नालङ्कारत्वम् । रूपकवृत्तौ च नातिव्याप्तिः । मर्मप्रहारकृतचित्तविक्षेपविरहादिकृतोन्मादादिजन्यभ्रान्तेश्च नालङ्कारत्वम् । सादृश्यप्रयो

---

**प्रभा**:—**वस्तुत इति** । अनाहार्यतयेत्यर्थः । **अध्यवसानमात्रेति** । मात्रेत्यनाहार्यत्वव्यवच्छेदः । **अर्थानुगमेनेति** । अर्थमानादाय एवोत्सर्गसिद्धोऽत्र सञ्ज्ञाघटक इति भावः । यत्र भ्रमादिशब्देनेतिशब्दादिना वा भ्रमोपनिबन्धस्तत्र भ्रान्तिमानलङ्कारः

## (७७) आक्षेप उपमानस्य प्रतीपमुपमेयता ।
## तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धना ॥ ४७ ॥

अस्य धुरं सुतरामुपमेयमेव वोढुं प्रौढमिति कैमर्थ्येन यत् उपमानमाक्षिप्यते, यदपि तस्यैवोपमानतया प्रसिद्धस्य उपमानान्तरविवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते, तत् (उपमेयस्योपमानप्रतिकूलवर्तित्वात्) उभयरूपं प्रतीपम् । क्रमेणोदाहरणम्—

### 55. PRATĪPA.

(1) Where an exception is taken to the Upamāna, or (2) if to the same (i. e. Upamāna) ■ assigned the status of an Upameya, based on contempt, the figure is 'Pratipa.'

*Gloss*:—(1) Where an exception is taken on the ground of futility to the Upamāna under the notion that the Upameya itself is capable of fulfilling the function of the former; (2) where again the same that has become established as an Upamāna is conceived to be Upameya as a matter of contempt, with a view to driving at another Upamāna, that is 'Pratipa' in *two* forms, so called because therein the Upameya stands *pitted against* the Upamāna. Instances in order:—

प्रदीपः—उदाहरणम्—कपाले इति । आक्षेप इति । अस्य प्रयोजन निर्वाहयितुमुपमेयमेवालमित्यप्रयोजकतयोपमान यदाक्षिप्यते, यच्चोपमानतया प्रसिद्धस्योपमेये तस्माद्विशेषविवक्षया अनादरार्थमुपमेयभावः कल्प्यते, तदुभयरूप प्रतीपम् । उपमेयस्योपमाने

उ०:—ज्यत्वाभावात् । **वस्तुतो भ्रमाभावेऽपीति** । स्वारसिकभ्रमाभावेऽपीत्यर्थः । अत्र च प्रवृत्तिनिवृत्तिकारिस्वारसिकभ्रमो विवक्षित इति भावः । तयोस्तु शब्दाधीनो व्यांजनिको भ्रम इति तात्पर्यम् । वस्तुतो यत्र 'इति' इत्यादिपदेन भ्रमत्वेन निबद्धो व्यंग्यो वा तत्रायमलङ्कार इति नातिप्रसंगशंकेति बोध्यम् । **कपाले इति** । (भासकवेः पद्यमिति शार्ङ्गधरपद्धतौ स्पष्टम् ।) पय इति । पयोभ्रांत्येत्यर्थः । (लेढि आस्वादयति । तरूणां छिद्रेषु प्रोतान्प्रविष्टान् । संकलयति गृह्णाति । प्रभया मत्तः तदतिशयशाली । विभ्रमयति भ्रममुत्पादयति । मत्तो हि स्वत एव भ्रमति न तु परस्य भ्रममुत्पादयतीत्याश्चर्यं अहोशब्देन बोध्यते । शिखरिणी छन्दः । ) **इति भ्रान्तिमान्** । **अप्रयोजकतया** । **कैमर्थ्येन** । तिरस्कारफलकोपमानव्यर्थतोक्तिरेकं प्रतीपमित्यर्थः ।

प्रभाः—इति नातिप्रसङ्ग इत्यप्याहुः । इति भ्रान्तिप्रकरणम् ॥ ५३ ॥ प्रतीपपदप्रवृत्ति-

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥ १६२ ॥ (—)
ए एहि दाव सुन्दरि कण्णं दाऊण सुणसु वअणिज्जं ।
तुज्झ मुहेण किसोअरि चन्दो उअमिज्जइ जणेण ॥ १६३ ॥ (—)

---

When, O King, the Creator had created you, the sanctum of charm, endowed with the height of prowess, the foremost of the generous, with arms capable of sustaining the burden of the earth, why was the moon shaped? Why was this sun created? Why was that gem fulfilling longings produced? Why were the Kulaparvatas created in vain? (162)

O lovely woman! come along. Lend your ear and listen to the *scandal*: the people are comparing the moon with your face, O lady of slim waist! (163)

---

**प्रदीपः**–प्रतिकूलवर्तित्वात् । तत्राद्य यथा—लावण्येति । अत्र यथासत्यसत्त्वेऽपि आक्षेप एव चमत्कारशरीरत्वाक्षेपोदाहरणता । द्वितीये तु क्वचिदुपमित्यनिष्पत्त्या तिरस्कार, क्वचित्तु निष्पन्ना सैव तद्धेतु । क्रमेणोदाहरणम्—ए एहीति । अत्र मुखोपमानस्य शशिन स्वल्पगुणत्वादुपमित्यनिष्पत्तिर्वैअणिज्जमिति पदेन द्योत्यते ।

---

**उ०**:—प्रतीपप्रयोगार्थमाह—**उपमेयस्येति । लावण्येति ।** लावण्याश्रये, प्रतापातिशयसहिते, दातृमुख्ये, भूभरणसमर्थभुजे । पूषा सूर्य । चिंतारत्न चिंतामणि । ( कुलक्ष्माभृत —' महेन्द्रो मलय सह्य शक्तिमान् ऋक्षपर्वत । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वता ' ॥ शार्दूलविक्रीडित छन्द ।) अत्र निर्मिय्यमानवस्तुगतसकलगुणप्रतीतिर्व्यङ्ग्या प्रयोजनम् । **द्वितीये त्विति ।** तिरस्कारार्थमुपमानस्योपमेयत्वकल्पनरूपे इत्यर्थ । **(ए एहीति।)** ' अयि एहि तावत् सुदरि कर्णं दत्वा शृणुष्व वचनीयम् । तव मुखेन कृशोदरि चद्र उपमीयते जनेन ॥' वचनीय निंदाम् । ( आर्या छद । ) **उपमित्यनिष्पत्तिरिति ।** अत एव व्यतिरेकाच्छेद । तत्रोपमितिनिष्पत्तावप्युपमेयाधिक्यप्रतीते । अत्र वर्ण्यमुख-

---

**प्रभा**:–निमित्तमाह—**उपमेयस्येति । ए एहीति ।** ' अये एहि ताव सुन्दरि कर्णं दत्वा शृणुष्व वचनीयम् । तव मुखेन कृशोदरि चन्द्र उपमीयते जनेन ॥' इति । सैव चेति । व्यतिरेके तूपमितिनिष्पत्तिरस्तीति वैलक्षण्यमिति भाव । न्यूनगुणस्येति । वस्तुतस्तूपमाने साधारणधर्मसबन्धोऽनूद्यते उपमेये तु विधीयते । तेन प्रजिद्दगा-

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतर गुणत्वात् उपमित्यनिष्पत्त्या 'वअणिज्जम्'—इति वचनीयपदाभिव्यङ्ग्यस्तिरस्कारः ।

क्वचित्तु निष्पन्नैवोपमितिक्रिया अनादरनिबन्धनम् । यथा—

गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि मुग्धे ।
सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥ १६४ ॥

( Cited in सरस्वतीकण्ठाभरण ४ )

इहोपमेयीकरणमेवोत्पलानामनादरः ।

अनयैव रीत्या यत् असामान्यगुणयोगात् नोपमानभावमपि अनुभूत-

Here the comparison does not materialise owing to the moon, that is being compared with the face, possessing lesser excellence. Thus there is contempt suggested by the word वअणिज्जम् ( वचनीय )

In some cases, however, the comparison though it has materialised is the basis of contempt To illustrate —

Why do you cherish, O simple maid ! so unbearable a vanity on the score of the pair of your eyes ? Indeed on every side there do exist in the lakes blue lotuses similar to these ! (164 )

Here that the lotuses are reduced to the position of the Upameya is itself a contempt of them

Likewise, when an object, which on account of its possessing extraordinary qualities, has never before experienced so much as the

---

प्रदीपः—सैव च तिरस्कारहेतुः । गर्वमिति । अत्र नलिनानां लोचनोपमेयीकरणमेवानादरहेतुः । उपमेयस्य न्यूनगुणत्वस्थितेः । अनयैव रीत्या तदपि प्रतीपं द्रष्टव्यं यत्सामान्यगुणयोगाभावेनोपमानत्वाननुभवेऽप्यर्थस्योपमानत्वकल्पना । कथमिति चेत् । उपमानतिरस्कारस्यालङ्कारताबीजत्वात् । तच्च द्विधा सम्भवति । उपमानत्वेनैव प्रसिद्धस्योपमेयत्वकल्पनया, असदृशत्वेन प्रसिद्धस्योपमानत्वकल्पनया वा । सूत्रं चोपलक्षणतया

---

उ० :—स्याधिक्यं व्यङ्ग्यम् । ( गर्वमिति । असंवाह्यं सङ्ग्रहनायोग्यम् । अपरिमितमिति यावत् । आर्या छन्दः । ) अत्र नलिनानामिति । उपमानत्वेन प्रसिद्धानामित्यर्थः । अत्र नेत्रयोरुपमानत्वेनाधिक्यं फलति । अत्रोपमितिनिष्पत्तावप्युपमेयाधिक्याप्रतीतेर्व्यतिरेकतो भेदः । 'त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः ।' इत्यप्यत्रोदाहरणम् । असदृशत्वेनेति । उपमेयामभावितस्वनिष्ठासाधारण-

---

प्रभाः—दृश्यतयोपमानस्याधिक्यं साध्यसादृश्यतया चोपमेयस्य न्यूनत्वं बोध्यम् । सामान्यगुणयोगाभावेनेति । स्वभिन्न इति शेषः । इति प्रतीपप्रकरणम् ॥ ५४ ॥

'पूर्वि, तस्य तत्कल्पनायामपि भवति प्रतीपमिति प्रत्येतव्यम् । यथा—

अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥१६५॥
(—)

अत्र हालाहलस्योपमानत्वमसंभाव्यमेवोपनिबद्धम् ।

**(७८) प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया ।**
**ऐकात्म्यं बध्यते योगात्तत्सामान्यमिति स्मृतम् ॥४८॥**

---

status of the Upamāna, comes to be so conceived, it should be recognised also as being 'Pratīpa.' To illustrate:—

O deadly poison, (O dear one) do not be conceited with the idea that you alone are the premier of the extremely dire things. Indeed there exist, in abundance, in this world, the words of the wicked that are like yourself! (165)

Here, though it was quite unlikely (before), the deadly poison has (now) been stated to be the Upamāna.

## 56. SĀMĀNYA.

Where, with a view to conveying the similarity of attributes, the matter under consideration is described as becoming one with another due to their coming together, the figure is 'Sāmānya.'

---

प्रदीपः – योऽन्यम् । उदाहरणम्—अहमेवेति । अत्र हालाहलस्य खलवचनोपमानत्वमसंभाव्यमानमेवोपनिबद्धं तिरस्कारहेतुः । प्रस्तुतस्येति । अतादृशत्वेऽपि विवक्षितगुणसाम्यस्य प्रस्तुतस्यान्येनाप्रस्तुतेन गुणसाम्यविवक्षया ऐकात्म्यं बध्यते तत्सामान्यम् । समानगुणयोगात् । अत्राप्रस्तुतेन प्रस्तुतस्य यदपि विशेषणं विवक्षितम् । अन्यथा तद्गुणादलङ्कारादविशेषापत्तेः ।

उ० : – धर्मयोगादसंभावितोपमानभावस्योपमानत्वकल्पनमेवार्थः । ( अहमिति । तातेति सानुकम्पसंबोधनम् । मा स्म दृप्य । गर्वं मा कृथाः । साङ्गमारिणी छन्दः । ) हालाहलस्येति । अनुपमत्वगर्वहेतोरित्यर्थः । अस्योपमातो भेद उपमाप्रकरण एवोक्तः । इति प्रतीपम् । अतादृशत्वेऽपि । असमानगुणत्वेऽपि ।

प्रभा : – ऐकात्म्यमिति । अभेद इत्यर्थः । मीलितेऽप्यभेदोऽस्ति अत्र तु भिन्नत्वेनाप्रतीयमानो भेदः । तद्गुणेति । यद्यपि तद्गुणेऽलङ्कारेऽन्यगुणग्रहणमात्रं न तु धर्मिणोरभेदोऽपि प्रतीयते । 'बिभ्रद्वर्णं मरकतमणेः—'इत्यादावरुणस्य सुवर्णभानां सांनिध्यमात्रप्रतीतेस्तथात्वात् तथापि तद्गुणविवक्षया इह नियमे तात्पर्यं बोध्यम् । तद्गुणा-

अतादृशमपि तादृशतया विवक्षितुं यत् अप्रस्तुतार्थेन संपृक्तमपरित्यक्तनिजगुणमेव तदेकात्मतया निबध्यते, तत् (समानगुणनिबन्धनात्) सामान्यम्, उदाहरणम्—

मलयजरसविलिप्ततनवो नवहारलताविभूषिताः
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयांति सुखमेव निरस्तभियोऽभिसारिकाः ॥ १६६ ॥

(Cited in वामन's काव्यालङ्कारसूत्रवृत्ति ४·३.)

*Gloss* —Where a thing when it comes in contact with the matter not under consideration, though not similar to the latter, is sought to be described as similar, and is therefore described as being one with it, even when it has not abandoned its own attribute, the figure is 'Sāmānya', so called because it is based on similar attributes To illustrate —

With their bodies besmeared with sandal paste, adorned with new pearl necklaces, with their faces lit up by ivory pendants extremely white, clad in gay immaculate silk, the Abhisārikās, who have become *imperceptible*, when the moon with lustre diffused is making the earth white, are proceeding at ease to the abodes of the beloveds, free from concern! (166)

**प्रदीपः**—'बध्यते' इत्यस्य प्रत्यायनमात्रमर्थो न तु शाब्दं प्रतिपादनम्। उदाहरणे 'अविभाव्यता गता' इत्यादावैकात्म्यस्याशाब्दत्वात्। उदाहरणम्—**मलयजेति**। अत्राभिसारिका-

**उ०ः—प्रस्तुतस्य**। प्राधान्येन वर्णनीयस्य। **गुणसाम्यविवक्षया**। गुणसाम्यं प्रतिपादयितुम्। **ऐकात्म्यम्**। पृथक्त्वेनाप्रतीयमानत्वम्। तेन मीलिताद्भेदः। तत्र बलवत्सजातीयग्रहणकृताग्रहणम्, अत्र तु पृथक्त्वेनाग्रहणमिति विशेषात्। न च भ्रान्तिमता सङ्करः। तत्र स्मर्यमाणस्यारोपोऽत्रानुभूयमानस्येति विशेषात्। नापि रूपकप्रथमातिशयोक्तिभ्याम्। उपमेये उपमानतादात्म्यस्य शब्दादप्रतीते रूपकाभावात्। उपमानतावच्छेदकरूपेण अप्रतीयमानत्वान्नातिशयोक्तिः। (**मलयजेति**।) दन्तपत्र दन्तनिर्मितताटङ्कम्। (वितत विस्तृत धाम तेजो यस्य तस्मिन् शशभृति चन्द्रे धरा पृथ्वीं धवलयति सति। अविभाव्यतां

**प्रभाः**—लकारे सति तल्लक्षणस्यातिव्याप्तेरिति च मन्यार्थः। इति सामान्यप्रकरणम् ॥५५॥

अत्र प्रस्तुततदन्ययोरन्यूनानतिरिक्ततया निबद्धं धवलत्वमेकात्मताहेतुः, अत एव पृथग्भावेन न तयोरुपलक्षणम् ।

यथा वा—

> वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।
> भृङ्गाः सहेलं यदि नापतिष्यन्कोऽवेदयिष्यन्नवचम्पकानि ॥ १६७ ॥
>
> (—)

अत्र निमित्तान्तरजनिताऽपि नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते, प्रतीतत्वाच्चस्य । प्रतीतेश्च बाधायोगात् ।

---

Here the whiteness of the matter under consideration and of its correlate, which is stated be *neither less nor more*, is the occasion for their becoming one. Hence they are not noticed to be distinct

Or as in

*Who could have detected the fresh campaka flowers that had come down to the surface of the cheeks, from above the tops of the ears of the women, whose complexion was like the caneskin, if the bees had not gaily alighted on them!* (167)

Here, even the apprehension of distinctness though produced by another circumstance is not capable of making null and void the identity that was felt earlier, since it was apprehended and since it is not possible to repudiate an apprehension

---

प्रदीपः—चन्द्रिकयोरेकात्मत्वप्रतीतिः । क्वचित्प्रस्तुताप्रस्तुतयोरुत्तरकालीनविवेकादिना तदुन्मयनम् । यथा—वेत्रेति । अत्र भृङ्गपातानन्तरं भेदप्रत्ययो न तु पूर्वमेव प्रतीतिः । ननु भृङ्गपातेन भेदप्रत्ययात्कथमेकात्मत्वप्रतीतिरिति चेत् अत्रो तथापि प्राथमिकाभेदप्र

---

उ० :—अलक्ष्यताम् । अभिसारिका —'कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका' इत्यमरः । पादाकुलकं छन्दः ।) तदुन्मयनम् । पूर्वमन्यजातैकात्म्यप्रत्ययनिवेदनम् । वेत्रेति । (वेत्रस्य त्वचा तुल्या रुक् यासाम् । गौरवर्णानामिति यावत् । कर्णाग्रतः कर्णाग्रात् । गण्डतले आगतानि ।) यदि भृङ्गाः सहेलं नापतिष्यन् तदा नवचम्पकानि कोऽवेदयिष्यदित्यन्वयः । (इन्द्रवज्रा छन्दः ।) अत्र गण्डचम्पकयोर्गौरत्वादभेदप्रतीतिः । अग्रे इति । एवं चाभेदानन्तरविशेषदर्शनजन्यभेदज्ञानमुत्तरकालिकं न पूर्वोत्पन्नतदभेदं निरसितुमुत्सहते । उत्पन्नस्य तस्य

(७९) विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।
एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥ ४९ ॥
अन्यत्प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।
तथैव करणं चेति विशेषस्त्रिविधः स्मृतः ॥ ५० ॥

प्रसिद्धाधारपरिहारेण यत् आधेयस्य विशिष्टा स्थितिरभिधीयते, स प्रथमो विशेषः । उदाहरणम्—

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिह कवयो न ते वन्द्याः ॥१६८॥ (—)

## 57. VIŚEṢA.

(1) The presence of the abiding object, in the absence of the recognised abode; (2) the presence at one and the same time, of one and the same thing, in many (abodes), in the same form; and (3) the achievement, in the same stroke, of a different thing that is impossible, by *one* who is performing some other act: this is 'Viśeṣa' in *three* varieties.

*Gloss* —Where the peculiar presence of an abiding object in the absence of its recognised abode happens to be described, that is the first variety of Viśeṣa. To illustrate:—

How, in this world, can one help paying homage to the poets, whose words possessed of no small number of merits delight the worlds, till the time of world dissolution, even when the poets have passed away unto heaven? (168)

प्रदीपः—त्ययस्यानिरासात् । तस्य भूतत्वात् । विनेति । स एष त्रिधा । तत्र प्रसिद्धमाधारं विनाऽऽधेयस्य विशिष्टावस्थितिर्यदभिधीयते स एको विशेषः । तत्र प्रसिद्धमित्यनेनेदमुक्तं यदत्र वास्तवमाधारत्वं न विवक्षितं किं तु कविप्रसिद्धिमात्रसिद्धमिति । अत एव तथैवोदाहरणम्—दिवमपीति । अत्र कविरूप प्रसिद्धमाधारं विना गिरां

उ०: —त्यर्थः । तत्फलीभूतगंडचपकयोरत्यन्तसमानगुणत्वप्रत्ययस्यातिरस्कार इति तात्पर्यम् । एतेनेदृशे विषये विशेषालंकारः पृथगित्यपास्तम् । इति सामान्यम् । ननु गिरामाकाश आधारः प्रसिद्धो न कविरत आह—किं त्विति । सिद्धमिति । सिद्धमपीत्यर्थः । (दिवमिति । आकल्पं आप्रलयम् ।) गुण-

एकमपि वस्तु यत् एकेनैव स्वभावेन युगपदनेकत्र वर्तते, स द्वितीयः ।
उदाहरणम्—

सा वसइ तुज्झ हिअए स च्चिअ अच्छीसु सा अ वअणेसु
अह्मारिसाण सुन्दर ओआसो णत्थि पावाणं ॥ १६९ ॥ (—)

यदपि किंचिद्रभसेन आरभमाणस्तेनैव यत्नेनाशक्यमपि कार्यान्तरमारभते, सोऽपरो विशेषः । उदाहरणम्—

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यं

---

That is the second variety where one and the same thing happens to be simultaneously in many places in one and the same form. To illustrate —

She dwells in your heart, the same in your eyes, and in your words, again, the same O beautiful one, how can there be room for wretches like ourselves? (169)

That is another variety of Viśeṣa where one setting about doing a thing vehemently, achieves in the same effort another result though it be impossible To illustrate —

In creating you whose beauty is sparkling and striking, whose fire

---

प्रदीपः—विशिष्टावस्थितिरुक्ता । एकस्य वस्तुनो युगपद्या एकात्मा अनेकवृत्तिः स द्वितीयो विशेषः । एकात्मेत्येकेन स्वभावेनेत्यर्थः । एतच्च विशेषणं 'एकत्रिधा वससि—' इत्यादिपर्यायस्य व्यावर्तनाय । युगपदिति पर्यायनिवारणाय । उदाहरणम्—सा वसइ इति । स्पष्टम् । रभसेनान्यत्कार्यं कुर्वत कर्तुर्यदशक्यस्यान्यस्यापि कार्यस्य तथैव करणं स तृतीयो विशेषः । अत्र तथैवेति तेनैव प्रकारेणेत्यर्थः । एतच्च 'धुनोति चासिं तनुते च कीर्तिम्' इत्यादिसमुच्चयव्यावर्तनाय । उदाहरणम्—स्फुर-

---

उ०:—गणा गिर । जगति वर्म (आर्या छन्द ।) विशिष्टावस्थितिः । निराधारैव । एवमाधारातरगत वेनाऽधेयवर्णनेऽप्ययम् । यथा 'गतेऽपि सूर्ये दीपस्थास्तमश्छिदति तत्करा' इति । (सेति ।) 'सा वसति तव हृदये सैवाक्ष्णो सैव वचनेषु । अस्मादृशीना सुदर अवकाशो नास्ति पापानाम् ॥' (आर्या छन्द ) स्फुरदिति । स्फुरत् प्रकाशमान अद्भुत रूप यस्य । उद्गत प्रतापाग्नि

---

प्रभाः—सेति । 'सा वसति तव हृदये सैवाक्ष्णो सा च वचनेषु । अस्मादृशीना सुन्दर अवकाशो नास्ति पापानाम् ॥' इति । रभसेनेति । एतदर्थकेनैव यत्नेन

विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥१७०॥(—)

यथा वा—

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥ १७१ ॥
(रघुवंश ८ ६७.)

सर्वत्र एवंविधविषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते, तां विना प्रायेणालंकारत्वायोगात् । अत एवोक्तम्—

सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते ।

---

of prowess is aglow, and whose learning is faultless, the Creator has created on earth, a new Cupid, a new sun, and a new Bṛhaspati, to be sure! (170)

Or as in

(You were to me) a wife, an adviser, a friend in confidence, a favourite pupil in the practice of fine arts Say, alas! what has not the unrelenting Death robbed me of when it has taken you away? (171)

Everywhere in matters like this, it is Atiśayokti that stands as the life, since, in its absence there could not be, generally speaking, the status of a figure Hence has it been said—

This ornate way of expression is found everywhere, an idea gets

---

**प्रदीपः**—**विति** । अत्रान्यस्य करणं शाब्दम् । क्वचित्तु व्यङ्ग्यम् । यथा—**गृहिणीति** । अत्र किं न मे हृतमिति सचिवादिसर्वहरणरूपकार्यकरणं व्यज्यते । नन्वाधारं विना वास्तवस्याधेयस्य व्यवस्थितिरनुपपन्नैव, एवमन्ययोरप्यनुपपत्तिरिति चेत्, न । अतिशयोक्तिमालम्ब्य तथाभिधानात् । सर्वत्रैवंविधे विषयेऽतिशयोक्तिरेव प्राणयिता । तां विना प्रायशोऽलंकारत्वाभावात् । अत एवाहु

---

**उ०**:—यस्य । अनवद्या शुद्धा विद्या यस्य । एतादृशं त्वां सृजता ब्रह्मणा नवं मनोभूः मदनः, सविता, बृहस्पतिश्च ससृजे उत्पादित इति सम्बन्धः । मालभारिणी छन्दः । **गृहिणीति** । (रघुकाव्ये अष्टमसर्गे इन्दुमतीं शोचतः अजराजस्योक्तिः । अपरवक्त्रं छन्दः ।) **अतिशयोक्तिमिति** । अतिशयेनोक्तिमित्यर्थः । आधुनिकोक्तेरपि वक्त्युक्तित्वोपचारेण हृदयादौ भावनादेव सत्त्वोपचारेण राज्ञस्ताद्रूप्येण मनोभूत्वाद्युपचारेण च तथोक्तिरिति भावः । न त्वतिशयोक्त्यलंकारोऽत्र

---

**प्रभा**:—कार्यद्वयं करिष्यामीत्यभिसंधिव्याप्तृत्वार्थम् । स्फुरदित्यादौ यथासंख्यसत्त्वेऽपि

यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना ॥ इति ।
( भामह's काव्यालङ्कार. २ ८५ )

(८०) स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत् ।
वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः ॥ ९१ ॥

यस्तु तिरस्कृतनिजरूपं केनापि समीपगतेन प्रगुणया स्वगुणसंपदो-

---

embellished with it A poet should strive after it What figure could there be in its absence?

## 58 TADGUNA

That, however, is said to be 'Tadguna' where a thing giving up its own attribute, due to the contact of something else that possesses an extremely brilliant attribute, assumes the attribute of the other

*Gloss*.—That ■ 'Tadguna where a thing whose own hue is obscured, assumes the likeness of something else which, as it comes close to the former,

---

प्रदीपः–सैषेति । विभाव्यत इति । विशिष्टो भाव्यते । चमत्कारविशेषविषय कियत इत्यर्थ । स्वमिति । अत्युत्कृष्टगुणस्याप्रस्तुतस्य योगात्तद्गुणसंपदुपरागात्स्वकीय रूप तिरस्कृत्य प्रस्तुत वस्तु यत्तदनुकारमेवासादयति स तद्गुणो भण्यते । तस्याप्रस्तुतस्य गुणोऽत्रेति व्युत्पत्ते । मीलिते वस्त्वन्तरेणाच्छादितस्य तस्यैव वस्तुन प्रतीति, अत्र स्वनाच्छादि-

---

उ० :–विवक्षित । तस्याग्रामभवात् । वक्रोक्तिः । वक्रतया गौणतयोक्ति । त्रिविध इत्युपलक्षणम् । दोषेऽपि गुण दृष्ट्वा तदभ्यर्थनायामप्ययम् । 'विपद सन्तु न शश्वधासु सकीर्त्यते हरि' । एतेनानुज्ञा नामात्र पृथगलङ्कार इत्यपास्तम् । एव गुणे दोष दृष्ट्वा तदभ्यर्थनायामप्ययम् । एव किंचित्सौन्दर्यं दृष्ट्वा दोषस्य गुणत्वकल्पन, गुणस्य वा दोषत्वकल्पनमपि स । यथा 'नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम् । शाखिनोऽन्ये विराजन्ते खण्ड्यन्ते चन्दनद्रुमा ॥' एतेनैतादृशविषये लेशनामा पृथगलङ्कार इत्यपास्तम् । एव 'सूच्यार्थसूचन मुद्रा प्रकृतार्थपरै पदै ।' यथा–नाटकादौ, इत्युक्तमुद्रायास्त्वलङ्कारत्वमेव न । प्रकृतोपस्कारकत्वाभावात् । यत्तु 'क्रमिक प्रकृतार्थाना न्यास रत्नावलीं विदु । चतुरास्य पतिर्लक्ष्म्या सर्वज्ञस्त्वं महीपते ॥' इति । तन्न । रूपकेणैवात्र चर्व्य-

---

प्रभा.–विशेषालङ्कारस्यैव चमत्कारे प्राधान्यात्तदुदाहरणत्वम् । यदाहुरिति । काव्यादर्शकृतो दण्ड्युपाध्याया इत्यर्थ । इति विशेषप्रकरणम् ॥ ५६ ॥ स्वमुत्सृज्य गुणमिति ।

परत्व तत्प्रतिभासमेव यत्समासादयति, स तद्गुणः ( तस्याप्रकृतस्य गुणोऽत्रास्तीति । )

उदाहरणम्—

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥ १७२ ॥

( शिशुपालवध ४ १४ )

अत्र रवितुरगापेक्षया गरुडाग्रजस्य, तदपेक्षया च हरिन्मणीनां प्रगुणवर्णता ।

---

tinges the former with its own rich attribute, on account of its possessing the attribute in a powerful form It is so called because the attribute of 'that' i e of the matter not under consideration is (assumed) in this case (by the matter under consideration)

To illustrate —

Where (i e. on the Raivataka) the coursers of the sun, whose hue was altered by Aruna, the elder brother of Garuda, with (his) splendour gleaming all around, were restored to their own hue by the jewels green like the shoots of the bamboo with (their) splendour gleaming all around ' (172)

Here the elder brother of Garuda, in comparison with the sun's horses, and in comparison with it, the green jewels possess the colour in an intense form

---

प्रदीपः—तत्स्वरूपस्यैव वस्त्वन्तरगुणापत्तिरिति ततो भेद । उदाहरणम्—विभिन्नेति । अत्र तद्गुणद्वयम् । रवितुरगापेक्षया गरुडाग्रजस्य तदपेक्षया च हरिन्मणीना प्रकृष्टगुणत्वात्तद्रूपतया प्रतीते । एतेन यत्केनचिद्व्याख्यातम् 'स्वगुणस्यागानन्तरं पुनस्तत्प्राप्तिस्तद्गुण ' इति, तदनादेयम् । तस्याप्रस्तुतस्य गुणोऽत्रास्तीति व्युत्पत्तिकथनग्रन्थविरोधात् । तत्र गुणद्वयकथनेन च तद्गुणद्वयव्युत्पादनात् । 'आत्ते सीमन्तरत्ने–' इत्यादौ

---

उ० —रूपोपस्कारो न तु क्रमकृतोऽपीति तस्यालंकारत्वाभावात् । इति विशेषः । उत्सृज्येति । व्याचष्टे—तिरस्कृत्येति । अभिभवे वस्तुत स्वगुणत्यागाभावादिति भाव । ततो भेद इति । मीलिते धर्मिण एवाग्रह, सामान्येऽपरित्यक्तगुणस्यैव अपृथक्प्रतिभास, इह तु गुणमात्रस्यैवाभिभव धर्मिण पृथग्

प्रभाः—स्पष्टम् । इति तद्गुण ॥५७॥ स्व (तद्) रूपाननुहारश्चेदिति । धवलोऽ-

(८९) तद्रूपाननुहारश्चेदस्य तत्स्यादतद्गुणः ।

यदि तु तदीय वर्णे सम्भवन्त्यामपि योग्यतायाम् इदं न्यूनगुणं न गृह्णीयात्, तदा भवेदतद्गुणो नाम । उदाहरणम्—

धवलोऽसि जह वि सुन्दर तह वि तुए मज्झ रञ्जिअं हिअअं ।
राअभरिए वि हिअए सुहअ णिहित्तो ण रत्तोऽसि ॥ १७३ ॥

( हाल's गाथासप्तशती ७ ६५ )

## 59. ATADGUṆA

If there is non assumption of the colour of it (i e the other), the figure is 'Atadguṇa'.

*Gloss* —If, however, this one (i.e matter not under consideration) of inferior attribute does not assume its (i e of the other of superior attribute) colour even though there was a propriety in it, the figure would be 'Atadguṇa' in name To illustrate —

White as you are, O graceful one, you have rendered my heart passionate (by Śleṣa red) Though enshrined in (my) heart filled with passion (by Śleṣa redness), O lovely one, you have not grown passionate (by Śleṣa red)! (173)

प्रदीपः—वक्ष्यमाणे सवरोदाहरणे तद्गुणत्वाभावप्रसंगाच्च । न हि तत्र त्यक्तस्य स्वकीयरूपस्यावाप्ति । तद्रूपेति । तदिति प्रकृतेत्यर्थः । अस्याप्रस्तुतस्य । अत्युज्ज्वलगुणयोगेऽपि यदि न्यूनगुणोऽप्रकृत प्रकृतस्य गुणं नानुहरति तदा अतद्गुण । उदाहरणम्— धवलोऽसीति । अत्रानिरक्ते मनसि धृतस्याप्यरक्तत्ववचनादुत्तरार्धमेवोदाहरणम् । तत्र प्रकृत हृदयम्, संबोध्यस्त्वप्रकृत । स्वहृदयवृत्तान्तनिवेदनस्यैव विवक्षितत्वात् । किं चात्र सूत्रे तत्पदेन प्रकृतमिवाप्रकृतमप्युच्यते । तथाऽस्येत्यनेनाप्रकृतमिव प्रकृतमप्युपस्थाप्यते ।

उ०ः—भासश्चेति भेद इत्यर्थ । भ्रान्तिमति स्मर्यमाणस्यारोपोऽत्र गृह्यमाणस्येति भेद. । भ्रान्तेर्निबद्धत्वाभावाच्च । विभिन्नेति । ( माघकाव्ये चतुर्थसर्गे रैवतकपर्वतवर्णनम् । मरकतप्रभेन अरुणेन विभिन्नवर्णा । रथ्या अश्वा । ) सुरत्या रथा इति सर्वान्वयि । वशवर्तिर कोकनदशाप्रभाग । ( उपजातिश्छन्द । ) अत्र द्वितीय तद्गुण पूर्वरूपमिति व्यवहरन्ति केचित् । 'पद्मरागायते नासामौक्तिकं तेऽधरत्विषा' इत्यप्युदाहरणम् । एव परस्तिरस्कारेन प्राक्सिद्धस्य-

प्रभाः—सीति । 'धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रञ्जितं हृदयम् ।

अत्रातिरक्तेनापि मनसा संयुक्तो न रक्ततामुपगत इत्यतद्गुणः । किं च तदिति अप्रकृतं अस्येति च प्रकृतमत्र निर्दिश्यते । तेन यत् अप्रकृतस्य रूपं प्रकृतेन कुतोऽपि निमित्तात् नानुविधीयते, सोऽतद्गुण इत्यपि प्रतिपत्तव्यम् । यथा—

> गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
> राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥ १७४ ॥

(—)

---

Here the figure is Atadguna since he, though connected with the extremely '*rakta*' mind, did not become '*rakta*'. Or again, '*tad*' shows the matter not under consideration '*asya*' the matter under consideration. Therefore, (the Definition) may be also taken to mean: That is 'Atadguna' where the colour of the matter not under consideration is not assumed by the matter under consideration, due to some circumstance. To illustrate —

The water of the Ganges is white, that of the Jumna collyrium like Your whiteness, O swan! continues to be the same (even) when you plunge in both Neither is it heightened nor lessened! (174)

---

प्रदीपः—सामान्यमुखप्रवृत्तत्वात् । तथा चाप्रस्तुतेन प्रस्तुतरूपाननुहरणवत्प्रस्तुतेनाप्रस्तुतरूपाननुहारोऽन्य प्रकारः । यथा—गांगमिति । अत्रान्यापदेशपक्षे राजहंसस्याप्राकरणिकत्व प्राकरणिकसत्पुरुषोपमानतयोपपादनीयम् । वाच्यमात्रविश्रान्तौ न काचिदनु-

---

उ० :—गुणोत्कर्षोऽपि तद्गुणविशेष एवेत्यपि बोध्यम् । यथा 'नीलोत्पलानि दधते कटाक्षैरतिनीलताम्' इति । एतेनात्रानुगुणनामा पृथगलङ्कार इत्यपास्तम् । इति तद्गुणः । अत्युज्ज्वलगुणयोगेऽपीति । पूर्वावस्थस्ययोगादित्यस्यानुषङ्गादिद लब्धम् । (धवलोऽसीति ।) 'धवलोऽसि यद्यपि सुंदर तथापि त्वया मम रंजितं हृदयम् । रागभरितेऽपि हृदये सुभग निहितो न रक्तोऽसि ॥' निहित इत्यनेन रञ्जनयोग्यता । (गाथा छन्दः ।) गांगमिति । यामुनं यमुनासंबंधि । अम्बु जलम् । चीयते वर्धते । अपचीयते अपक्षीयते । (रथोद्धता छन्दः ।) न काचिदनुपपत्तिरिति । गङ्गायमुनयोरप्रकृतयोर्गुणस्य वर्ण्यतया प्रकृतेन राजहंसेनाग्रहणादिति भावः । अम्बु विशेषोत्कर्षतर्भावयंति परे । इत्यतद्गुणः ।

---

प्रभा :—रागभरितेऽपि हृदये सुभग निहितो न रक्तोऽसि ॥' इति । इत्यतद्गुणप्रकरणम् ॥५८॥

**( ८२ ) यद्यथा साधितं केनाप्यपरेण तदन्यथा ॥ ५२ ॥**
**तथैव यद्विधीयेत स व्याघात इति स्मृतः ।**

येनोपायेन यत् एकेनोपकल्पितम्, तस्यान्येन जिगीषुतया तदुपायकमेव यत् अन्यथाकरणम्, स (साधितवस्तुव्याहतिहेतुत्वात्) व्याघातः । उदाहरणम्—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ १७५ ॥

( विद्धशालभञ्जिका. १.२. )

## 60 VYĀGHĀTA.

That is stated to be 'Vyāghāta' where whatever thing has been done by someone by whatever means, is undone by another by the same means.

*Gloss* —When what has been accomplished by one is upset by another *by the same means*, with a view to surpassing ( the former ), the figure is 'Vyāghāta,' so called because it is occasioned by the undoing of an accomplished thing. To illustrate —

I praise those women of charming eyes, the conquerors of Śiva, who restore to life, with but the glance, *Love that was burnt down with a glance!* ( 175 )

प्रदीपः—पपाति । यद्यथेति । यथा येनोपायेन तथा तेनोपायेनेत्यर्थः । तथा च केनापि कर्त्रा यद्वस्तु येनोपायेन यथा साधितं तदन्येन कर्त्रा जिगीषुतया तद्वस्तु तेनैवोपायेन ततोऽन्यथा चेत्साध्यते स व्याघात इत्यर्थः । प्रथमसाधितस्य वस्तुनो व्याहतिहेतुत्वात् । उदाहरणम्—दृशेति । अत्र दृशैव दाहो जीवनं च ।

उ०ः—तेनैवोपायेनेति । तज्जातीयेनैवेत्यर्थः । ( दृशेति । विद्धशालभञ्जिकाया प्रथमकि मंगलाचरणम् । विरूपाक्षः शिवः । ) अत्र दृशेति । तथा च यादृशैर्जात्ये कारणैर्जात्य प्रयोजनमित्यस्य व्याघात इति भावः । इदमुपलक्षणम् । अन्यकारणजेन प्रसिद्धात्तदन्यकार्यनिष्पादनेऽप्ययम् । 'यैर्जगत्प्रीयते हन्ति तैरेव कुसुमायुधः' इत्यत्र योगार्थसत्वात् । अत्र सर्वत्र कारणयोरेकत्वाप्यसमानापुरःसुरन्विरोध प्रातिस्विकरूपेण तत्तत्कार्यहेतुताविमर्शनान्निवर्तते इति बोध्यम् । यदा स्वाश्रयभेदेनैकस्यैव कारणस्य विरुद्धकार्यद्वयजननत्वं निष्पन्ने तत्र नायम् । व्याहतेर्विरोधगर्भाया अभावात् । यथा एकस्यैव पाणिद-

प्रभाः—यद्यथा साधितमिति । स्पष्टम् । इति व्याघातप्रकरणम् ॥५९॥ इति मुद्रालंकार-

## (८३) सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥ ५३ ॥

एतेषां समनन्तरमेवोक्तस्वरूपाणामलंकाराणां यथासंभवमन्योन्यनि-

### 61 SAMSRSTI

That is held to 'Samsṛṣṭi' when here they stand exclusive'y

*Gloss* —Where these i e. the figures whose natures have just been stated occur together, according to the occasion, one independent of the

**प्रदीपः**–एव शुद्धालकारा दर्शिता । अस्ति पुन कश्चिद्विषयो यत्राङ्गदादिसवद्ध- पद्मरागप्रमुखमणिमेलकवदुक्तानामलकाराणां सवलन एव चमत्कार । तस्मात्सोऽप्यलकार । तत्र द्वयी गति । परस्परमनपेक्ष्य व्यवस्थितेस्तदभावाच्च । तत्र प्रथमा संसृष्टिरुच्यते, द्वितीया तु सकर । स च त्रिधेति प्रकारचतुष्टय लक्षयति—**सेष्टेति** । भेद स्वरूपतो विषयतो वा परस्परमनपेक्षत्वम् । यद्वा विषयभेदे सति परस्परानपेक्षत्वम् । स्थितिर्व्यवस्थिति ।

**उ०** :—त्यस्य खलवृत्तिमदजनकत्व सुजनवृत्तिशान्तिजनकत्व च । एवमेकेन कर्त्रा येन कारणेन यत्कार्यं निष्पिपादयिषित तदन्येन कर्त्रा तेनैव कारणेन तद्विरुद्धकार्यं निष्पिपादयिषित चेत्तदाऽप्ययम् । यथा 'विमुञ्चसि यदि प्रिया प्रियतमेति मा मन्दिरे तदा सह नयस्व मा प्रणययन्त्रणायन्त्रित । अय प्रकृति- भीरुरित्यखिलभीतिरक्षाक्षमात्र जातु भुजमडलादपहितो बहिर्भीनय ॥' इति वन प्रति प्रस्थित राम प्रति जानक्या वाक्यमिदम् । यत्तु 'निरुक्तियोंगतो नाम्नामन्या- र्थत्वप्रकल्पनम् । इदृशैश्चरितैर्जाने सत्य दोषाकरो भवान् ॥' इति निरुक्तयऽ- कार । स श्लेषविशेष एव । यदपि सिद्धस्यैव विधानं विध्यलकार । 'पंचमो- दञ्चने काले कोकिल कोकिलोऽभवत् ।' अत्र द्वितीयकोकिलपद मधुरध्वनि- शालित्वं लक्षयत् सकलजनहृदयं व्यनक्ति । तदपि ध्वनिना गतार्थम् । क्वचि- द्गुणीभूतव्यग्येन वा । न हि सर्वोऽपि गुणीभूतव्यंग्यप्रपचोऽलकारगोष्पदेऽन्तर्भा- वयितु शक्यते वेधसाऽपि । एव सिद्धनिषेधानुकीर्तनमपि । एवमष्टौ प्रमाणालंकारा अन्यैर्दर्शिता । तत्र प्रत्यक्ष भाविकतया निरस्तम् । अन्यादृश तु न चमत्कारि । अनुमान तु साक्षादेवोक्तम् । अन्येषां तु नालकारत्वम् । तत्तत्प्रमाणजन्यप्रमि- तिविषयचमत्कृतचमत्काराभावात् । तत्तद्रूपेणोपस्कारकत्वाभावात् । उपमानं तु उपमयैव

**प्रभाः**– प्रकरणानि । विषय इति । काव्यविशेष इत्यर्थ । विषयत इति । विषयोऽ- लंकारप्रतिपादक आश्रयो वा शब्द । एकवाचकानुप्रवेशेन संकरे स्फुटोक्तादिस्थानो

रपेक्षतया यत् एकत्र (शब्दमात्रे एव, अर्थविषये एव, उभयत्रापि वा) अवस्थानम्, सा एकार्थसमवायस्वभावा संसृष्टिः ।

तत्र शब्दालंकारसंसृष्टिर्यथा—

वदनसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया ॥ १७६ ॥

(शिशुपालवध ६ १४)

---

other, (either in the word portion or sense portion or in both), the figure is 'Samsṛṣṭi,' so called because in essence it embodies a grouping (of figures) in (the frame of) the same idea

Of them, the Samsṛṣṭi of figures of sound as in —

Another lady whose eyes were unsteady owing to the hair (falling on them) sent forth a tumult of the tinkling girdle as she moved, with her beauty heightened by the bustle of the bees that were hovering in their craving for the fragrance of the mouth! (176)

---

प्रदीपः — एतेषां समनन्तरमेवोक्तानामलङ्काराणां भेदेन यत्स्थितिः सा संसृष्टिरिति । संकर-भेदात्तु नैवम् । अङ्गाङ्गिभावे स्फुटत सापेक्षत्वात् । अनिश्चये व्यवस्थितेरेवाभावात् । व्यवस्थिते विषयेन परापेक्षत्वाद्विषयाभेदाच्च । सेयं शब्दालंकारमात्रस्यार्थालंकारमात्रस्य शब्दार्थालंकारयोर्वेति त्रिप्रकारा । तत्राद्या यथा—वदनेति । अत्रानुप्रासयमकयोः परस्परमन-

---

उ०: — गतार्थमित्यापूरणम् । चमत्कारः । अधिकरणमनादर । ननु संसृष्टिर्न पृथक् यथा कामिनीशरीरे कुण्डलहारकेयूरकङ्कणादीनां संकलनोत्तिनया शोभाजनने न विशेषार्थ । समुदायिभ्य समुदायस्य भेदाभावात् । अन्यथा लोकेऽपि भेदापत्ति । तद्दृष्टान्त काव्ये गुणालङ्कारकल्पनादिति चेन्न । तत्र स्वाश्रयभिन्न-भिन्नाङ्गोपकाराधानपूर्वकं शरीरेऽन्वयिनि आर्थ शोभातिशय, इह त्वेकाङ्गो-पकारकतया संसृष्टिरेव । यथा लिम्पतीत्यादौ उत्प्रेक्षया तमस प्रसृतत्वे प्रति-पाद्योपमयाऽतिमात्रोत्पादनेन संसृष्टिव्यवहारात् । लोकेऽपि बहूनां कटकप्र-रणानामेकैकोत्कर्षस्य तत्र संसृष्टित्वस्यैवाभिमतात् । परस्परमपेक्ष्येति । परस्परनैरपेक्ष्येण छायामनिश्चितीनामित्यर्थ । एतेषामिति । चन्द्रमभिन्न-भिन्नम् । तेन द्वयोरपि नेयम् । भेदेनेति । अनेन संकरव्युदास । व्यवस्थित-भागपुरस्कारे—व्यवस्थितेरिति । यथा लिम्पतीत्यत्रोत्प्रेक्षोपमयोरिव ।

---

प्रभा: — एवानुप्रासयोर्विरोधेऽपि परस्पराक्षेपविरहादित्यनाक्रान्तत्वस्य दर्शनात्-वदनेति ।

अर्थालंकारसंसृष्टिस्तु—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ १७७॥ (मृच्छकटिक. १·३४.)

पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः । उत्तरत्र तु तथाविधे उपमोत्प्रेक्षे । शब्दार्थालंकारयोस्तु संसृष्टिः—

सो णत्थि एत्थ गामे जो एअं महमहन्तलाअण्णं ।
तरुणाण हिअअलूडिं परिसक्कन्तिं णिवारेइ ॥ १७८ ॥ (—)

---

That of figures of sense as in—
(See St. 26) (177)

In the former instance, Yamaka and Anuprāsa mutually independent bring about a Saṃsṛṣṭi. In the latter, however, Upamā and Utprekṣā just like them (i. e. mutually independent) (bring about Saṃsṛṣṭi.) As for the Saṃsṛṣṭi of figures of sound and sense, it is as in

Such a person is not to be found in this place (गाम) as would restrain this (lady) gadding about, whose beauty is being made much of and who is the robber of the hearts of youths! (178)

---

प्रदीपः—पेक्ष्य व्यवस्थितिः । द्वितीया यथा—लिम्पतीति । अत्रोत्प्रेक्षोपमे परस्परमनपेक्ष्य व्यवस्थिते संसृष्टिं प्रयोजयत । अन्त्या यथा—सो णत्थीति । अत्रानुप्रासरूपकै शब्दार्थालङ्कारौ । नन्वनयोः शब्दार्थरूपाश्रयभेदेन कथमेकार्थसमवायलक्षणा संसृष्टिरिति चेत्,

---

उ०:—उपमा असत्पुरुषसेवाविषया । विषयाभेदादिति । अनिश्चयेति शेषः । वदनेति । (माघकाव्ये षष्ठसर्गे वत्स्याश्विनायिकाया वर्णनम् ।) मुखसौगंध्यलोभेन भ्रमता भृंगाणां यः सभ्रमो भ्रमणं तेन पूर्णशोभया चूर्णकुंतलैश्चलदृशा मधुरो मेखलाशब्दो विदध इत्यर्थः । (द्रुतविलंबितं वृत्तम् ।) लिंपतीवेति । पूर्वार्द्धे उत्प्रेक्षा उत्तरार्धे उपमा । (सो णत्थीति ।) 'स नास्त्यत्र ग्रामे य एनां महमहल्लावण्याम् । तरुणानां हृदयलुंटाकीं परिष्वक्रतीं निवारयति ॥' महमहल्लावण्याम् नवनवीभवल्लावण्याम् । परिष्वक्रतीम् स्वानुरूपरमणाभावादितस्ततो गच्छंतीम् । (गाथा छन्दः ।) अत्र पूर्वार्धे छेकानुप्रासः । उ-

---

प्रभा:—एवं च तत्र विषयभेदाभावान्नानिर्व्याप्तिरिति भाव । सो णत्थीति । 'स नास्त्यत्र ग्रामे य एतां स्फुरल्लावण्याम् । तरुणानां हृदयलुण्टनं परिसर्पन्तीं निवारयति ॥' अत्र पूर्वार्धेऽनुप्रास उत्तरार्धे हृदयलुण्टनमिति रूपकम् । इति संसृष्टिः ॥ १० ॥ चारु-

अत्रानुप्रासो रूपकं चान्योन्यानपेक्षे। संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात्।

**( ८४ ) अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु संकरः।**

एते एव यदात्मनि अनासादितस्वतन्त्रभावाः परस्परं अनुग्राह्यानुग्राहकतां दधति, स (एषां संकीर्यमाणस्वरूपत्वात्) सङ्करः। उदाहरणम्—

आत्ते सीमन्तरत्ने मरकतिनि हृते हैमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते।

Here the Anuprasa and the Rūpaka are mutually independent Their contact is due to their being embodied in one and the same sentence or verse

**62 SAṄKARA**

But 'Sankara consists in their being related as the Principal and Subsidiary, when they ( i e figures ) do not rest in themselves

*Gloss.*—When these very (figures), not having attained an independent status, are mutually related as the Principal and Subservient, that is the figure 'Sankara so called *because their forms are intermingled (therein) To illustrate* —

When their crest jewel of emerald is appropriated and the golden ear ring removed, when the girdle is pilfered and the pair of jewelled anklets suddenly seized, the Śabaras do not so much as remove the pearl

प्रदीपः—एकवाक्ये छन्दसि वा समवेतत्वात्। अविश्रान्तीति। तेषामेवालङ्काराणां चारुत्वार्थं स्वरूपनिष्पत्तये वाऽन्यापेक्षणादात्मन्यनासादितस्वतन्त्रभावानां परस्परमनुग्राह्यानुग्राहकत्वं स तु सङ्करः। संकीर्यमाणस्वरूपत्वात्। उदाहरणम्—आत्ते इति। अत्र

उ०:—स्तनार्थे हृदयस्थयष्टीमिति रूपकम्। एकवाक्येति। 'क्रिया वा कारकान्विता' इति उक्तेरर्थावच्छिन्नशब्दस्यैव वाक्यत्वम्। तथा चैकं वाक्यमिति प्रतीतिसिद्धमेकत्वमादाय तयोरेकार्थसमवाय इत्यर्थः। वाक्यभेदेऽप्याह—छंदसि वेति। चतुष्पादात्मके इत्यर्थः। अर्थालङ्काराणामप्यत्र परम्परया स्थितिः। समवेतत्वम्। सम्बद्धत्वम्। आत्मनि। आत्ममात्रे। परस्परमिति। ए-

प्रभा:—स्वार्थमिति। चमत्कृतिजनकत्व ह्युपमादेरलंकारत्वम्। अतो विशेषणांशे

शोण विम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन्गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥१७९॥ (—)

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतम्, तदाश्रयेण च तद्गुणः सप्रभूतचमत्कृतिनिमित्तमित्यनयोरङ्गाङ्गिभावः। यथा वा—

जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः।

---

necklace tinged red by the shade of the Bimba-like lips of the deer-eyed women of your foes, that were in flight in the forest, thinking them (i e pearl necklaces), O king, to be strings of Guñja berries! (179)

Here, the Bhrantimān manifests itself depending on the Tadguna, and Tadguna becomes the source of great charm to men of taste in so far as the Bhrantiman is based on it Thus they are related as the Subsidiary and Principal Or as in

With splendour like matted hair, holding with the ray (by Śleṣa hand) the rosary of the spot, and white (by Śleṣa pure) due to the loss of redness (by Śleṣa due to dispassionateness) preferred, it seems, owing to the mishap to the separated lovers (by Śleṣa owing to the

---

प्रदीपः—बिम्बौष्ठकान्त्या शोणमिति तद्गुणमपेक्ष्य गुञ्जाफलाना स्रज इति भ्रान्तिमानात्मान लभते। तद्गुणोऽप्यत्र न स्वातन्त्र्येण चमत्कारविशेष करोति किं वा भ्रान्तिमदपेक्षयैवेति परस्परमनुग्राह्यानुग्राहकभाव। अत्र द्वयोरलङ्कारयो सङ्कर। बहूनामपि यथा—जटेति। अत्र जटाभाभिर्भाभिरिति पितृवन इव व्योम्नीति चोपमा। कलङ्काक्षवलयेति तारापरिकरकपालेनि च रूपकम्। वियोगिव्यापत्तेरित्युत्प्रेक्षा। वैराग्यविशद इति श्लेष। चत्वारोऽप्येते परस्परमङ्गाङ्गिभावेन प्रतीयन्ते। तत्रोत्प्रेक्षा श्लेषाङ्गम्। तद्वशादेव वैराग्यविशद इत्यत्र द्वितीयार्थानुसधानात्।

---

उ०:—कस्यचिदनुग्राह्यत्व कस्यचिदनुग्राहकत्वमित्यर्थ। योगार्थमाह—संकीर्यमाणेति। (आत्ते इति।) आत्ते गृहीते सीमतरत्ने, प्रथम तत्र दृष्टिपातात्। मरकतिनीत्यनेन झटिति विवेचनम्। शुद्धहेम्ना देहकान्त्याऽभिभवसम्भवात्। ताटकात्र वर्णालङ्कार। लूताया छिन्नायाम्। मणितुलाकोटियुग्मे नूपुरे। इत्वरीणा गतिशीलानाम्। बिम्बौष्ठकान्त्येति। मुखस्य नम्रत्वात्। हार मु-

---

प्रभाः—विशेष्यादो वान्यापेक्षेति भाव। सङ्कीर्यमाणेति। परस्परसापेक्षेत्यर्थ।

परिप्रेङ्खत्तारापरिकरकपालाङ्किततले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ॥ १८० ॥ (—)

उपमा रूपकम् उत्प्रेक्षा श्लेषश्चेति चत्वारोऽत्र पूर्ववत् अङ्गाङ्गितया प्रतीयन्ते । कलङ्क एवाक्षवलयमिति रूपकपरिग्रहे करधृतत्वमेव साधकप्रमाणतां प्रतिपद्यते । अस्य हि रूपकत्वे तिरोहितकलङ्करूपं अक्षवलयमेव मुख्यतयाऽवगम्यते । तस्यैव च करग्रहणयोग्यतायां सा-

perishability of the fleeting objects of sense—विवेकि ), the moon who is white like ashes (otherwise white with ashes) is tramping in the sky as on the burial ground whose surface is dotted with the skulls in the shape of the host of stars that are hanging about! (180)

Here, the four viz Upamā, Rūpaka, Utprekṣā and Śleṣa are, as above, apprehended as being related as the Subservient and the Principal The attribute of being held in the hand happens to be the probative ground favouring the assumption of the Rūpaka Rosary in the form of the spot For, if this be a Rūpaka, Rosary only is felt as being prominent, the aspect of spot being rendered obscure And that is universally

प्रदीपः – श्लेषश्च रूपकोपमयोरङ्गम् । तद्वशादवगतनिर्वेदमहिम्नैव जटाया अक्षवलयधारणस्य च संगते । तारापरिकरकपालेति रूपकं पितृवन इवेत्युपमाया अङ्गम् । तद्बीजं हि सादृश्यम् । न च श्मशाने व्योम्ना सह तत्साहजिकं किं तु रूपितकपालाश्रयत्वेनैवेति । सर्वत्र चात्रानाचारुत्वार्थमङ्गपेक्षा पूर्ववदूहनीया । सर्वथा चैषां पार्यन्तिकचारुत्वहेतुरङ्गिभूता च समासोक्ति । चन्द्रगत येन महाव्रतिवृत्तान्तप्रतीते । सा च व्यङ्ग्येति प्रकारशङ्का नोक्तेत्यवधेयम् । ननु कलङ्काक्षवलयेति कथमेकान्ततो रूपकमुच्यते । उपमाया अपि सम्भवेन सन्देहसंकरौचित्यादिति चेत्, न । रूपकपरिग्रहे करधृतत्वमेव साधकं प्रमाणमत संदेहस्याभावात् । कथमस्य साधकत्वमिति चेत्, इत्थम्—करधृतत्वरूपविशेषणस्याक्षवलय एव सार्वजनीनी प्रसिद्धि, न तु कलङ्के । अत प्राधान्येनाक्षवलयप्रतीतिरेवोद्देश्या । सा च रूपकपरिग्रहेणैव सम्भवति । तत्र तिरोहितकलङ्करूपमक्षवलयत्वमेव मुख्यतयावगम्यते । मन्वेवमपि

उ०: – त्वानिर्मितम् । ( स्रग्धरा छन्द ) आत्मानं लभते इति । अधरसान्निध्यासादितारुण्यविशिष्टमुक्ताफलाना दर्शनेन गुञ्जास्मरणाद् भ्रान्तिर्भवतीति भाव । भ्रान्तिमदपेक्षयेति । तन्निर्वाहकत्वेनेति भाव । एतच्च प्रकृताभिप्रायेण । अन्यत्र तस्य स्वातन्त्र्येणापि चमत्कारित्वात् । जटेति । जटातुल्याभि पिङ्गाभि

प्रभा: – एकान्तत इति । निश्चित इत्यर्थ । अमुख्योपचार एवेति । गुणे त्वन्याय्यक-

वंत्रिकी प्रसिद्धिः । श्लेषच्छायया तु कलङ्कस्य करधारणम् असदेव प्रत्यासत्त्या उपचर्य योज्यते । शशाङ्केन केवलं कलङ्कस्य मूर्त्यैव उद्वहनात् ।

कलङ्कोऽक्षवलयमिवेति तु उपमायां कलङ्कस्य उत्कटतया प्रतिपत्तिः । न चास्य करधृतत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात् ।

एवरूपश्च सकरः शब्दालंकारयोरपि परिदृश्यते । यथा—

accepted as being fit for being held in the hand The spot being held in the *kara* though unreal, is made figuratively possible owing to proximity, by the shade of Ślesa Since, the moon holds the spot merely on its body

If, on the other hand, it were an Upamā—the Spot like the rosary—the spot would be apprehended as being prominent And the attribute of being held in the *kara* does not pertain to it in fact Thus in the matter of the prominent one itself a figurative mode shall have to be resorted to

Sankara like this could be seen even of two figures of sound To illustrate —

प्रदीपः—विशेषणमिदमसम्यगेव । चन्द्रपक्षे किरणेन कलङ्कधारणस्याभावात् । मूर्त्यैव तेन तद्धारणादिति चेत्, न । श्लेषच्छायया हि कलङ्कस्याप्रधानस्य करधारणमसदेव प्रत्यासत्त्योपचर्य योज्यते । तथा सत्युपमापरिग्रहे को दोष इति चेत्, कलङ्कोऽक्षवलयमिवेत्युपमाया कलङ्कस्य प्रधानत्वेन प्रतीतिः । न चास्य करधृतत्वं मुख्यतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात् । मुख्यविषयोपचारापेक्षया चामुख्योपचार एव श्रेयानिति रूपकमेवाश्रीयते । शब्दालंकारयोरप्येष सकरो दृश्यत इति प्राह । उदाहरन्ति च—

उ०ः—कान्तिभिरुपलक्षितः । करो हस्तः किरणश्च तेन धृतः कलङ्क एव वलयाकाररुद्राक्षमाला येन । विरहिपीडयेवाङ्गीकृतं यद्वैराग्यं विगतरक्तता विषयव्यावृत्तिश्च । वियोक्तुं शीलं येषां ते वियोगिनो विषयास्तेषां व्यापत्तिर्नाशश्च । विशदः पाण्डुरः शुद्धचित्तश्च । उदयकालिकलौहित्यापगमात्तयात्वम् । प्रेङ्खत्ता-रासमूहरूपकपालविहितस्वरूपे । भस्मना पाण्डुर्भस्मेव पाण्डुश्च । पितृवनं श्मशानम् । ( शिखरिणी छन्दः । ) वृत्तान्तप्रतीतेरिति । तद्वृत्तान्ताध्यारोप एव धृतकलङ्काक्षवलयत्वान्वयादिति भावः । शशिवर्णनस्यैव प्रकृतत्वात्तत्रैव विश्रान्तिः । प्राधान्येनेति । कलङ्कत्वाच्छादनेनेत्यर्थः । मुख्यतयेति । रूपके कल्पना-द्रूप्यस्योद्भूततया प्रतीतेरिति भावः । श्लेषच्छाययेति । करपदश्लेषेण किरणे पाण्यभेदाध्यवसायादित्यर्थः । उपचर्य प्रत्यासन्नतया इत्यन्वयः । सादृश्यनैव-

राजति तटीयमभिहत-
दानव-रासाऽतिपाति-साराव-नदा ।
गजता च यूथमविरत-
दान-वरा साऽतिपाति सारा वनदा ॥ १८१ ॥

(हरविजय. ५. १३७.)

अत्र यमकमनुलोमप्रतिलोमश्च चित्रभेदः पादद्वयगते परस्परापेक्षे ।

---

Here looks splendid the slope that has got a noisy, rapidly flowing river that (i e river) has beaten the revels of the demons, while, supreme with unceasing ichor, the powerful (सारा) group of bull-elephants, felling the trees, sedulously protects the herd! (181)

Here, Yamaka and Anulom-Pratiloma, varieties of the Striking, are mutually dependent

---

प्रदीपः–राजतीति । तत्र यद्यपि यमकानुलोमविलोमचित्रभेदयोर्न स्फुटं परस्परापेक्षित्वं, तथापि यमकनिर्वाहप्रवृत्तस्य कवेः पृथक्प्रयत्ननिर्वृत्ततयानुलोमविलोमस्योत्पत्तौ यमकापेक्षा, यमकस्य तु चारुताऽतिशये तदपेक्षता । तदाश्रयेणातिसुन्दरतयाऽतिशयेन विदग्धमनोऽनुरञ्जकत्वादिति तेषामाशयः । वस्तुतस्तु यमकनिर्वाह एव कविप्रवृत्तिरिति निश्चायकं नास्ति । अस्तु वा तथा । तथापि यमकं न चित्रहेतुः । किं तु तत्प्रयत्नः । तस्मादेकाश्रया-

---

उ०ः–मूलकलक्षणापूर्णेनमक्षनख्यतादात्म्यप्राप्त्या । तथा सति । उपमायामप्यसदेव मरधृतत्वमुपचर्यतामिति भावः । प्रधानत्वेनेति । इतरान्रूपानाच्छादित्वे सति विशेष्यतयेत्यर्थः । मुख्येति । विशेष्यभूतेत्यर्थः । अमुख्यम् । विशेषणम् । उपमा पूर्वपदार्थप्रधाना रूपकमुत्तरपदार्थप्रधानमिति भावः । वस्तुतस्तु रूपके अक्षनख्यतादात्म्यापन्ने कल्के पाणभिन्नत्वेनाध्यवसितकिरणधृतत्वान्वययोग्यताऽस्ति उपमायां तु तत्सदृशत्वेन प्रतीतिविषये कल्कत्वविशिष्टे पाण्यभिन्नत्वेनाध्यवसितेनापि किरणेन धृतत्वान्वययोग्यता नास्तीति रूपकमेवात्र । एवं च रूपके पूर्वपदार्थप्राधान्येऽपि न दोष इत्यवधेयम् । राजतीति । (हरविजयकाव्ये पञ्चमसर्गे पर्वतवर्णनम् ।) इयं तटी राजति । कीदृशी । अभिहतो दानवानां रासः क्रीडा शब्दो वा यस्यां सा । अतिपाती शीघ्रगामी साराव

---

प्रभाः–त्वनेति न्यायादिति भावः । तदाश्रयेणेति । अनुलोमविलोमाश्रयेणेत्यर्थः । न चित्रहेतुरिति । नानुलोमविलोमरूपशब्दालंकारहेतुरित्यर्थः । किं त्विति । यमकप्रय-

## (८९) एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥ ५४ ॥

द्वयोर्बहूनां वा अलङ्काराणामेकत्र समावेशेऽपि विरोधात् न यत्र युगपदवस्थानम्, न चैकतरस्य परिग्रहे साधकम्, तदितरस्य वा परिहारे बाधकमस्ति, येनैकतर एव परिगृह्येत, स निश्चयाभावरूपो द्वितीयः सङ्करः। समुच्चयेन सङ्करस्यैवाक्षेपात्। उदाहरणम्—

And (Sankara occurs) where there is absence of determination, owing to the lack of a favourable or unfavourable circumstance for the assumption of one (figure)

*Gloss* —Where, though two or more figures are (felt to be) present in one place, they could not be so present *simultaneously* owing to conflict, and where neither a circumstance favourable for the acceptance of one of the two, nor another unfavourable, tending to leave out the other (figure) so that only one could be accepted is present, it is Sankara of the second variety, which consists in the absence of determination. The copulative (*ca*) suggests that Sankara itself (is being continued in this definition) To illustrate —

प्रदीपः—तुल्यप्रवेशेनैवायं सङ्करो न त्वनुग्राह्यानुग्राहकतयेत्येव युक्तम्। एकस्य चेति। न्याय साधकप्रमाणसत्ता। दोष प्रतिकूलसत्ता। ग्रहो व्यवस्थितिः। यत्र द्वयोर्बहूना वाऽलङ्काराणामेकत्र योग्यत्वेऽपि विरोधानैकदा व्यवस्थितिः, न चैकतरपरिग्रहे साधकं तदितरपरिग्रहे बाधकं येन तदेव व्यवतिष्ठेत, सोऽप्यनिश्चयरूपो द्वितीयः सङ्करः। सूत्रस्थचकारेण सङ्करस्यैवाक्षेपात्। उदाहरणम्—जहेति। अत्र किं समुद्रे प्रस्तुते स्निग्धविशे-

उ० :—सशब्दो नदो यस्यां सा। गजता गजयूथं अतिशयेन पाति रक्षति। किंभूता। अविरतेन दानेन मदेन वरा श्रेष्ठा। सारा स्थिरा। वनदा वनखण्डिका। (आर्यागीतिश्छन्दः।) चित्रभेदः। चित्रनामालङ्कारः। स चात्रानुलोमप्रतिलोमरूपः। तेषामाश्रय इति। एवं चानुग्राह्यानुग्राहकभावः इति भावः। एतेन शब्दालङ्कारयोरयं नास्ति शब्दस्वरूपतयोपकार्योपकारकत्वाभावात्, किं तु संसृष्टिरेवेत्यलङ्कारसर्वस्वोक्तमपास्तम्। तस्मादेकेति। मिथश्चारुतातिशये परस्परापेक्षणादनुग्राह्यानुग्राहकभावोऽपीत्यन्ये। एकस्य एकतरस्य।

प्रभा :—न्नादि तदुत्पत्तिरिति नोत्पत्तौ यमकापेक्षेत्यर्थः। 'साधकप्रमाणसत्ता' इति पाठः। 'साधकप्रमाणता' इत्यपपाठ एव। एवं 'प्रतिकूलसत्ता' इत्येव पाठ इति ज्ञेयम्।

जइ गहिरो जइ रअणणिब्भरो जइ अ णिम्मलच्छाओ ।
तह किं विहिणा एसो सुरसवाणीओ जलणिही ण किओ ॥ १८२ ॥

अत्र समुद्रे प्रस्तुते (विशेषणसाम्यादप्रस्तुतार्थप्रतीतेः) किमसौ समासोक्तिः, किं (अब्धेरप्रस्तुतस्य मुखेन कस्यापि तत्समगुणतया प्रस्तुतस्य प्रतीतेः) इयमप्रस्तुतप्रशंसा इति संदेहः । यथा वा—

नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति ।
अधुनाऽपि निरुद्धाशमविशीर्णमिदं तमः ॥ १८३ ॥ (—)

---

As it is deep, as it abounds in jewels, and as it is clear in hue, why did not the Creator likewise make the ocean sweet watered? (182)

Here arises the doubt Is it Samāsokti if there is the suggestion of the matter not under consideration, due to similarity of attributes, the matter under consideration being the sea or is this an Aprastutapraśaṁsā, if there is the suggestion of some matter under consideration, through the sea, the matter not under consideration owing to similarity with the latter's attributes?

*Or as in —*

Here becomes clear the moon orb, giving delight to the eyes Even now the darkness that has enveloped the quarters remains undispelled! (183)

---

प्रदीपः – पद्यमहिम्नाऽप्रस्तुतपुरुषविशेषप्रतीतेरियं समासोक्तिः, किं वाऽब्धेरप्रस्तुतादप्रस्तुतस्य पुरुषविशेषस्य तत्समानगुणतया प्रतिपत्तेरप्रस्तुतप्रशंसेति संदेहः । एकस्यैकदा प्रस्तुताप्रस्तुतोभयरूपत्वाभावादनयोर्युगपदसंभवात्, न्यायदोषयोरसंभवाच्च । अयं द्वयोः संकरः । यद्वा यथा—नयनेति । अत्र किं कामोद्दीपकः काले वर्णनं इति प्रस्तुतवर्णनानिबन्धनात्पर्यायोक्तम् । किं वा एतद्बिम्बस्य बिम्बसामग्र्यतया वदनस्येन्दुबिम्बेनाध्यवसानादतिशयोक्तिः । किं

अत्र किं (कामस्योद्दीपकः कालो वर्तते इति भङ्ग्यन्तरेणाभिधानात्) पर्यायोक्तम्, उत (वदनस्येन्दुबिम्बतया अध्यवसानात्) अतिशयोक्तिः, किं वा (एतदिति वक्त्रं निर्दिश्य तद्रूपारोपवशात्) रूपकम्, अथवा (तयोः समुच्चयविवक्षायां) दीपकम्, अथवा तुल्ययोगिता, किमु (प्रदोषसमये विशेषणसाम्यादाननस्यावगतौ) समासोक्तिः, आहोस्वित् (मुखनैर्मल्यप्रस्तावात्) अप्रस्तुतप्रशंसा इति बहूनां संदेहादयमेव संकरः।

यत्र तु न्यायदोषयोरन्यतरस्यावतारः, तत्र एकतरस्य निश्चयात् न

Is this Paryāyokta if the idea "This time stimulates passion" is expressed in a different mode? Or, is it Atiśayokti owing to supersession of the 'face' by the idea of its being the moon-orb? Or, is it Rūpaka if mentioning the face with '*etad*' there is superimposed on it the nature of that (i e moon-orb)? Or is it Dīpaka supposing that both are sought to be stated collectively? Or, is it Tulyayogitā? Or is it Samāsokti owing to the 'Face' being suggested by the similarity of attributes in eventide? Or, is it Aprastutapraśaṁsā, the matter under consideration being the clearness of the face? Owing to the doubt of many figures like these, it is this very Sankara

Where, however, either a favourable or an unfavourable circumstance presents itself, there can be no doubt since there is the determi

**प्रदीपः**—वा एतदिति वक्त्रं निर्दिश्येन्दुबिम्बरूपणवशाद्रूपकम्। अथ प्रसीदतीत्यस्योभयत्रान्वयविवक्षायामेकतरस्य प्रकृतत्वाद्दीपकम्। द्वयोरपि प्रकृतत्वेऽप्रकृतत्वे वा तुल्ययोगिता वा। किं वा प्रदोषवर्णने चन्द्रबिम्बस्य प्रकृतत्वे विशेषणसाम्यादाननप्रतीतौ समासोक्तिः। आहोस्विन्मुखनैर्मल्यवर्णनप्रस्तावाच्चन्द्रस्याप्रस्तुतत्वेनाप्रस्तुतप्रशंसेति संदेहः। न्यायदोषयोरभावात्। यत्र तु तयोरन्यतरस्यावतारस्तत्रैकतरनिश्चयान्न संशयस्तत्र 'सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः।' इत्यत्र मुख्यत्वेन प्रतीयमाना हसितद्युतिर्वक्त्र एवानुकूल्यं भजते। तत्रैव मुख्यतस्तत्सम्भवात्। वक्त्रस्य प्राधान्येन स्थितिरुपमायामेवेत्युपमा साधिका। शशिनि न चानुकूला। मुख्यतस्तत्र हासद्युतेरभावात्। नापि प्रतिकूला। गौणत्वे-

**उ०**:—मोहश्च। **अतिशयोक्तिः**। निगीर्याध्यवसानरूपा। **रूपकमिति**। निगरणाभावादित्यर्थः। **दीपकमिति**। चन्द्रोऽपि प्रसीदति एतन्मुखं च प्रसीदतीत्यन्वयादिति भावः। **तुल्ययोगितेति**। द्वयोरौपम्यस्याक्षेपलभ्यत्वात्। **मुख्यत्वेनेति**। ज्योत्स्नासादृश्याश्रयत्वेनेत्यर्थः। **वक्त्रे एवेति**। इतररूपणाच्छादिते वक्त्रे इत्यर्थः। **प्राधान्येन**। इतरानाच्छादितत्वेन। **शशिनि त्विति**। श-

संशयः । न्यायश्च साधकत्वम् (अनुकूलता) दोषोऽपि बाधकत्वं (प्रतिकूलता)। तत्र

सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः ।'

इत्यत्र मुख्यतया अवगम्यमाना हासद्युतिर्वक्त्रे एवानुकूल्यं भजते इत्युपमायाः साधकम्, शशिनि तु न तथा प्रतिकूलेति रूपकं प्रति तस्या अबाधकता ।

'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः।' (रत्नावली. १, २१.)

इत्यत्रापरत्वमिन्दोरनुगुणं न तु वक्त्रस्य प्रतिकूलमिति रूपकस्य साधकतां प्रतिपद्यते, न तूपमाया बाधकताम् ।

---

nation of one of the two (figures). A favourable circumstance is one that proves or is agreeable to (the particular figure). An unfavourable circumstance is one that disproves or is disagreeable to (the particular figure). Thus, in

"The brilliance of *smile* like moon light heightens the beauty of the *face moon*."

'The brilliance of smile' which is being felt as the prominent thing is agreeable to the 'face ' So it is favourable to Upamā; but then it is not so disagreeable to the 'moon,' and, therefore, it is not unfavourable to the Rūpaka.

In

"Since, when there was your face-moon, this *other* moon has arisen!"

the attribute 'other' is agreeable to 'the moon;' but not disagreeable to 'the face.' Therefore, it is favourable to the Rūpaka, but not unfavourable to the Upamā.

---

प्रदीपः—नानुकूलतेति न रूपकं प्रति साधिका बाधिका वा । 'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः' इत्यत्रापरत्वमिन्दावनुगुणम् । मुखरूपेन्दौ सति शितांशुरपरोऽपीन्दुरिति प्रतीतिः । तथाप्रतीतिश्च रूपकेण विना नेति रूपकं प्रति साधकतां प्रतिपद्यते । न पुनर्वक्त्रस्य

---

उ०:—शिताद्यात्म्येन प्रतीतेरित्यर्थः । रूपकम् । यस्त्वनेन शशीत्याकारकम् । तावतापि न सन्देहे विराम (सन्देहसंकरः ?) । द्युतिरिदस्य सौभाग्यमनुत्पाद्य-स्वगतौचित्यादिति भावः । ज्योत्स्ना यथा शशिनः सौभाग्यं वितनोति एव हासद्युतिः शशिसदृशवक्त्रसौभाग्यं वितनोतीति वाक्यार्थः । इन्दाविति ।

---

प्रभा:—अर्थसाधनं इतः ॥ 'हा' यदपरम् । न पुनर्वक्त्रस्य प्रतिकूलमित्यत्रापरत्वमित्य-

'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।' (—)

इत्यत्र पुनरालिङ्गनमुपमां निरस्यति, सदृशं प्रति परप्रेयसीप्रयुक्तस्यालिङ्गनस्यासंभवात् ।

'पादाम्बुजं भवतु नो विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः । (पद्यस्तवी ३१)

इत्यत्र मञ्जीरशिञ्जितम् अम्बुजे प्रतिकूलम् असंभवादिति रूपकस्य बाधकम्, न तु पादेऽनुकूलमित्युपमायाः साधकमभिधीयते । विध्युप-

In
"Lakṣmi closely *embraces* you, the King-Narayana,'
however, '*embraces* leaves out Upamā, since it is unlikely that there could be an embrace of one who is similar (to her husband) on the part of the beloved of another

"May the foot lotus of Ambikā, which is charming with the sweet tinkle of the anklets, lead to our success —

Here 'the tinkle of the anklets' is disagreeable to the lotus owing to improbability so it is described as unfavourable to the Rūpaka, but not as favourable to the Upama owing to its being agreeable to 'the

प्रदीपः – प्रतिकूलम् । इन्दुसमानगुणे वक्त्रे सति विमपर इन्दुरुदित इति प्रतीतावन्ना संगत्यभावात् । अतो नोपमाबाधकम् । 'राजनारायण लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।' इत्यत्रालिङ्गनमुपमाया बाधकम् । स्वामिसदृश प्रति प्रेयसीप्रयुक्तस्यालिङ्गनस्यानौचित्यात् । न तु रूपके साधकम् । 'पादाम्बुज भवतु वो विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकाया ।' इत्यत्र मञ्जीरशिञ्जितमम्बुजे प्रतिकूलम् । तत्रासंभवात् । अतो रूपके बाधकम् । नन्वेतदुपमासाधकमपि भवति । पादेऽनुकूलत्वात् । तत्कथं रूपकस्याधकतामात्रत्वमस्योच्यते, न तूपमासाधकत्वमपीति । एवमन्यत्रापि यदेकत्रानुकूल तद्वाकुल्येन परत्र प्रतिकूलम्, यच्चैकत्र प्रतिकूले तदत एवान्यत्रानुकूलम् । अन्यथा तथात्वस्यैवासंभवादिति चेत्, सत्यम् । किं तु यस्य

उ० : – इन्दुतादात्म्यप्रतीतावित्यर्थ । साधकतामिति । अपरत्वस्य पूर्वापेक्षित्वात् प्रथमेन्दोरानस्पनत्वेन रूपकसाधकत्वम् । ननु उपमायां वक्त्रत्वेनैव मुखप्रत्यये शीताशावपरत्व व्याहन्येत । इद्धतरस्याप्रतीनेरत आह—इंदुसमानगुणे इति । कथंचिदेवमर्थघटनासम्भवेन वक्त्रप्राधान्ये प्रातिकूल्यप्रसारात् उपमायां

प्रभा : – स्यानुपन्न । न तु रूपके साधकमिति । उपमाबाधकमुखेन साधकत्वं तूपमाबाधकत्व एव पर्यवस्यतीति भाव । विध्युपमर्दीति । स्वविरोधिनोऽप्युपमर्दीत्यर्थ ।

मर्दिनो बाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेः । एवमन्यत्रापि सुधीभिः परीक्ष्यम् ।

**( ८६ ) स्फुटमेकत्र विषये शब्दार्थालंकृतिद्वयम् ।**
**व्यवस्थितं च**

अभिन्ने एव पदे स्फुटतया यत् उभावपि शब्दार्थालंकारौ व्यवस्थां समासादयतः, सोऽप्यपरः संकरः । उदाहरणम्—

---

foot.' Since in comparison with the latter, the unfavourable circumstance that sets at naught the positive assertion, is felt to be more prominent. The intelligent ones should scrutinise, in this way, in other cases also.

And where in one place are present two figures, one of sound and the other of sense, (it = Saṅkara).

*Gloss*:—That again is another variety of Saṅkara where in one and the same word, both figures, one of sound and the other of sense, happen to be clearly present To illustrate:—

---

**प्रदीपः**—यथात्वमुत्कटं प्रतीयते तत्र तस्य तथात्वव्यपदेशः । अत्र तु विघ्नुपमर्दि बाधकं साधकापेक्षयोत्कटत्वेन प्रतीयत इति तेनैव व्यपदेशो युक्तः । तदेतदुक्तं विघ्नुपमर्दिबाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेरिति । अन्ये तु तदन्यथा व्याचक्षते—विधीयतेऽनेनेति विधिः साधकं, तदुपमर्दि तस्माद्बलीयः । एतदुक्तं भवति—मशीरशिशिरितस्य पादे सभक्तमात्रेण न तावदुपमासाधकत्वं निर्वहति यावदम्बुजे तद्विरहो न निश्चीयते । तथा च तद्बाधकस्यैव प्राथमिकत्वात्तन्मुखेनैव व्यपदेश । एवमन्यत्रापि साधकबाधकभावः सुधीभिः परिभावनीयम् । **स्फुटमिति** । विषय. पदम् । तेनैकत्र पदे यदुभौ शब्दार्थालंकारौ स्फुटं व्यवस्थितौ भवतः,

---

**उ०**:—न बाधकमित्यर्थः । एवं चानयोरुदाहरणयोर्यत्कोटेः साधकमस्ति तत्कोट्यंशे संशयस्योत्कटत्वान्मतल्लक्षणे च तुल्यकोटिकसंशयस्य विवक्षणान्नात्र संकर इत्याशयः । न तु रूपके इति । एतद्बीजमग्रे स्फुटम् । **अंबुजे** । तत्त्वेन प्रतीतेः । **विध्युपमर्दीति** । स्वविरोधिकोटिभूतविघ्नुपमर्दीत्यर्थः । उपमासाधकमित्युक्ते किंचिद्रूपकस्यापि साधकं स्यादिति संदेहो नापैति, बाधके त्वभिहिते तद्व्यवच्छेदप्रतीतेः संदेहोच्छेद इत्याशयः । **एवमिति** । 'यस्यानिशं दिविषदक्षरणारविन्दमुत्तंसयन्त्यनितभक्तिमरानताः ।' इत्यादौ उत्तंसनमुपमाबाधकमिति

---

**प्रभा**:—साधकापेक्षयेति । साधकं [illegible] यथोपमायां तथा रूपकेऽपि किंचिद्वेदिति

स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दलकलापमुखावतार-
बद्धान्धकारमधुपावलि संचुकोच ॥ १८४ ॥ (हरविजय १९।१)

अत्र एकपदानुप्रविष्टौ रूपकानुप्रासौ ।

Then closed the *lotus of day*, having the ample pericarp of the sun orb, with the filaments of rays shooting up conspicuously, that enclosed the swarm of bees in the form of darknesss, on its (i e of the swarm) descent into its opening, and whose petal row of the eight quarters was close knit I (184)

Here Rūpaka and Anuprasa are embodied in one word

**प्रदीपः**—सोऽप्यपर सकर । उदाहरणम्—**स्पष्टोल्लसदिति** । अत्र पादत्रये प्रत्येक रूपकानुप्रासौ प्रविष्टौ । शब्दार्थालङ्कृतीति प्रायोवाद । शब्दालकारयोरप्येतद्दर्शनात् । यथा— 'कलकलोऽलकल्लोलदृशाऽन्यया' इत्यादावनुप्रासयमकयो । **तेनेति** । तस्मादनुग्राह्यानुग्राहकतया सदेहेनैकपदप्रतिपाद्यतया व्यवस्थितत्वाच्च त्रिप्रकारोऽय सकर कथित । प्रकारान्तरेण तु न शक्यो व्याकर्तुम् । भेदानामनन्तत्वात् । इति प्रतिपादिता शब्दार्थतदुभयगतत्वेन त्रिविधा अलकारा । ननु त्रिविधानामप्येषा काव्यशोभातिशय हेतुत्वस्य तुल्यत्वेऽपि कुत एष प्रतिनियम यत्कश्चिच्छब्दस्य कश्चिदर्थस्य कश्चिच्छब्दार्थयोरिति चेत् । उक्तमत्र प्रागेव दोषगुणालकाराणा शब्दार्थोभयगतत्वव्यवस्थायाम

**उ० :**—बोध्यम् । तृतीयमकारमाह—**स्फुटमिति** । स्फुटमित्यनेनास्फुटालकारद्वयसर्गस्य नालकारत्व वैचित्र्यानाधायकत्वादिति सूचितम् । ( **स्पष्टेति** । हरविजये १९ सर्गे सन्ध्याकालवर्णनम् ।) स्पष्टमुल्लसन्त किरणा एव केसर यस्य तादृशं सूर्यबिम्बमेव विस्तीर्णा कर्णिका यस्य, मिथ सनद्धा अष्टौ दिश एव दलसमूहा यस्य तच्च तन्मुखं रात्रेरारम्भस्तदवतारेण बद्धा अधकारमधुपावलिर्येन तत् । ( वसततिलका छन्द । ) **प्रत्येकम्** । समस्तपदे । किरणकेसरसूर्यबिम्बविस्तीर्णकर्णिकदिग्दलकलापेत्यत्र । **अनंतत्वादिति** । शब्दगतत्वेन अर्थगतत्वेन शब्दार्थोभयगतत्वेन चानुगतीकृत्योक्तम् । उपमारूपकादीन् विशिष्योपादाय त्वनतत्वात्तत्सकरो वक्तु न शक्यत इत्यर्थ । तदाह—**शब्दार्थेत्यादि** ।

**प्रभा :**—शङ्कया नेतरव्यवच्छेदसिद्धि बाधकेन तु बाधकस्तत्सिद्धिरिति तदेव वक्ष्यदित्याशय । अन्ये त्विति मतमुपन्यस्यार्थम् । एकपदप्रतिपाद्यतयेति । एकपदाश्रितत्वेन गम्यमानतयेत्यर्थ । यथाश्रुते शब्दालकारे पदप्रतिपाद्यत्वस्यासंभवात् । प्रकारान्तरे-

(८७) तेनासौ त्रिरूपः परिकीर्तितः ॥ ५५ ॥

तदयमनुग्राह्यानुग्राहकतया संदेहेन एकपदप्रतिपाद्यतया च व्यवस्थितत्वात् त्रिप्रकार एव संकरो व्याकृतः। प्रकारान्तरेण तु न शक्यो व्याकर्तुम्, आनन्त्यात्तत्प्रभेदानाम् ।

इति प्रतिपादिताः शब्दार्थोभयगतत्वेन त्रैविध्यजुषोऽलंकाराः ।

कुतः पुनरेष नियमो यदेतेषां तुल्येऽपि काव्यशोभातिशयहेतुत्वे कश्चिदलंकारः शब्दस्य, कश्चिदर्थस्य, कश्चिच्चोभयस्येति चेत् । उच्यते, यथा काव्ये दोषगुणालंकाराणां शब्दार्थोभयगतत्वेन व्यव-

Therefore it is declared to be threefold.

*Gloss* —Therefore this Sankara has been sub-divided as being only of three varieties owing to its presenting itself (I) either as based on figures related as the Principal and the Subservient, or (II) as based on figures that arouse a doubt, or (III) as based on figures that are conveyed by the same word It cannot be sub-divided any other way, since the varieties resulting therefrom would be infinite

*Thus have been stated the figures of three kinds, according as they are present in the Sound, Sense or both.*

If it be urged Why this restriction that even when these are equally responsible for heightening the charm of Poetry, a particular *figure is stated to be of Sound, another of Sense, and some other* of both ?

We reply In this matter it has been said (already) that in Poetry, in the matter of the classification of Defects, Excellences and

प्रदीपः – न्वयव्यतिरेकावेव प्रभवत । निमित्तान्तराभावात् । ततश्च योऽलंकारः शब्दार्थयोर्मध्ये यस्यान्वयव्यतिरेकावनुविधत्ते स तदलंकार इति व्यवस्थाप्यते । शब्दान्वयव्यतिरेकानुविधायित्वं चैतदेव, यच्छब्दपरिवृत्त्यसहत्वम् । नन्वेवं यथा पुनरुक्तवदाभासपरम्परितरूपक[illegible] घोभयभावाभावानुविधायि चेनोभयालंकारस्तथाऽर्थशब्दहेतुकार्थान्तरन्याम-

उ० : – पूर्वं 'व्यवस्थितत्वाच्च' इत्यस्याप्ययमेवार्थ । प्रागेवेति । नवमोल्लासे इत्यर्थ । परिवृत्त्यसहत्वमिति । तत्वं शब्दगतत्वम्, शब्दस्य तु सहत्वेऽर्थगतत्वम्,

प्रभा : – षेति । तत्तदलंकारगतत्वेनेत्यर्थ । नन्वयेमिति । योऽलंकार इत्याद्युक्तरीत्या शब्दार्थालंकारत्वव्यवस्थाभ्युपगम इत्यर्थ । तनुवपुरित्यादिपुनरुक्तवदाभासे तनुशब्दस्य परिवृत्त्यसहत्वाच्छब्दान्वयव्यतिरेकौ वपुःशब्दस्य परिवृत्तिसहतया चार्थान्वय-

स्थायामन्वयव्यतिरेकावेव प्रभवतः । निमित्तान्तरस्याभावात् । ततश्च योऽलंकारो यदीयावन्वयव्यतिरेकावनुविधत्ते, स तदलंकारो व्यवस्थाप्यते इति । एवं च यथा पुनरुक्तवदाभासः परम्परितरूपकं चोभयोर्भावाभावानुविधायितया उभयालंकारौ, तथा शाब्दहेतुकार्थान्तरन्यासप्रभृतयोऽपि द्रष्टव्याः । अर्थस्य तु तत्र वैचित्र्यम् उत्कटतया प्रतिभासते इति वाच्यालंकारमध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः ।

योऽलंकारो यदाश्रितः स तदलंकार इत्यपि कल्पनायाम् अन्वयव्यतिरेकावेव समाश्रयितव्यौ, तदाश्रयणमंतरेण विशिष्टस्याश्रयाश्रय-

*Figures as being present in Sound, Sense or both, it is Presence and Absence principle* that carries weight. Consequently a figure is classified as belonging to that whose Presence or Absence it depends on. Thus just as Punaruktavadābhāsa and Paramparita Rūpaka are figures of both owing to their depending on the Presence or Absence of both, similarly, Arthāntaranyāsa based on Sound and others like it should be looked upon (as figures of both). But they have been defined, without regard for actual facts, among the figures of sense since in them the strikingness of Sense appeals as being more prominent.

Even in the matter of the assumption that a Figure belongs to that in which it *abides*, it is the *Presence-Absence principle* that one has to fall back upon. Since without resorting to it, there could not be the

प्रदीपः – प्रभृतयोऽप्युभयालङ्कारा भवेयुरिति चेत्, न । इष्टापत्तेः । एवं तर्हि कथमुभयालङ्कारप्रस्तावमुल्लङ्घ्यार्थमात्रालङ्कारप्रस्तावे पठिता इति चेत्, तत्रार्थवैचित्र्यस्य प्रकटतया प्रतिभासात् । अथ योऽलङ्कारो यदाश्रितः स तदीय इत्येव किं न विभाग इति चेत्, तथा कल्पनायामप्यन्वयव्यतिरेकावेव समाश्रयितव्यौ । तद्व्यतिरेकेण विशिष्टस्याश्रयाश्रयिभावस्याभावात् । तस्मादलङ्का-

उ० : – यत्त्वपि तत्सहत्वे उभयगतत्वमिति भावः । अर्थशब्दहेतुकेति । क्षणदासावक्षणदेत्यादौ शब्दशक्तिमूलविरोधालंकारांगभूतार्थांतरन्यास इत्यर्थः । प्रभृतिपदात् 'सकलकलं पुरमेतत्' इति शब्दसाम्यनिबंधनोपमादयः । प्रकटतयेति । साध्यसाधनभावादीनामर्थधर्मत्वादिति भावः । अत एव शब्दवै-

प्रभा : – व्यतिरेकावित्युभयालंकारत्वम् । तथा विद्वन्मानसेत्यादिपरम्परितरूपके मानसपदस्य श्लिष्टतया परिवृत्त्यसहत्वाद्धंसादिपदानां च तत्सहत्वादुभयालंकारता । एवं क्षणदासा च क्षणदा इत्यर्थान्तरन्यासेऽपि श्लेषमूलकतया शब्दान्वयव्यतिरेकानुविधानम्, उत्तरार्धे त्वर्थस्येत्युभयालंकारत्व स्यादित्यर्थः । नेति । इष्टमनिष्टापादनं नेत्यर्थः । अलङ्कारसर्वस्वकारमतमाशङ्कते—अथेति । दूषयति—तथेति । तथा हि कचि-

यिभावस्याभावादित्यलंकाराणां यथोक्तनिमित्त एव - परस्परव्यतिरेको ज्यायान् ।

**( ८८ ) एषां दोषा यथायोगं संभवन्तोऽपि केचन ।**

**उक्तेष्वन्तर्भवन्तीति न पृथक्प्रतिपादिताः ॥ ५६ ॥**

तथा हि अनुप्रासस्य प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोध इति ये त्रयो दोषाः, ते प्रसिद्धिविरुद्धतां अपुष्टार्थत्वं प्रतिकूलवर्णतां च यथाक्रमं न व्यतिक्रामन्ति, तत्स्वभावत्वात् । क्रमेणोदाहरणम्—

---

particular *Abode-Abiding principle.* Therefore it is more cogent to hold that the mutual differentiation between figures is due to the circumstance as specified.

### DEFECTS OF FIGURES.

Though there are possible certain defects of these, they have not been separately stated since each one of them comes, as the case may be, under those (already) stated

*Gloss*:—To explain:—The three defects of Anuprāsa, viz. Absence of established usage, Futility and Stylistic disharmony, do not respectively go beyond (a) Being in conflict with established usage, (b) Redundancy, and (c) Discordance of syllables, as they are identical with them in nature. Instances in order:—

---

प्रदीपः—राणामन्वयव्यतिरेकनिबंधन एव परस्परं भेद इत्येव ज्यायः । नन्वलंकाराणां दोषाः प्राचीनैरभिहितास्ते किं न सन्त्येव, आहोस्वित्सन्तोऽप्युपेक्षिताः । आद्येऽनुभवविरोधः अन्त्ये न्यूनत्वमत आह—एषामिति । तथा हि अनुप्रासस्य तावत् त्रयो

---

उ०:—चित्रस्योच्चटतया पुनरुक्तवदाभासः शब्दालंकारमध्ये गणितः । वस्तुतः सिद्धान्तसिद्धं तु सर्वेषामुभयालंकारत्वमिति बोध्यम् । अलंकारसर्वस्वोक्तां युक्तिं दर्शयते—अथेति । विशिष्टस्य । तत्तदाश्रयविशिष्टस्य । ज्याय इति । साक्षाच्छब्दाश्रितत्वस्य यमकस्यप्रबंधादौ साक्षादर्थाश्रितत्वस्योत्प्रेक्षासमासोक्त्यादावसंभवात् कथंचित्तदाश्रितत्वस्यातिप्रसक्तत्वात्परिवृत्त्यसहशब्दाश्रितत्वे तत्सहशब्दार्थाश्रितत्वं वाच्यम् । तथा च फर्प-

---

प्रभाः—द्वये पक्षे वा यथासम्भवमनिरूपितोऽयमाश्रयो शब्दाश्रितत्वेन शब्दालंकारत्वापत्तिः । न चेष्टापत्तिः । अर्थालंकारत्वोक्तेः । एवमर्थालंकारान्तराणामपि शब्दगताश्रयभवत्वा-प्रतीतिपत्तौ भेदः । विशिष्टस्येति । तदाश्रयत्वविशिष्टस्येत्यर्थः । अलंकाराणा-

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन्धूर्जटिर्धूर्ध्वजान्तान्
अक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः ।
रंहः संघः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥ १८५ ॥

( मयूर's सूर्यशतक १७ )

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिः अनुप्रासानुरोधेनैव कृता, न पुराणेतिहासादिषु तथा प्रतीतेति प्रसिद्धिविरोधः ।

---

May that chariot of the sun of hot lustre grown propitious in pleasure protect you the chariot ever ready to oblige the world, the series of the spokes in whose wheels Viṣnu, the bearer of the discus, praises, whose bay steeds Indra (Hari) himself (praises), the tops of whose yoke-banners, Śiva (praises), whose axle the moon (praises), also Aruna connected with which Varuna (praises), the end of whose pole Kubera (praises), whose speed the host of gods (praises), day after day! (185)

Here the praise with a definite subject for a definite object, is effected only with an eye upon the Anuprāsa. It is not found to be so in the Puranas, Itihasa etc Therefore the defect of Conflict-with-established-usage

---

प्रदीपः – दोषा , प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोधश्च । ते च यथाक्रमं प्रसिद्धिविरोधपुष्टार्थत्वप्रतिकूलवर्णत्वेभ्यो नातिरिच्यन्ते । तात्स्वभावत्वात् । तत्र प्रसिद्ध्यभावो यथा—चक्रीति । अत्र चक्रिप्रभृतीनां कर्तॄणां चक्रारपङ्क्त्यादीनां कर्मणा प्रतिनियमेन स्तुतिरनुप्रासानुरो

---

उ० : – चिदाश्रितत्वाशप्रवेशो विफल इत्याशय । वैफल्यम् । चमत्काराजनकत्वम् । वृत्तिविरोधः । उपनागरिकादिवृत्तिविरोध । प्रतिकूलेति । माधुर्यव्यञ्जिकाया वृत्तौ शब्दत एव टवर्गादेरोजोव्यञ्जिकायामुद्धतगुम्फविधानमुखेन शिथिलबन्धस्यार्थेन पर्युदासादिति भाव । तत्स्वभावत्वादिति । तत्तल्लक्षणाक्रान्तत्वादित्यर्थ । चक्रीति । ( मयूरकविकृते सूर्यशतके सूर्यरथवर्णनम् ।) अहिमरुचे सूर्यस्य स स्यन्दनो वोऽवतादिति सम्बन्ध । जगदुपकारार्थं नियप्रवृत्तस्य यस्य चक्रकीलपङ्क्तिं चक्री

---

प्रभा : – मिति । शब्दार्थालङ्काराणामित्यर्थ । इति संकरप्रकरणम् ॥ ६१ ॥ चक्रीति । अत्र स्तोत्रस्तुत्युपन्यासे न किंचिदनौचित्यम् । अन्यत्र कवेरनुप्रासकुतूहलभङ्गादित्याह—अत्रेति । चक्री कर्ता चक्रारपङ्क्तिमेव कर्मभूतां स्तौति नान्यत्र इत्येवरूपेण

भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि ।
यदि सल्लीलोल्लापिनि गच्छसि तत्किं त्वदीयं मे ॥ १८६ ॥ (—)

अनणुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम् । Cited in रुद्रट's काव्य
परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥ १८७ ॥ (—) 2 22-

अत्र वाच्यस्य विचिन्त्यमानं न किंचिदपि चारुत्वं प्रतीयते इत्यपुष्टार्थतैवानुप्रासस्य वैफल्यम् ।

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥ १८८ ॥ (—)

---

O youthful lady, whose face is like the moon shedding delight and lovely, whose eloquence possesses fine grace, if you proceed to your beloved's house, say, O red footed one, why your movement, with the jewelled girdle jingling in no small measure and the sweet anklets tinkling without a pause, occasions annoyance to me, for no reason ! (186-7)

Here no imaginable charm of the expressed sense could be felt and hence the Futility-of Alliteration is the same as Redundancy.

O lady of sweet voice, put for a moment in (an embrace of) the neck of the lady with conch-like throat, me who am filled to the brim with an irresistible yearning ! Spare me this neck malaise ! (188)

---

प्रदीप — येनैव निबद्धा न पुनरितिहासादिषु तथा प्रसिद्धेति प्रसिद्धयभावः । सोऽयं प्रसिद्धिविरोध एव । वैफल्यं यथा—भणेति । अत्र वाच्यस्यार्थस्य विचिन्त्यमानं न किंचिच्चारुत्वं प्रतीयत इत्यपुष्टार्थत्वमेवानुप्रासस्य वैफल्यमुच्यते । वृत्तिविरोधो यथा—'अकुण्ठोत्कण्ठया' इ-

---

उ० : — विष्णुः, हरीनश्वान् हरिद्रिः, धूर्यानमुखम् तत्रन्यस्यजानामग्रान् धूर्जटिः शिरः, नक्षत्रनाथः चन्द्रः अक्षम् युगम्, अरुणं सारथिं वरुणः, कूबराग्र युगबंधनाग्रं कुबेरः, रंहो वेगं सुराणां समूहः, स्तौतीति सर्वान्वयि । (स्रग्धरा छन्दः ।) भणेति । हे तरुणि आनन्दस्यन्दी सुंदरश्च यः इंदुस्तन्मुखि । सल्लीलमुल्लासयुक्ते । उल्लासो गमनरचनादिप्रकारः । यदि रमणमंदिरं गच्छसि तदा

---

प्रभा : — ख्यातिरनुप्रासानुरोधेनैव कृता न पुराणाद्यनुरोधात्अप्यर्थौचित्यादतः प्रसिद्धिविरोधो दोष इत्यर्थः । द्वितीयमुदाहरति—भणेति । अत्र यदनुप्रासस्य वैफल्यं तदर्थस्यापरिपोषे तिष्ठति । तादृगनुप्रासप्रयोजनवाचकनिवेशोऽपि वाच्यस्य तद्द्वारा वाच्यार्थापुष्टत्वस्य वाच्यत्वाभिप्रायेणेत्याह—अत्र वाच्यस्येति । तृतीयमुदाहरति—अकु-

अत्र शृंगारे परुषवर्णाडम्बरः पूर्वोक्तरीत्या विरुध्यते इति परुषानुप्रासोऽत्र प्रतिकूलवर्णतैव वृत्तिविरोधः ।

यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्वं दोषः । यथा—

भुजगमस्येव मणिः सदम्भा ग्राहावकीर्णेव नदी सदम्भाः ।
दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतः प्रसभं सदम्भाः ॥ १८९ ॥

(—)

Here, in the manner stated above (Ullāsa VII), the pompous use of jarring syllables is inharmonious with Love Therefore jarring alliteration is, in this case, which is called Stylistic disharmony, the same as Discordance-of syllables.

The embodiment of Rhyme in three quarters is the same as Being out of vogue To illustrate—

Like a snakes's jewel of the first water, like a clear-watered river infested by sharks, the wily ones irresistibly attract the heart of a creature even when he has ascertained them as being of sinister aims! (189)

प्रदीपः— त्यादि । अत्र शृङ्गारे परुषवर्णाडम्बरो गुणविवेचनप्रस्तावोक्तरीत्या विरुद्ध इति प्रतिकूलवर्णतैव वृत्तिविरोध इत्युच्यते । यमकस्य तु पादत्रयगतत्वेन यमनमप्रयुक्तत्वमेव । कविभिस्तथाऽप्रयोगात् । यथा—भुजगमेति । उपमाया तु यौ न्यूनाधिकोपमानत्वे दोषौ तत्रोपमाने उपमेयापेक्षया जातिगतं प्रमाणगतं वा यन्न्यूनत्वमधिकता वा तदनुचितार्थम् । धर्मगते न्यूनत्वाधिकत्वे यथाक्रमं न्यूनपदत्वाधिकपदत्वे । तत्र जातिगतं न्यूनत्वं यथा—

उ०ः— त्वदीयमेकं प्रयोजनं भणेत्यर्थः । श्वोभाविगमनां प्रति जारस्य वच । अननुरणदिति । शब्दरहितमणिमेखलम् । तत्स्थानस्य गुरुत्वेन लघुसंचारात् । अविरतसिंजानमञ्जुमञ्जीरम् इति च परिसरणविशेषणम् । परिसरणं गमनम् । भूषणानां च शिञ्जितम् । रणरणकमुत्कण्ठाम् । ईदृशं तव परिसरणं दृष्ट्वा मम चेतोऽकारणमुत्कण्ठां कुरुते इत्यर्थः । तवोल्लासात् इतः परं भर्तृगृहगमनाच्चेति भावः । ( आर्या छन्दः । ) उच्यते इति । शब्दानुरूपार्थविरहेणानुप्रासस्वेऽपि नास्वादोत्कर्षः । शब्दालंकाराणामप्यर्थातिशयाधानद्वारेणैव चमत्कारि-

प्रभाः— ण्ठेति । अत्रोपनागरिका विमुच्य परुषाया अङ्गीकारायो वृत्तिविरोधः स वर्णप्रातिकूल्यान्नातिरिच्यत इत्याह—शृङ्गारे इति । यमकविषये दोषं दोषप्रयुक्तत्वेऽन्त-

उपमायाम् उपमानस्य जातिप्रमाणगतन्यूनत्वम् अधिकता या तादृशी अनुचितार्थत्व दोषः। धर्माश्रये तु न्यूनाधिकत्वे यथाक्रम हीनपदत्व मधिकपदत्व च न व्यभिचरतः। क्रमेणोदाहरणम्—

'चण्डालैरिव युष्माभिः साहसं परमं कृतम्'

(Cited in वामन's सूत्रवृत्ति ४ २)

'वह्निस्फुलिङ्ग इव भानुरयं चकास्ति'

(Cited in वामन's सूत्रवृत्ति ४ २)

अयं पद्मासनासीनश्चक्रवाको विराजते।
युगादौ भगवान्वेधा विनिर्मित्सुरिव प्रजा॥ १९०॥

(Cited in भामह's काव्यालकार २ ५५)

---

In an Upamā, the inferiority, in the matter of the class or size, of the Upamāna, or its superiority in the same is (the same as) the defect Impropriety ~~So far as the inferiority or superiority abiding in the Common Property is concerned~~, they respectively do not fall outside Being deficient-in-(descriptive)-words, or Being-superfluous-in-descriptive-words Instances in order

Like the Caṇḍalas you have performed an eminent act of daring!

Here shines the sun like a spark of fire!

Here looks splendid the Cakravaka perched on the seat of the lotus, like the *Lord, the Creator, intending to create* the creatures, at the beginning of the aeon (*i. e.* creation)! (190)

---

प्रदीपः—'चण्डालैरिव युष्माभि साहसं परमं कृतम्'। अत्र चण्डालत्वजातेर्न्यूनतया दुष्कर्मकारित्वस्यैकेऽनुचितार्थत्वम्। प्रमाणगत यथा—'वह्निस्फुलिङ्ग इव भानुरय चकास्ति' इति। जातिगतमधिकत्व यथा—अयमिति।

---

उ०:—त्वात्। शब्दानां परिवृत्त्यसहत्वमात्रेण शब्दालङ्कारव्यपदेशः। (भुजंगमस्येति।) सदंभा दम्भसहिता। दुरतां दुःखप्राप्यात करणताम्। निर्णयतोऽपि निश्चिन्वतोऽपि। प्रसभं बलात्। प्रमुखे इति पाठे आपातत। वर्त्मनि। सच्चरितिसर्पमणिरिव भाद्रयुक्तसजला नदीव। वर्तिरम्यपदवाच्यत्वात्। (उपजातिश्छन्द।) धर्मगते। साधारणधर्मगते। अनुचितार्थत्वमिति। सदुपपत्तिविवक्षायां [illegible] न दोषत्वमिति बोध्यम्। (अयमिति। पद्ममेवासनं तत्र

---

प्रभाः—मॉवयति—यमकस्य त्विति। उदाहरति—यथेति। अथ प्रतीयमानेति। इवादिशब्दोपमेनेत्यर्थः। तथापीति। इवादिवोधेनोपमात्वादेर्जीत्यर्थ। एवमुपात्तधर्मे

पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसंनिभः ॥ १९१ ॥

(Cited in वामन's सूत्रवृत्ति. ४·२.)

अत्र चण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यर्थमेव कदर्थित इत्यनुचितार्थता ।

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥ १९२ ॥

(Cited in वामन's सूत्रवृत्ति. ४·२.)

अत्रोपमानस्य मौञ्जीस्थानीयस्तडिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादित इति हीनपदत्वम् ।

Your navel is like the Nether World, your breasts like mountains; while this massive braid of your hair is like the cataract of the Jumna! (191)

Here, owing to the Upamānas, Caṇḍāla etc., the matter under consideration happens to be very much brought into contempt, therefore it is Impropriety.

That sage, marked by the girdle of Muñja grass and wearing the hide of a black antelope for a garment, looked splendid like the sun wrapped in a fragment of a dark cloud! (192)

Here since the attribute of Lightning relating to the Upamāna and corresponding to the Girdle of Muñja grass (relating to the Upameya) has not been stated by any word, the defect is the same as Deficiency-of-words

**प्रदीपः**—ब्रह्मण कल्पभेदेन भेदाद्ब्रह्मत्व आर्ति. । प्रमाणमतमधिकृत्य यथा—**पातालमिति** । एषु चण्डालादिभिरुपमानैरुपमेयभूता अर्था अत्यन्तमेव कदर्थिताः । निन्दोपहासादिप्रतीतेरित्यनुचितार्थता । धर्मगत न्यूनत्व यथा—**स मुनिरिति** । अत्रोपमेयमौञ्जीस्थानीयस्तडिल्लक्षणो धर्मो न केनापि पदेन प्रतिपादितः । न चाक्षेपादिनाऽपि स्पष्ट प्रतीयते

**उ०**:—आसीनः । विनिर्मित्सु· विनिर्मातुमिच्छुः । स्रष्टा ब्रह्मा । **पातालमिति** । कालिन्दीपातसन्निभ. यमुनाप्रवाहतुल्यः ।) **उपहासेति** । अत्युत्कृष्टब्रह्मादुपमानकत्वम् अपकृष्टोपमेयस्य असत्यतापर्यवसायितयोपहासाय भवतीति भावः । **स मुनिरिति** । (मौञ्ज्या मुंजाख्यतृणनिर्मितमेखलया । लाञ्छितः चिह्नितः ।

**प्रभा**:—विशिष्टत्वमुपमानोपमेययोरन्यतरस्य भवेत्, तथा च प्रक्रमभङ्ग इत्याह—न च

स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः ॥ १९३ ॥
( Cited in भामह's काव्यालंकार २ ५८ )

There Kṛṣṇa clad in a yellow garment and clutching the Śārṅga bow assumed a form both charming and awful, like a cloud, with a streak of lightning and rainbow across it, as it comes in contact with the moon, at night! (193)

प्रदीपः—अविनाभावाद्यभावादिति न्यूनपदत्वमेवैतत् । धर्मगतमधिकत्वं यथा—स पीतेति । अत्रोपमेये शङ्खाद्यनिर्देशादुपमाने तत्तुल्यस्य शशिनो ग्रहणमतिरिच्यते इत्यधिकपदत्वमेवैतत् । भिन्नलिङ्गत्वभिन्नवचनत्वे अप्युपमादोषौ नोक्तदोषातिरेकिणौ । तथा हि । लिङ्गवचनयोर्भेदे यद्युपमानोपमेययोः साधारणधर्मवाचकं पदमन्यतरघटितलिङ्ग कुर्यात्, तदेकतरस्यैव तद्धर्मसमन्वयावगते कथमुपमानिर्वाहः । अथ प्रतीयमानं साधर्म्यमाश्रित्यैव स्यात्, तथाप्युपात्तधर्मविशिष्टत्वेनोपमानत्वमुपमेयत्वं वा प्रतीयेत । न च तथा प्रस्तुतम् । अत

उ०ः—कृष्णाजिनरूपं पटं वस्त्रम् । ) जीमूतो मेघः । अंशुमान्सूर्यः । अविनेति । व्याप्त्यभावादित्यर्थः । तं विना सादृश्याप्रतीतेर्दोषत्वम् । ( स पीतेति । पीतवर्णं वासो वस्त्रं यस्य, प्रगृहीतं शार्ङ्गं धनुः येन, स श्रीकृष्णो मनोज्ञं सुन्दरं च तद्भीमं वपुः, आप प्राप । क इव । शतह्रदा विद्युत् इन्द्रायुधं इन्द्रधनुश्च तद्वान् निशायां शशिना संसृज्यमानो मेघ इव । उपजातिश्छन्दः ) अधिकपदत्वमेवैतदिति । उपमानन्यूनाधिकधर्मत्वमेवोपमेयाधिकन्यूनधर्मत्वमिति पृथङ्नोक्तम् । प्रतीयमानमिति । उपात्तधर्मातिरिक्तधर्ममित्यर्थः । न च तथेति । किं तु उपमाप्रस्तुतेरित्यर्थः । प्रक्रांतस्य । उपमालङ्कारस्य । अभावात् । असंभवात् । इत्यादिना धर्मेणापि उपात्तधर्म एव बोध्यते तस्य निरुक्तोभयनिष्ठत्वे उपमानिर्वाहो नान्यथेति भावः । अपरत्र लिंगविपरिणामेन यथाकथंचिदन्वयेऽपि स्फुटत्वाभावेन चमत्कारापकर्ष इति तत्त्वम् । मात्रेणेति । पुंस्त्वान्वितच्युतत्वस्य नपुंसकविशिष्टोपमानधर्मत्वाभावादिति भावः । अत एव यत्रानुपात्तसाधारणधर्मस्तत्र न दोषः । कल्प्यमानस्य लिंगरहितस्यैव कल्पनेन उभयसाधारणत्वात् ।

प्रभाः—तथेति । अन्यतरस्य धर्मविशिष्टत्वं प्रक्रान्तविरुद्धमित्यर्थः । पुंलिङ्गत्वादिति । पुंस्त्वान्वितत्वादित्यर्थः । तथा चोपमाने चिन्तारत्ने बाधेनान्वयादिति भावः । न चेवशब्देनोपमाने साधारण्धर्मबोधे बाधाभाव इति शङ्कनीयम् । उपात्तधर्मस्यैव

अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यते इत्यधिकपदत्वम् ।

लिङ्गवचनभेदोऽपि उपमानोपमेययोः साधारणं चेत् धर्ममन्यरूपं कुर्यात्, तदा एकतरस्यैव तद्धर्मसमन्वयावगतेः सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं वा प्रतीयमानेन धर्मेण प्रतीयते इति प्रक्रान्तस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमरूपत्वम् । यथा—

Here, when the conch etc as relating to the Upameya are not stated, the mention of the moon is in excess so the defect is the same as Superfluity-of words

If the divergence of Gender and Number tends to make what is a *common* property otherwise, then the common property is found to be in connection only with one of the two Therefore it (i. e the other) will be apprehended as an Upamāna or Upameya only in so far as qualified by the attribute that is understood So the fault is the same as Breach-of Motif since the matter sought to be stated is not clearly brought out To illustrate —

प्रदीप ः—प्रक्रान्तस्याभावाद्भग्नप्रक्रमत्वमेव दोष । यथा—'चिन्तारत्नमिव च्युतोऽसि करतो धिङ् मन्दभाग्यस्य मे' । अत्र च्युत इत्युपमेयमानेणान्वीयते । पुल्लिङ्गत्वात् । वचनभेदे यथा—'सक्तवो भक्षिता देव शुद्धा कुलवधूरिव ।' अत्र शुद्धा इत्युपमेयमानेणान्वीयते । लिङ्गभेदोऽत्र विद्यमानोऽप्यप्रधानम् । उपमानस्य बहुत्वे लिङ्गभेदेऽप्युभयान्वयसंभवात् । यत्र तु लिङ्गवचनयोर्भेदेऽपि सामान्याभिधायि पदमुपात्तरूपभेद नापद्यते, किं तूपात्तेनैव रूपेणोभयत्रान्वेति, तत्र दोषत्वमेव नास्ति । उभयत्राप्यस्यानुगमयोग्यस्वभावत्वात् ।

उ० ः—एवं यत्र लिंगरहितार्थोपस्थापकतिङन्तेन साधारणधर्मोपस्थितिस्तत्रापि न दोष । यथा 'स्त्रीव गच्छति षण्ढोऽयम्' इत्यादौ । एवं च 'चन्द्र इव सुंदर मुखम्' इत्यादौ दोष एवेति बोध्यम् । अत्र शुद्धा इति बहुत्वविशिष्टशुद्धत्वसाधारणधर्मस्य बहुत्वावरुद्धसक्तुष्वेवान्वयो न त्वेकत्वावरुद्धवधूरूपे उपमाने इति भाव । **संभवादिति** । उभयत्रापि उपात्तरूपाभेदात् । तदाह—**यत्र त्विति** । **रूपभेदम्** । आनुपूर्वीभेदम् । **उपात्तेनैव रूपेणेति** । उपस्थितोऽर्थ इति शेष । आनुपूर्वीसाम्येनोभयत्रान्वयसंभवादिति भाव । **अनुगमः** । अन्वय । **अत्र लिंगेति** ।

प्रभा ः—तेन बोधनस्य व्युत्पत्ते । तस्य च पुस्त्वान्वितस्योपमाने बाधस्योक्तत्वात् । लिङ्गभेद इति । सक्तुशब्दस्य पुल्लिङ्गत्वादित्यर्थ । लिङ्गभेदेऽपीति । पुस्त्वस्येव स्त्रीत्व-

'चिन्तारत्नमिव च्युतोऽसि करतो धिङ् मन्दभाग्यस्य मे' (—)
'सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव ।' (मेधाविन् ?)

यत्र तु नानात्वेऽपि लिङ्गवचनयोः सामान्याभिधायि पदं स्वरूपभेदं नापद्यते, न तत्रैतद्दूषणावतारः, उभयथाऽपि अस्य अनुगमक्षमस्वभावत्वात् । यथा—

'गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः ।' (—)
तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥ १९४ ॥ (—)

---

You, like a talisman, have slipped from my hand! Fie upon me who am hapless!

O king, barley-meal pure like a wife of good family, has been eaten!

Where, however, even with the divergence of Gender and Number the word expressing the common property does not undergo a change of form, this defect does not present itself, since that (i. e. the common property) possesses the characteristic of agreeing both ways. To illustrate:—

Made famous by priceless virtues, like the great ocean by priceless jewels!

Her costume, full of elegance and unlike that of other women, possessed an exquisite grace like her charms! (194)

---

प्रदीपः—तत्र लिङ्गभेदे यथा—'गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः।' अत्र लिङ्गभेदेऽपि विशेषणान्वयस्याविशेषाद्दोषाभावः । वचनभेदे यथा—तद्वेष इति । अत्र वचनभेदेऽपि मधुरताभृत इत्यस्योभयान्वयाविशेषान्न दोषत्वम् । एवं कालपुरुषविध्यादिभेदेऽपि असाधारण एव दोषः । तथाप्रतीतेरस्खलितरूपतया

---

उ० :—गुणरत्नशब्दयोर्लिङ्गभेदेऽपि अनर्घ्यैरिति धर्मवाचकस्य लिङ्गद्वयेऽपि तुल्यरूपत्वान्न दोष इति भावः । तद्वेष इति । तदीयो वेष उपमेयम् । विभ्रमा उपमानम् । असदृश इति मधुरताभृत इति दधत इति च धर्मवाचकान्युभयत्रान्वयसमर्थानि । असदृश इति कर्त्रेकवचनं क्विबन्तबहुवचनं च । भृत इति तृन्तैकवचनं क्विबन्तबहुवचनं च । दधत इति दध धारणे इत्यस्यैकवचनं धाञो बहुवचनं च । अत्र श्लेषोऽप्युपमोपपादक एवेति बोध्यम् । अन्याभिः

---

प्रभा :—इत्यपि प्रतीतौ यथायोग्यमन्वयसंभव इत्यर्थः । उभयथापीति । विशेषणत्वेन लिङ्गादिसम्बन्धैरिति । वचनभेदेऽपीति । प्रथमैकवचनतद्बहुवचनयोरदन्तहलन्त-

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपतया विश्रान्तिमासादयतीत्यसावपि भग्नप्रक्रमतयैव व्याप्तः। यथा—

अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥ १९५ ॥ (रघुवंश. १७.१.)

अत्र चेतना प्रसादमाप्नोति न पुनरापेति कालभेदः।

प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ॥ १९६ ॥ (रत्नावली. १.२०.)

---

Even in case of the divergence in Tense, Person, Mood etc. the *apprehension does not so much as attain completeness* as being free from abruptness. So the same also is comprehended by the Breach-of-Motif. To illustrate:—

Kumudvati got a son named Atithi from Kākutstha as intellect gets vividness from the last watch of the night! (195)

Here there is the divergence of Tense. Intellect *gets*—not *got*—clarity.

With your figure immaculate, thanks to the special bath taken recently, and with the skirt of your silken garment shining bright with the red hue of saffron, you while worshipping Cupid look splendid like a creeper from which shoot forth tendrils with tender leaves, whose form is clean with the special watering done recently and which is lovely with the pollen (Amśu) glistening bright with the red hue like that of saffron! (196)

---

**प्रदीपः**— विश्रान्त्यभावात्। तत्र कालभेदे यथा—**अतिथिमिति**। अत्र चेतना प्रसादमाप्नोतीति प्रकृते न तु तमापेति कालभेदे प्रक्रमभेद एव। पुरुषभेदे यथा—**प्रत्यग्रेति**। अत्र लता विभ्राजत इति प्रस्तुते न तु सा विभ्राजस इति तस्मात्पुरुषभेदः। संबोध्यनिष्ठस्य

---

**उ०**:—स्त्रीभिः अन्यस्त्रीवेषैः। **कालः**। वर्तमानादिः। **पुरुषः**। प्रथममध्यमोत्तमरूपः। **विधिः**। अप्रवृत्तप्रवर्तनम्। **स्खलितत्वम्**। विजातीयविषयत्वम्। **विश्रांतिः**। चमत्कारः। (**अतिथिमिति**।) काकुत्स्थात्। कुशात्। कुमुद्वती। कुमुदनागकन्या। (पश्चिमात् चरमात् यामिन्याः निशायाः यामात् चेतना चैतन्यं प्रसादं उद्बोधमिव।) **अत्रेति**। यद्यप्यतीतपश्चिमरात्रियामा-

---

**प्रभा**:—लाभ्यां भेदेऽपीत्यर्थः। **अतिथिं नामेति**। अत्र यथा चेतना प्रसादं प्राप्नोति

अत्र लता विभ्राजते न तु विभ्राजसे इति संबोध्यमाननिष्ठस्य परभागस्य असंबोध्यमानविषयतया व्यत्यासात् पुरुषभेदः ।

'गङ्गेव प्रवहतु ते सदैव कीर्तिः' (—)

–इत्यादौ च गङ्गा प्रवहति न तु प्रवहतु इति अप्रवृत्तप्रवर्तनात्मनो विधेः। एवंजातीयकस्य चान्यस्यार्थस्य उपमानगतस्यासंभवाद्विध्यादिभेदः ।

ननु समानम् उच्चारितं प्रतीयमानं वा धर्मान्तरमुपादाय पर्यवसितायाम् उपमायाम् उपमेयस्य प्रकृतधर्माभिसंबंधात्र कश्चित्कालादि-

Here, it is the third person "looks splendid," not the second "look splendid," which applies to the creeper. Therefore, since the latter part (i. e. termination) applying to the thing addressed has to be modified so as to apply to the thing not addressed, the defect is that of Divergence-of-Person.

'Let your glory ever flow forth like the Ganges!'

Here there is the divergence of mood in so far as it consists in making an inactive thing active. Inasmuch as, (the Indicative mood in) "The Ganges flows" (applies to the Ganges) but not (the Imperative) in "Let the Ganges flow" Owing to other things like this not applying to the Upamāna, there results the Divergence-of-Mood etc.

It might be urged. When an Upamā is concluded by admitting another common property whether stated or implied, as the Upameya

प्रदीपः – भ्राजनस्यासंबोध्यविषयतया अप्रतीतेः । विधिभेदे यथा—'गङ्गेव प्रवहतु ते सदैव कीर्तिः ॥ इत्यादावप्रवृत्तप्रवर्तनात्मनो विधेर्भेदः । यतो गङ्गा प्रवहतीति विवक्षित न तु सा प्रवहत्वि-

उ० : – चेतना प्रसादमाप्नोति न कालभेदस्तथापि पश्चिमरात्रिप्रभजातीयादद्यापि प्रसादमाप्नोतीति कालभेद इति भावः । प्रत्यग्रेति । (रत्नावल्यां प्रथमाङ्के वासवदत्तां प्रति वत्सराजस्योक्तिः ।) अभिनवस्नानविशेषेण शुद्धा मूर्तिः शरीरं यस्याः । कौसुम्भरागेण रुचिरः स्फुरन् अंशुकप्रान्तो यस्याः । नूतनकिसलययुक्तशाखाप्रभवा लतेव । (वसन्ततिलका छन्दः ।) अत्रेति । तस्मात् विभ्राजते इति पाठो युक्तः । न च देवीं संबोध्योक्तेः तत्र प्रथमपुरुषार्थानन्वय । हे देवि भवती भ्राजते इत्यन्वयसंभवात् । संबोध्यनिष्ठस्येति । मध्यमपुरुषवाच्यस्य

प्रभा : – तथा सा पुष्पमाप्नोति कालभेददोषः । विध्यर्थीप्याद्यर्थभेद—एवंविधस्येति । अन्यस्य प्रार्थनाद्यर्थस्येत्यर्थः । 'इन्दुरिव श्रियो दिवसत्र संतर्पणे

**भेदोऽस्ति । यत्राप्युपात्तेनैव सामान्यधर्मेण उपमा अवगम्यते, यथा— 'युधिष्ठिर इवायं सत्यं वदतीति'—तत्र युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति प्रतिपत्स्यामहे । सत्यवादी सत्यं वदतीति च न पौनरुक्त्यम् आशङ्कनीयम् । रैपोपं पुष्णातीतिवत् युधिष्ठिर इव सत्यवदनेन सत्यवाद्ययमित्यर्थावगमात् ।**

gets connected with the attribute under consideration, there cannot be any divergence of tense etc. Even in cases where the Upamā is apprehended only on the basis of a common property that is stated, e. g. 'He speaks truth like Yudhisthira,' we get the idea : 'He, truth speaking like Yudhisthira, speaks the truth' Nor should it be suspected that it is tautology to say "Truth-speaking like Yudhisthira, he speaks the truth ', for we get the ( particular ) sense "He, like Yudhisthira, is truth speaking by his habit of truth speaking ', as we get it in "He preserves it as he would preserve wealth "

**प्रदीप :**—ति । एवंविधस्यान्यस्यार्थस्योपमानगतस्यासम्भवाद्विध्यादिभेदो द्रष्टव्य । ननूदाहृतेषु कथ दुष्टता । भिन्नकालत्वभिन्नाद्धर्मादतिरिक्तमुपात्त प्रतीतं वा कंचित्साधारण धर्ममुपादायोपमापर्यवसाने पश्चाद्भिन्नकालादित्वभिन्नधर्मान्वयात् । तथा हि—विभ्राजस इत्यत्र विविक्तमूर्तत्वादिना रूतानायिकयोरुपमापर्यवसाने पश्चाद्विभ्राजस इत्यस्य नायिकामात्रान्वयेऽपि को दोष । अथ यत्रोपात्तेनैव धर्मेणोपमानिर्वाह स च धर्मभेद कालभेदादभिन्न एव, तत्र का गति । यथा— *'युधिष्ठिर इवाय सत्यवादी' इति । युधिष्ठिरो हि सत्यमवादीत्, न तु वदतीति चेत् । उच्यते ।* तत्रापि सत्यवादीति प्रतीतधर्मेणैवोपमित्यव्याघात । न च तथा सति सत्यवाद्यय सत्य

**उ० :**—सत्रोध्यार्थेनैवान्वयादिति भाव । **भेद इति ।** आशीर्विहितलोट्प्रत्ययस्यानागतेष्टविषयार्थकत्वात्कीर्तिनैवान्वयो न तु विद्यमाने गङ्गाप्रवाहे । एव यथा गङ्गा प्रवहति तथा कीर्ति प्रवहत्वित्यर्थे विधेर्भेद इति भाव । ननु प्रवहणस्य सिद्धत्वेऽपि कस्यचिदनागतार्थस्य गङ्गानिष्ठस्य विधिविषयत्व स्यादत आह— **एवंविधस्येति । असंभवादिति ।** उपमेयेऽसम्भवादित्यर्थ । वस्तुतस्तादृशधर्मांतरस्य सत्त्वेऽपि तस्य प्रकृत्यर्थत्वाभावान्न तत्र विध्यर्थान्वयसम्भव इति बोध्यम् । **विध्यादिभेद इति ।** यद्यपि विधेरेकमात्रान्वयिनो न भेदस्तथाऽपि व्यत्यास एवात्र भेदपदार्थ । नन्विवपदेन धर्मान्तरेणैव साम्य बोध्यतामुपात्तधर्मस्तूपमेय एवान्वेत्विति कथ लिङ्गादिभेदो दोष इति शङ्कते—**नन्विति । अतिरिक्तम् ।**

**प्रभा :**—जनै ' इत्यादौ प्रार्थ्यमानताविशिष्टा श्रीवृद्धिर्नोपमानमिति द्रष्टव्यम् । केचित्तु विधीयमानधर्मान्तरमेवोपमाने गङ्गाया स्यादत आह—*एकजातीयकस्येति । तथा च तदसम्भव*

सत्यमेवैतत् । किं तु स्थितेषु प्रयोगेषु समर्थनमिदं न तु सर्वथा निरवद्यम् प्रस्तुतवस्तुप्रतीतिव्याघातादिति सचेतस एवात्र प्रमाणम् ।

असादृश्यासंभवावप्युपमायाम् अनुचितार्थतायामेव पर्यवस्यतः । यथा—

'प्रश्नामि काव्यशशिनं विततार्थरश्मिम्' ( वामन's सूत्रवृत्ति २ ४. )

अत्र काव्यस्य शशिना अर्थानां च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम् ।

---

(We reply ) It is quite correct But this sort of explanation is with regard to usages that have come to stay It is not, however, completely faultless, as there does occur a marring of the understanding of the matter under consideration Men of taste alone are the authority in this matter

Dissimilarity and Improbability also resolve into Impropriety To illustrate

I compose this moon of the poem from which spread out the rays of meaning !

Here as the similarity of poem to the moon, and that of meaning to rays, is nowhere felt, the defect is Impropriety

---

प्रदीपः – वदतीति पर्याप्तौ सत्य वदतीति पुनरुक्तमिति वाच्यम् । 'रैपोष पुष्णाति' इत्याद्यनुप्रयोगवददोषत्वात् । रैपोषमित्यत्रार्थान्वयेन पोषणस्यैवाप्याजानिकसत्यवादित्वस्य प्रतीतेरिति । सत्यमात्थ । किं तु स्थितेष्वनुप्रयोगेषु रुचितया पुनरुक्तिमात्रसमर्थनं न तु सर्वथैव तन्निरवद्यम् । प्रस्तुतस्य रसादे प्रतीतिस्खलनात् । न च तदसिद्धम् । सहृदयसंवे-

---

उ० : – कालविशेषाघ्रानरस्कम् । उपात्तम् । उच्चारितपदबोध्यम् । प्रतीयमानम् । अध्याहारलभ्यम् । न दोष इति । एवं काम इवाय राजा भातीत्यादौ सौंदर्यादिनाऽनुपात्तेन साम्यप्रतीतौ पश्चात् क्रियालभ्यकालभेदो यथा कामोऽभात् एनमय भानीत्याकारो न दोष । कामसदृशश्चुदरोऽय भातीति प्रतीते । यथेति । यथोपात्तसत्यवादित्वमेव साधर्म्यं, तच्च भिन्नकालमेव, युधिष्ठिरे वर्तमानसत्यवचनाभावात्, धर्मेतर तु नास्त्येवैक्यभिमान । सत्य-

---

प्रभा : – इति व्याचख्यु । उपात्तधर्मस्यैवेत्यादिना बोधन प्रक्रमभङ्गं चानादृत्य दूषते—भन्यिति । रैपोषमित्यनुप्रयोगेऽपि कथ पुनरुक्तताया अदोषत्वं तत्राह—अर्थान्वयेनेति ।

निपेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधारा दिनार्धभाजः परिवेषिणोऽर्कात् ॥१९७॥ (—)

( Cited in भामह's काव्यालंकार २ ४७ )

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलात् निष्पतन्त्यो न संभवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति ।

---

There seemed to pour forth from his mouth, as he stood amidst the circle of the bow, dazzling arrows like burning streams of water from the sun with the halo, at mid day! ( 197 )

Here burning streams of water as emerging from the sun are improbable Thus the matter which is being described fosters Impropriety itself

---

**प्रदीपः**—यत्वात् । किं च उपात्तमनादृत्य प्रतीतेनोपमा इति तुच्छम् । उपात्तक्रिययैव तद्विवक्षणात् । असादृश्यासंभवावप्युपमादूषणे अनुचितार्थतायामेव पर्यवस्यत । यथा—'प्रभामि काव्यशशिनं विततार्थरश्मिम् ।' अत्र काव्यस्य शशिनाऽर्थानां च रश्मिभि साधर्म्यं न क्वापि प्रसिद्धमिति तत्रोपमानिबन्धनमनुचितार्थमिति । **निपेतुरिति** ।

---

**उ०**ः—**वादीति** । सत्यवदनशीलत्व धर्मांतरमिवार्थ इति भाव । **अर्थव्ययेनेति** । न तु कार्पण्येन यथाकथंचिदित्यर्थ । धनकृत पोषणमित्यर्थलाभाय रैपोषमित्युक्तेर्न वैयर्थ्यम् । रैपोषमित्यत्र पुषे प्रयोग साधुत्वार्थ एव । **आजानिकेति** । स्वाभाविकेत्यर्थ । यथा युधिष्ठिरो लोभादिना न सत्य वक्ति किं तु तच्छीलत्वात्, तथाऽयमपीत्यर्थलाभान्न वैयर्थ्यमिति भाव । एव गगेवेत्यादावप्युज्ज्वलेत्यादिपदाध्याहारेण दोषोद्धार इत्याशय । एतादृशान्वयाध्याहारादिकल्पनमानुभविकमित्याशयवानाह—**सत्यमिति** । **स्थितेति** । रैपोषमित्यादिषु साधुत्वार्थं नियमितेषु कथंचित्समर्थनमित्यर्थ । **उपात्तमिति** । उपात्तधर्ममित्यर्थ । **तुच्छमिति** । श्रुतहान्यश्रुतकल्पनाभ्यामास्वादप्रकर्षप्रतिबन्धादिति भाव । तदाह—**उपात्तेति** । ( **निपेतुरिति** । ) आस्यादिवेत्युत्प्रेक्षा । तूणाद्बाणाकर्षणे विलम्ब स्यादिति

---

**प्रभा**ः—पोषणसामान्ये धनव्ययकृतपोषणाभेदबोधार्थतया नानुप्रयोगे पौनरुक्त्यदोष । एव सत्यवदनसामान्यस्य स्वाभाविकयुधिष्ठिरसबन्धिसत्यवदनसमताबोधरूपप्रयोजनसत्त्वान्न पुनरुक्तदोष इत्यर्थ । असंभवमुदाहरति—**निपेतुरिति** । दृष्टो वारिधारा उपमान-

उत्प्रेक्षायामपि, संभावनं ध्रुवेवादय एव शब्दा वक्तुं सहन्ते, न यथाशब्दोऽपि । केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं पर्याप्तत्वात् तस्य चास्यामविवक्षितत्वादिति तत्राशक्तिरस्यावाचकत्वं दोषः । यथा—

उदयौ दीर्घिकागर्भान्मुकुलं मेचकोत्पलम् ।
नारीलोचनचातुर्यशङ्कासङ्कुचितं यथा ॥ १९८ ॥ (—)

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वात् निरुपाख्यप्रख्यम्,

---

*Even in Utprekṣā, it is only the words dhruva, iva etc that are* capable of expressing the fancying—not the word *yathā* also For the latter is adequate to express only similarity And as similarity is not sought to be expressed here (in Utprekṣā), its incapacity there is the Defect of Non-expressiveness To illustrate —

From inside the pond there shot forth a blue lotus that was (yet) a bud, *as if due to its having shrunk in fear of the charm* (चातुर्य) *of* the eye of the lady! (198)

Also a matter that is fancied is akin to things that are non substantial owing to its being destitute of a real *form* When, for the

---

प्रदीपः – अत्रापि ज्वलदम्बुधारायाः सूर्यमण्डलान्निपतनमसंभवीति तन्निबन्धनमनौचित्यं पुष्णाति । उत्प्रेक्षायामपि ध्रुवेवादय एव शब्दा व्यञ्जकतामुत्सहन्ते, न यथाशब्दोऽपि । केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं समर्थत्वात् । अत उत्प्रेक्षायां यथाशब्दोपादानेऽवाचकत्वमेव । यथा—उदयाविति । निर्विषयत्वमप्युत्प्रेक्षादूषणमनुचितार्थत्वमेव । यत्तात्त्विकरूपाभावान्निरुपाख्यप्रख्य तत्समर्थनाय यदर्थान्तर

---

उ० : – भाव । धनुर्मंडले परिवेषश्च चित्रप्रनिर्भिन्नभागापन्ने । (उपजातिश्छन्द ।) अनौचित्यमिति । अप्रयुक्तत्वसामर्थ्यमप्यत्रेति बोध्यम् । ( उदयाविति । दीर्घिका वापी । ) मुकुलं मुकुलभावापन्नम् । मेचकं नीलम् । उत्प्रेक्षादूषणम् । उत्प्रेक्षाविषयसमर्थकार्थान्तरन्यासदूषणम् । निरुपाख्यम् । अलीकशशविषाणादि । तत्प्रख्यं तत्तुल्यम् । तत्र हेतुरुत्प्रेक्षाविषयस्य तात्त्विकरूपा-

---

प्रभा : – तथा नोपपद्यन्त इत्यनुचितार्थत्वदोष इत्याह—अत्रापीति । उत्प्रेक्षादोषमस्य वाचकत्वेऽन्तर्भावयति—उत्प्रेक्षायामपीति । केवलस्येति । प्रासपदादयमभिव्याहृतस्येत्यर्थः । उत्प्रेक्षादोषमुदाहरति—यथेति । 'नारीलोचनचातुर्यशङ्कासंकुचितं ध्रुवम्' इति शुद्ध पाठः । निरुपाख्येति । अभावरूपम् ।

तत्समर्थनाय यत् अर्थान्तरन्यासोपादानम् तत् आलेख्यमिव गगनतलेऽत्यन्तमसमीचीनमिति निर्विषयत्वमेतस्य अनुचितार्थतैव दोषः । यथा—

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसामतीव ॥ १९९ ॥

( कुमारसंभव १ १२ )

अत्राचेतनस्य तमसो दिवाकरात् त्रास एव न संभवतीति कुत एव तत्प्रयोजितमद्रिणा परित्राणम् । संभावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः ।

साधारणविशेषणवशादेव समासोक्तिरुक्तमपि उपमानविशेष प्रका

substantiation thereof, an Arthantara nyasa is used, it is extremely ill suited, like sketching in air Thus Absence-of-scope for it is the same as Impropriety To illustrate —

Which (Himalaya) shelters from the Sun the Darkness lurking in its caves by daytime, becoming frightened as though Indeed towards one who howsoever petty takes refuge (with them), those with heads aloft very much cherish a feeling of kinship! (199)

Here, as the fear itself of the Sun, on the part of the inanimate Darkness is improbable, how at all could there be the sheltering by the mountain! But when it is apprehended in its imaginary form, no impropriety regarding it presents itself Thus an attempt to substantiate it is nothing short of futile

A Samasokti suggests the particular Upamana verily in virtue of the attributes applicable in common So when on its (i e. of the Upamana) being stated here (i e in Samasokti) over again, there results the defect of Peing-ill-suited-for-statement, for want of

प्रदीपः—न्यासोपादानं तद्रूपं हि तत् यथा—दिवाकरादिति । अत्र तमसस्त्रास एवासंभवी । तमसोऽचेतनत्वात् । तत्कथं तत्प्रयुक्तमद्रिणा तत्परित्राणम् । उत्प्रेक्षितत्राणवत्तया प्रतीतस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः । यत्तु समासोक्तौ

उ०ः—भाव । तत् । निर्विषयत्वम् । अभित्तिचित्रसदृशाभावात्तदुदाहरणम् । दिवाकरादिति । ( कुमारसंभवे प्रथमसर्गे हिमालयवर्णनम् । ) भीतं त्रस्तम् । ( उपजातिश्छन्दः । ) तत्परित्राणमिति । अद्रेरप्यचेतनत्वादिदमप्युत्प्रेक्षा । त्रासस्य चित्तवृत्तिविशेषरूपस्य तत्परित्राणस्य च चेतनधर्मत्वात् तदाह—उत्प्रे-

शयतीति तस्याश्च पुनरुपादाने प्रयोजनाभावात् अनुपादेयता यत्, तत् अपुष्टार्थत्वं पुनरुक्तता वा दोषः। यथा—

स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया।
अतनुमानपरिग्रहया स्थितं रुचिरया चिरयाऽपि दिनश्रिया ॥२००॥

(हरविजय ३.१७)

अत्र तिग्मरुचेः ककुभां च यथा सदृशविशेषणवशेन व्यक्तिविशेष-

---

purpose it is the same as Redundancy or Tautology To illustrate :—

As the sun touched the Quarters with the rays (by ślesa with the hands), the Glory of Day, bright and of long standing, with the heat (by ślesa torments) augmented, came to assume a size (by ślesa: huffiness) none small, *like a beloved* ! (200)

Here, the Sun and the Quarters suggest themselves as being the Hero and the Heroines, due to the similarity of attributes and owing to

---

प्रदीपः—साधारणविशेषणवशादेवोपमानप्रतीतौ प्रयोजनाभावेन तदुपादानवैयर्थ्यं तदपुष्टार्थत्वं पुनरुक्तता वा दोषः। यथा—स्पृशतीति। अत्र सदृशविशेषणवशेन लिङ्गविशेषपरिग्रहाच्च तिग्मरुचेर्नायकतया ककुभां तु नायिकात्वेन व्यक्तिः। तथा ग्रीष्मदिवसश्रियोऽपि तत एव प्रतिनायिकात्वेन भविष्यतीति दयितयेत्यपुष्टार्थम्। अर्थेन प्रतीतस्योपादाने यदि पुनरुक्तिस्तदाऽर्थपुनरुक्तत्वं दोषः। अन्यस्यापुष्टत्वे

---

उ०:—क्षिप्तमाणमनयेति। स्पृशतीति। तिग्मरुचौ सूर्ये ककुभो दिशः करैः स्पृशति सति दिनश्रिया ग्रीष्मदिवसश्रिया अतनुमानपरिग्रहया स्थितम्। करैः रश्मिभिः हस्तैश्च। तापो ज्वाला खेदश्च। मानं परिमाणं कोपश्च। चिरया दीर्घया चिरकालीनया च। (हरविजये तृतीयसर्गे) ग्रीष्मवर्णनमिदम्। (द्रुतविलम्बितं वृत्तम्।) अत्रेति। सूर्यकरेण स्त्रीस्पर्शकर्तृत्वं नायकोचितं विशेषणम्, दिशां च करेण पुरुषस्पृश्यत्वं नायिकायोग्यं विशेषणम्, (तेन) सूर्ये पुंलिङ्गत्वात् दिशां स्त्रीलिङ्गत्वाच्च। तत एवेति। अतनुमानपरिग्रहयेति विशेषणात् स्त्रीलिङ्गत्वाच्च। नन्विति। यथा दयिते दयितां करैः स्पृशति सति दयितान्तरस्य तापस्तथा रवौ करैर्दिशः स्पृशति ग्रीष्मदिवसश्रियोऽपि ताप

---

प्रभा:—स्पृशति तिग्मरुचावियिति। अत्र तत्प्राप्तेः [illegible] पुंलिङ्गत्वेन च तिग्मरुचेर्नायकत्वं ककुभां च [illegible]

परिग्रहेण च नायकतया नायिकात्वेन च व्यक्तिः, तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति किं दयितयेति स्वशब्दोपादानेन ।

श्लेषोपमायास्तु स विषयः, यत्रोपमानस्योपादानमन्तरेण साधारणेष्वपि विशेषणेषु न तथा प्रतीतिः । यथा—

स्वयं च पल्लवाताम्रभास्वत्करविराजिनी ।
प्रभातसंध्येवास्वापफललुब्धेहितप्रदा ॥ २०१ ॥ (—)

the use of the particular gender (i. e Fem.). So would the Glory-of-Summer-day suggest itself as being the counter-heroine. Then where is the need of the specific mention of the word "Beloved" for it ?

That is, however, the province of Upamā based on Śleṣa, where, unless it (i. e. Upamāna) is stated, there cannot be a suggestion of the Upamāna, like that, even though the attributes are applicable in common. To illustrate :—

And as for herself, bright with her hands ruddy like leaves and lustrous, she fulfilled the desires of those who coveted the fruit not easy to attain (i e. Mokṣa), like Morning Twilight which looks splendid with the rays of the sun ruddy like leaves, and fulfils the desires of those who longed for the fruit meant for such as are free from sleepiness ! (201)

प्रदीपः—श्लेषोपमा निर्विषया स्यादिति चेत् । न । स हि तस्या विषयो यत्रोपमानोपादानं विना श्लिष्टेष्वपि विशेषणेषु न स्फुटा प्रतिपत्तिः । यथा—स्वयं चेति । अत्र प्रभातसंध्याया अनुपादाने न स्फुटा प्रतीतिः । अप्रस्तुतप्रशंसायामप्युपमेयस्योपादानवैयर्थ्यं यत्तदपुष्टार्थत्वमेव दोषः । तत्राप्युपमेयमनयैव रीत्याऽवगन्तव्यं न पुनः शब्दप्रयोगेण

उ०ः—इत्येवमत्रापि श्लेषोऽस्त्विति भावः । न स्फुटेति । अयमाशयः । यत्रोपमानस्य स्वपदोपादानेऽपि न समासोक्तित्यागस्तत्रावश्यकसमासोक्त्यैव निर्वाहे उपमानपदोपादानं व्यर्थम् । यथा स्पृशतीत्यादौ । अत्र दयितयेत्युपादानेऽपि रसेनोपकत्वं ककुभां नायिकात्वं च समासोक्त्यैवेति तस्या आवश्यकत्वम् । यत्र तूपमानपदोपादाने समासोक्तिनिवृत्तिस्तदनुपादाने च यत्रोपमानाप्रतीतिः उपात्तसाधारणधर्माणामुपमेयमात्रान्विततयैव प्रतीतेः, तत्रोपमाया एव चमत्कारित्वाय देयं तत्पदम् । यथा—स्वयं चेत्यादौ । गौरीपक्षे पल्लववदाताम्रौ भास्वन्तौ च यौ करौ ताभ्यां विराजिनी । सुखेनाप्यते इति स्वापं, खल् प्रत्ययः । न

प्रभाः—संभावनाद्दयितयेत्यपुष्टार्थम् । श्लेषोपमेति । श्लेषमूलकोपमेत्यर्थः । स्वयं चेति । अत्र तु प्रभातसंध्याया अनुक्तौ न स्फुटा प्रतीतिरियददोषः । अनयैवेति ।

अप्रस्तुतप्रशंसायामपि उपमेयम् अनयैव रीत्या प्रतीत न पुन' प्रयोगेण कदर्थतां नेयम् । यथा—

> आहूतेषु विहङ्गमेषु मशको नायान्पुरो वार्यते
> मध्येवारिधि वा वसस्तृणमणिर्धत्ते मणीनां रुचम् ।
> खद्योतोऽपि न कम्पते प्रचलितु मध्येऽपि तेजस्विना
> धिक्सामान्यमचतेन प्रभुमिवानामृष्टतत्त्वान्तरम् ॥ २०२ ॥

(भल्लटशतक ६९)

अत्र अचेतनस्य प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेणाभिव्यक्तेरयुक्तमेव पुनः कथनम् ।

---

*In Aprastuta praśamsa also, the Upameya which is suggested in this very manner,* should not be rendered nugatory by being mentioned over again To illustrate —

The fly, if it comes forward on the winged creatures being summoned, cannot be resisted. The coral glistening amidst the ocean (pretends that it) possesses the splendour of jewels Nor does the fire-fly tremble to parade in the very midst of the luminous bodies Fie upon the dead Universal which is like the master by whom no cognizance is taken of the difference between one object and another! (202)

Here, since the indiscreet master is suggested by the Universal as qualified by the attributes, which is the matter not under consideration, its mention over again is surely improper

---

प्रदीपः—दुष्टता नेयम् । यथा—आहूतेष्विति । अत्राचेतस प्रभोरुपमेयस्याप्रस्तुतविशिष्टसामान्यद्वारेणाभिव्यक्तिसमवादयुक्तमेव शब्देन कथनमित्यपुष्टार्थत्व पुनरुक्तता वेति ।

---

उ०ः—स्वापमस्वाप दु स्वप्राप तादृश यफल मोक्षादि तत्र ये लुब्धास्तेषामीहितप्रदा इष्टदात्री । प्रभातसन्ध्यापक्षे तु पङ्कजताम्रैर्भास्वत्करै सूर्यकिरणैर्विराजिनी । अस्वापो निद्राभाव तद्रूपफललुब्धे जने हितप्रदा इष्टदात्री । अत्रोपमानपदोपादाने समासोक्तिल्यागादिति । उपमेयस्य । प्रस्तुतस्य । (आहूतेष्विति । भल्लटशतके ६९ पद्यम् ।) विहङ्गमेषु पक्षिषु आहूतेषु पुर अग्रे आयान् आगच्छन् मशको न वार्यते । तृणमणि काचादिमणि प्रवाल वा । मणीना

---

प्रभाः—श्लिष्टसाधारणादिविशेषणसामर्थ्यनेयथ । आहूतेषु विहङ्गमेष्विति । अत्र तादृश सामान्य धिगित्येतावतैवाविवेकिप्रभोरवगतिसमवात्पुनस्तदुक्तिरयुक्तेत्यपुष्टार्थत्वमप्रस्तुतप्रशसाया दोष । उपसहरति—तदेत इति । श्लोकजातस्तमाविता उक्तदोषसामान्यधर्मा

तदेतेऽलंकारदोषाः यथासम्भविनोऽन्येऽप्येवजातीयकाः पूर्वोक्तैव दोष-जात्या अन्तर्भाविताः न पृथक् प्रतिपादनमर्हन्तीति ।

---

Thus these defects of figures and also others like these, occurring according to the nature of the case, are comprehended by the class of defects already specified Hence they require no separate mention

---

**प्रदीप**: — तदेतेऽलङ्कारदोषा यथासम्भवमन्येऽप्येवजातीयका प्रोक्तजात्यन्तर्भाविता इति पृथम् प्रतिपादनमर्हन्तीति कल्याणमास्ताम् ॥

सम्पूर्णं काव्यलक्षणम् ।

ज्येष्ठे सर्वगुणे कनीयसि वयोमात्रेण पात्रे धिया
मात्रेण स्मरगर्वखर्वणपरे निष्ठाप्रतिष्ठाश्रये ।

---

**उ०**: — मध्ये धुरि अते वा वसन् मणीना रत्नाना रुच कान्ति धत्ते । खद्योतोऽपि तेजस्विनामग्निसूर्यादीना मध्ये अपिशब्दादग्रे वा प्रचलितु गतु न कम्पते न बिभेति । एतत्सामान्य अचेतन अविचारितपदार्थगतविशेष प्रभुमिव धिक् । ( शार्दूलविक्रीडित छन्द । ) अत्र । आद्यपादत्रयेऽपि । **अप्रस्तुतनिष्ठसामान्येति** । अनाकलितविशेषत्वरूपेत्यर्थ । **तत्** तस्मात् । **एते** उक्ता । **एवंजातीयका इति** । यथा समासोक्तौ नपुसके नायकव्यवहारसमारोप । 'दिलीप इति राजेंदुरिंदु क्षीरनिधाविव ।' इत्यत्र राजनि इदुतादात्म्यारोप उपमाविरुद्धस्तदेतदनुचितार्थमेव । यथा वा, भिन्नाश्रययोर्विरोधवर्णनम् । यथो-ष्णाभासस्तनयाया अपि जल शीतलमियादौ । एकाश्रयत्वेनैव विरोधस्योक्ते-रिदमनभिहितवाच्यमेव । **प्रोक्तजातीति** । सप्तमोक्तदोषजातीत्यर्थ । **संपूर्णमिति** । लेशतोऽपि न्यूनताविरहात् । **काव्यलक्षणम्** । काव्य लक्ष्यते स्वरूपतो विशेषतश्च ज्ञाप्यतेऽनेनेति प्रकृतग्रन्थरूपमिति शिवम् ॥

---

**प्रभा**: — (न²) विक्रान्ता । एव च पृथक्प्रतिपादने पुनरुक्ततादोषात्तदभावो गुण एवेति तात्पर्यम् ॥

संपूर्णमिदं काव्यलक्षणम् ।

इत्येष मार्गो विदुषां विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत् ।
न तद्विचित्रं यदमुत्र सम्यग्विनिर्मिता संघटनैव हेतुः ॥ १ ॥

इति काव्यप्रकाशेऽर्थालंकारनिर्णयो नाम दशम उल्लासः ।

## ॥ समाप्तश्चायं काव्यप्रकाशः ॥

*Thus is complete this Definition of Poetry*

That this path of the learned, though varied, appears unvaried like this, is not to be wondered at Since the well-effected fusion is responsible for it.

Thus ends the Tenth Flash, named as "the Determination of the Figures of Sense" in the "Light of Poetry".

FINISHED IS THIS KĀVYA-PRAKĀSA.

प्रदीपः – श्रीहर्ष त्रिदिवं गते मयि मनोहीने च कः शोधयेत्
दनाशुद्धमहो महत्तु विधिना भारोऽयमारोपितः ॥ १ ॥
परिशीलयन्तु सन्तो मनसा सतोषशीलेन ।
इममद्भुत प्रदीपं प्रकाशमपि यः प्रकाशयति ॥ २ ॥
दीपिकाद्वितय कन्ये प्रदीपद्वितय सुतौ ।
स्वमतौ सम्यगुत्पाद्य गोविन्दः शर्म विन्दति ॥ ३ ॥

उ० : – 'शृंगवेरपुराधीशरामप्रेरणया दृढम् ।
सद्युक्तिमुक्तामदर्भैर्नद्वच्छुतिमनोहरे ॥ १ ॥
सेतौ नागेशनद्धेऽस्मिन्नलङ्कारमहोदधेः ।
सता मति सचरता यावच्चन्द्रदिवाकरौ ॥ २ ॥
काव्यप्रदीपकोद्योत शिष्ययोरर्पितो मया ।
यन्निर्मितौ सहायो मे जाता सा प्रतिभा सखी ॥ ३ ॥

प्रभाः – काव्यप्रकाशगम्भीरभावबोधो न चान्यतः ।
इति प्रदीपगम्भीरभावार्थद्योतनं कृतम् ॥
अनेन प्रीयतां देवो नृसिंहो रमया युतः ।
कुलदैवतमस्माकं सर्वभूतात्मना स्थितः ॥

---

**प्रदीप**।—इति श्रीमहामहोपाध्यायश्रीगोविन्दविरचिते काव्यप्रदीपेऽर्थालंकारनिर्णयो नाम दशम उल्लासः।

॥ समाप्तोऽयं ग्रन्थः ॥

---

**उ०**:—इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते लघुकाव्यप्रदीपोद्योते दशम उल्लासः।

---

**प्रभा**:—इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सदुपाह्वश्रीविठ्ठलसूरिसूनुरामभट्टात्मजवैद्यनाथरचितायां प्रदीपव्याख्यायां प्रभाख्यायां [illegible]।

समाप्तोऽयं ग्रन्थः।

॥ शुभं भूयात् ॥

# APPENDIX A

## रुचकक्रुते सङ्केते

## ॥ अथ दशम उल्लासः ॥

उपमानस्य चन्द्रादेर्विशेषणान्युपमानस्य विशेष( ? ष्य )रूपतया व्यवस्थापका । **षष्ठीयदिति ।** यथा षष्ठी यदुत्तरा तदेव विशिनष्टि । श्रुत्यैव च सबन्धमुभयाधारमभिधत्ते तथैवाय यथेवादि । सममेव साम्य साधारणो धर्मं । तुल्यता द्विष्ठरूप सादृश्यम् । भुजग कामुक अबररत्न सूय । **अलंकारांतर चेति ।** तद्ध्यनुप्रासादि श्लिष्टतरमपि । काव्ये यद्यव्यभिचारितयैव तद्व्यवहारो गण्यते तदा तेन सहोपमादीना सकरससृष्टी स्यातामिति केवलतयैषा विषयो नावकल्पते । **तद्दिति**–स च स्फुटतरो रसादिरर्थ तथालङ्कारांतर मिति । नपुसकमनपुसकेनेति नपुसकैकशेष । अस्फुटश्च रसादिर्गुणीभूतव्यग्ये गृहीत इत्यस्फुटतरोत्र गृह्यते इति सस्पर्शपदेन ध्वनितम् । **मनो यिपकल्प** विषसदृशमित्यर्थ । न तु विषमेवेति । प्रकृत्यर्थसदृशोर्थं कल्पवादीना स्मरणात् । उपमाया एव हीदमुदाहरण न तु रूपकस्य । प्रत्ययादमुत समारोपाप्रतिपत्ते । सकलकरणपरविश्राम श्रीवितरण न सरसकाव्यस्य । दृश्यते अथवा श्रूयते सदृशमशाशमात्रेण ॥ सरसकाव्यस्य सदृशमिंद्रियाणा परनिर्वृतिप्रद नोपलभ्यते न वा श्रूयत इत्यर्थ । **असितेति**–अत्रोपमानो पमेययोरेकपदानुप्रवेश । पूर्वत्र वर्तते पृथक् निर्दिष्ट इति विशेषा पुनरुदाहरणम् । अत पुर इवाचरत्यत पुरीयति अधिकरणाच्चेति वक्तव्येमिति क्यच । क्यच्क्यङ्वाच्यमाचरणमत्र साधारणो धर्मं । विधवति विधुरिवाचरति सर्वप्रातिपदिकेभ्य क्विबित्याचारे इति क्विप् । मधुलुब्धान्तो परिभ्रमन्मरिष्यसि कण्टककलितानि केतकीवनानि । मालतीकुसुमसदृक्ष भ्रमर भ्रमन प्राप्स्यसि ॥ यद्यपि तेन तुल्यमित्यादौ तुल्यादिपदानामुपमेय एव विश्रांति रित्युक्त तथापीह कुसुमेन सदृक्षमिति सदृक्षशब्दाभिधेयस्योत्कृष्टतरगुणत्वेनाप्राप्यता प्रतिपादनादुपमानत्व बलादायात तस्य च साक्षादनिर्देशादुपमानस्यैव लोप । **मृगनयनेति** । मृगनयने इव नयने यस्या । अत्र गुणद्योतकोपमान शब्दाना त्रयाणा लोप । सप्तम्युपमानपूर्वपदस्येत्यादिना हि प्रकरणेन यदुत्तरपद लुप्यते तत् कण्ठेकाल इत्यादाविव सर्वत्र प्रथमोत्पादितसमासस्यैव समाससनि योगेनोत्तरपदलोपविधानात् । तदानीं च तस्यैवोत्तरपदत्वात् । बहुव्रीहौ तु विहिते द्वितीय स्योत्तरपदत्वमिति कुत तस्योपमेयभूतस्य लोप । यदातु मृगशब्द एव लक्षणया मृगनयनवृत्तिस्तदा मृग एव नयने यस्या इत्युष्ट्रमुखवद्व्यधिकरणसमासस्यैव विषयो न त्वस्योपमा

समासस्येति नास्ति स्थानमुपमाया निर्लोपिन्या । अतएवोक्तं **यद्देति** । उपमेयेनोपमान धुराधिरूढेन करणात्मना उपमा उपमानस्योपमेयतापादना उपमेयोपमा । सशयस्तु ससदेहो यदि सशय्यमानस्य तद्वितरस्मादुत्तरकाल भेद प्रतिपादित स्यात् । न वा। शुद्धस्यैव तस्य विच्छित्त्या प्रतिपादितत्वात् । **अनपह्नुतेति** । अनयोरपह्नुतभेदत्वे अतिशयोक्तेर्भावात् । **आरोपितधर्म एव** तस्य प्रसिद्धतरत्वेनानुकूल्यात् । यस्य रणान्त पुरे करे कुर्वतो मण्डलाग्रलताम् । रससमुख्यपि सहसा पराङ्मुखीभवति रिपुसेना । **सांगमिति** । न यत्र तस्यैव रूपणमपि तु तदगस्यापि । अगमत्रोपस्करणमात्र न स्वारंभकमेव लक्ष्याव्याप्तिप्रसगात् । रहासि रहस्यानि । दक्ष प्रजापति । भीमो भीम सेन । सन् यशोन्वय स एव सद्वश शोभनो वेणु । **एवमिति** यथा—विलसदमरना रीनेत्रनीलाब्जपण्डान्यधिवसति सदा य सयमाध कृतानि । न [illegible] ललितकलापे वर्तते यो मयूरे वितरतु स कुमारो ब्रह्मचर्यश्रिय व ॥ तथाचोक्त-इद ते केनोक्तमित्यादि । **श्लिष्टे समाने** । लब्ध्वा तव बाहुस्पर्श यस्या स कोप्युल्लास । जयलक्ष्मीस्तव विरहे न भवतु सा दुर्बला ननु सा ॥ साशब्दस्त्वत्र दौर्बल्यस्याविप्रतिपत्तिं व्यनक्ति । तत्सदृशीमित्यत्र वहतीत्य पेक्षणीयम् । यो लघु स पदमवाप्य पतेदिति सबध । शेखर शृगम् । राजशुक कश्चिदुत्कृ ष्टजातिशाली शुक । **मुखादिति** लोकप्रसिद्धम् । अत्र मुखमाकृति अपेक्षितक्रिय चैतदपादानम् । जात्या वेदयमेतच्छरीरादेतदल्पतरं जातमित्यर्थं । प्रतियातन सशोधनम् । **श्लेष** इति विशेष्यपदस्यापि श्लिष्टता । **समासोक्तिरिति** समानविशेषणत्वम् । **सादृश्यमात्रमिति** । प्रतीयमानेनापि केनचित् धर्मेणानुगुण्यम् । पुस्त्व पुरुषस्य भाव । तस्येव चारकृत्य च अध पाताल निकृष्टा गतिश्च । प्रणयने याच्ञानिमित्तम् । न महानपि स्वल्पोपि । पुरुषोत्तमो विष्णु सत्पुरुषश्च । एष न शब्दश्लेषोभिधाया एकत्र नियमानियतत्वात् । नापि विशेष्यपदस्य श्लिष्टत्वे शब्दशक्तिमूल ध्वनिर्भगवद्वृत्तान्तस्यात्र वाच्यत्वात् । तस्य चाप्रस्तुतत्वात् । प्रस्तुतार्थमुखेन यत्राप्रस्तुतो र्थो विशेष्यद्वारेणावगम्यते स तस्य ध्वनेर्विषय इत्युक्तम् । सत्पुरुषचरितमेवात्र वाच्य प्रस्तुत च तन्मुखेन चेतरार्थप्रतिपत्ति । तत शब्दशक्त्युद्भव एवायमिति चेत् । न । तस्य वाच्यत्वासभवात् । नह्युत्कृष्टतमस्यापि पुरुषस्य सत्यत एवास्ति शक्तिर्विश्वमभ्युद्धर्तुमा क्षिप्यमाणस्य [illegible] तस्य गुणवृत्त्या तद्वर्णनमविरुद्ध गुणभूतत्वादित्यप्रस्तुतप्रशसैवैषा । पादा रश्मय पादौ चरणौ । जडधामता शीतलतेजस्त्व मूर्खास्पदताच । अहो इति यद्यथ । कल्प प्रौढ । रसनाविपर्यय असत्यभाषित्वमपि । चापलमश्रोतव्यश्रवणमपि । मदो गर्वोपि । शून्यकरत्वमदातृत्वमपि । अन्यलटभत्वमपि अन्या कापि वर्तनच्छाया । सामा शके यदि वा श्यामा सामान्यप्रजापते रेखैव न भवति ॥ श्यामा योषित् । रेखा मर्यादा । **एवमिति** यथा व्यतिरेके । तत्र हि एकस्य बहुभ्यो व्यतिरेकमाला । व्यतिरेकतो यथा हरवन विषमदृष्टिर्हरिवत्र विभो विधूतविततवृष । रविवन्न चातिदु सहकरतापितभू कदाचिदसीति ॥ **साधारणधर्मादीना** साधारणधर्माणामुपमानोपमेयानाम् । साधारणधर्माणा

प्रतिबिंबत्वेन नियतनिष्ठतया कथ साधारणधर्मतेति चेत् न वस्तुतो हि तेषा धर्माणामभेद इति साधारणता शब्दान्तरेण प्रतिपादितत्वात् तु प्रतिबिंबन इति नास्ति कश्चिद्विरोध । कृपणाना धन नागाना फणमणि केसराणि सिंहानाम् । कुलबालिकाना स्तना कुत स्पृश्यन्ते अमृतानाम् ॥ **श्लेषोपीति** । यद्यपि श्लेषोपकृतत्वे व्यतिरेकस्यागागिभावसंकरत्वं तथापीह विषये श्लेषे व्यतिरेक इत्येषा प्रसिद्धिर्न तु संकर इति । ततस्तदनुसरणार्थं एवैष प्रभेदो व्यतिरेकप्रकारतया व्यवस्थाप्यते । विषमादयश्च शब्दा श्लिष्टा इति अत परम् । अखण्डमण्डल श्रीमान् पश्यैष पृथिवीपति । न निशाकरवज्जातु कलावैकल्यमागत ॥ अत्र तुल्यार्थं यति कलाशब्द श्लिष्ट इति पाठ । ततो “ नित्योदितप्रतापेन त्रियामामीलितप्रभ । भास्वतानेन भूपेन भास्वानेष विनिर्जित ॥ अत्र ह्याक्षिप्तैवोपमा । भास्वतेति श्लिष्ट इति पाठ । तस्य च श्लिष्टत्व भास्वरत्वस्य समारोपात् रवित्वस्य प्रतिपादनात् । निषेध इवेति न तु निषेध एव । प्रधानस्य निषेधमुखेन विशेष एव तात्पर्यात् । अन्यत्र चोक्तम् । प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सयेति । अप्येहि किमपि कस्या अपि कृते निष्कृप भणाम्यहमथवा । अविचारितकार्यारंभिणी म्रियता न भणिष्यामि ॥ तस्या फलमस्य काव्यस्य प्रकाशन कविना प्रतिपादन न तु भावनम् । कारणमन्तरेण कार्योत्पत्तेरसंभवात् । प्रसिद्धतरकारणानुपलब्धेस्तु कार्योत्पत्तिरन्यहेतुकेति निबध्यते । तावन्मात्रलक्षणत्वाद्विभावनाया । अस्याश्च न विरोधरूपत्वम् । विरोधे द्वयोरपि परस्पर बाधात् । अत्र तु कार्योत्पत्तिरेव कारणप्रतिषेधेन बाध्यमाना प्रतिभाति । न तु विपर्ययेणापि बाध । कारणप्रतिषेधस्य हि बाध प्रतिभासमानोपि अल्पापेक्ष प्रसिद्धोपपत्त्यपेक्षया दवीयसी न विभावना प्रयोजयति । भवतु वानापि सामान्येन परस्परं बाध । तथापि न विरोधरूपत्वम् । हेतुफलभावविशेषमाश्रित्य प्रवर्तनादस्या तदपवादत्वात् । **विशेषोक्तिरिति** । लक्षणारंभ प्रयोजयति–**निद्रेति** । अत्र चलनाभावस्य निमित्त मन्मथो नाथ । गुणानामित्यत्र सिद्धेपि हेतुना नियोगे सहेतुकोसौ न सिद्ध इति तत्सिद्धयेऽर्थान्तरन्यास । गर्नी धर्मण्यपुरालो त्यन्तमलीमस । पविर्वज्रम् । बल जव सैन्य च । धाराधर खङ्ग । अनुरज्यत इत्यनुराग शोणितकृत शोणत्वमपि । स्नेहो रुधिरार्द्रत्वमपि । जडयति शीतलयति व्यामोहयति च । कश्चिदिह प्रभेद श्लेषवशादेव समासादितस्वभाव श्लेषात्मक एव । तत श्लेषेण सहास्य संकरत्वशंका न कार्या भेदाभावात् । एवमन्यत्रापि परीक्ष्यम् । डिंभो बाल । तद्विषया स्वभावोक्ति यथा–धूलिधूसरतनवो राज्यस्थितिरचनाकल्पितैकनृपा । कृतमुखवाद्यविकारा क्रीडन्ति सुनिर्भरं डिंभा ॥ इति । द्राघयित्वा दीर्घीकृत्य । प्रियस्थिरेत्यादिना द्राघादेश । प्रोथोऽश्वस्य मुखाग्र तुंड मुखम् । सह दिवसनिशाभिर्दीर्घा श्वासदंडा सह मणिवलयैर्बाष्पधारा गलति । तव सुभग वियोगे तस्या उद्वेजनशीलाया सह च तनुलतया दुर्बला जीविताशा ॥ विप्रलंभो अलंकार इत्यनेन परिवृत्तिशब्दो क्रियामात्रमभिधत्त इति शंका निराकरोति । **धपुष्पाद्युपर्भावादिति** । अत्रानुमानसद्भावेपि न तेन सह वाक्यार्थीभ्रान्तिरपायो वा । **धपुष्पाद्युपर्भावादिति** । अत्रानुमानसद्भावेपि न तेन सह वाक्यार्थीभूतस्य हेतो संसृष्टिव्यवहार । उभयोरपि भिन्नदेशत्वाभावात् । अनुमानं तु हेतोरुत्थापक

तयोपकारकमिति भवत्यंगागिसकर । किंतु हेतुलक्षणमत्रास्तीत्येतावदभिसधाय हेतोरिदमुदाहृतम् । प्रणयिन्य अस्वस्था । **तद्देवेति**। परीयस्त्वादनुभावस्य तदाकारत यैव तस्योत्पत्ते । **अभिन्नेति**। निरंशस्य वस्तुनो भेदससर्गयोरभावात् । तौ हि विकल्प स्यैव व्यापार । ह्यभिन्नमपि वस्तु गौ शुक्लश्चल इति एव भिनत्ति । भिन्नमपि पदार्थजा तमय गौरयमपि गौरित्येव ससृजति । **तस्येहांगत्वादिति**–अगत्वेपि न रसवदलकार । अस्योदात्तस्य तदपवादत्वात् । **तस्मिन् हीति**। यद्यपि समाधेरपि वक्ष्यमाणस्य विषयं लक्षणमेतदास्कदयति तथापि समुचय इत्यन्वर्थसज्ञाविज्ञानादिहान्यस्य तुल्यकक्षतयै वोपादानमाश्रीयते न च तत्तत्रास्तीति भिन्न एवासौ । न **पृथगिति**। **रुद्रटोपि**–नैधान्य सदसतोयाग इति सद्योगादिना रूपातरेणामु पृथगलक्षयत् । **असता-मिति**–तत्र नवचय प्रभृते सत्यपि सत्त्वे सर्वेपामपि सत्त्वाख्यनमसत्त्वेनैव विरहिण्या भावितत्वात् । **तत्रेति**–तत्र शशिन शोभनत्व प्रकृतिसौंदर्यादशोभनत्व च धूसरत्वो पादानात् । एव चास्य सदसद्रूपस्य तादृशेनैव व्यापारेण योगादिह सदसद्योग । शशिनि धूसर इति च शोभनाशोभनत्वमुपदर्शितम् । **शल्ये शल्यान्तराणीति** शोभना शोभनस्य तादृशेनैव योग । कमलवनेषु तुषारो रूपविलासादिशालिनीषु जरा । रमणीष्वतिदुश्चरित धातुलक्ष्मीश्च नीचेषु ॥ इत्यत्रापि कमलवनस्यस्य तुषारस्य सदसतस्तादृश्यैव तरुणीनरया समुच्चय न तु कमलवनाना सतामसता तुषारेण तेषा तुल्यकक्षताविरहात् । **गुणाश्च क्रिये चेति**। अत्र गुणस्य क्रियायाश्च युगपदुपपत्तिमुदाहर्तुं पठनीयम् । कलुष च तवाहितेष्वकस्मात्सितपकेरुहसुदरश्रि चक्षु । पतित च महीपतीन्द्र तेषा वपुषि प्रस्फुटमापदा कटाक्षै ॥ इति । न **वाच्यमिति**। **रुद्रटेण** शुक्ल व्यधिकरणे वा यस्मिन् गुणक्रिये चैककालमेकस्मिन् । उपजायते देशे समुचय स्यात्तदन्योसाविति ॥ **क्रमेणेति** प्रतीकादनन्तर–श्रोणीबधस्त्यजति तनुता सेवते मध्यभाग । पद्भ्या मुक्तास्तर लगतय सश्रिता लोचनाभ्याम ॥ धत्ते वक्ष कुचसचिवतामद्वितीय तु वक्त्र तदगानाणा गुणविनिमय कल्पितो यौवनेन ॥ इति पाठ । आद्याधमेव श्लोकस्योदाहरणम् । ततेषा श्रीसहोदररत्नाभरणे हृदयमेकरसम् ॥ बिंबाधरे प्रियाणा निवेशित कुसुमबाणेन ॥ तेषा मधुराणा श्रीसहोदर रत्न कौस्तुभ । निवेशित चुबनैकसक्त कृतम् । पुन क्रमेणेत्या दिप्रतीकात्पर–मधुरमरुचिर वच खलाना अमृतमहो प्रथम पृथु व्यनक्ति । अथ कथयति मोहहेतुमतर्गतमिव हालहल विष तदेव ॥ तद्गेह नतभित्ति मदिरमिद लब्धावकाश दिव । सा धेनुर्जरती नदन्ति करिणामेता घनामा घटा ॥ स क्षुद्रो मुसलध्वनि कलमिद सगीतक योषितामाश्चर्यं दिवसै र्द्विजोयमियतीं भूमिं समारोपित ॥ अनेकस्यैव हानोपादानयोरविवक्षितत्वान परिवृत्तिरिति पाठ । अचित आकृष्ट । न **दर्शितमिति**–**रुद्रटेन** तु दर्शितम् । **प्रकृतेति**। क्वचित्प्रकृतनिष्ठ साम्यं यथा–सदय बुभुजे महाभुज सहोसोद्वेगमियं व्रजेदिति । अचिरोपनता स मेदिनीं नवपाणिग्रहणा वधूमिव ॥ इति । समुचितोपमायाम् । क्वचिदप्रकृतनिष्ठ यथा कस्याचित्तुल्ययोगितायाम् । क्वचिच

तदुभयनिष्ठ यथापह्नुत्याम् । तत्रेह नास्ति प्रकृतस्यैव सद्भावात् । व्यासगो निरोधस्तस्मात् भगो भयम् । अवगत प्रतिपाद्येन ज्ञातम् । आर्यचरित शिष्टैरनुष्ठितम् । धिषणा प्रज्ञा । युवतिरेव कामस्यास्त्र आयुधम् । **वैचित्र्याभावात् इति ।** गौणे ह्युपचारे सादृश्यप्रत्ययाद्वैचित्र्य न तु शुद्धे तद्विपर्ययात् । **कोमलेति ।** यद्यप्यव्यभिचरितयैव विकाशादीना नैरन्तर्येण जननमिहोपचारप्रयोजनव्यग्य तदसुदरमपि गुणीभूत व्यग्यनिबन्धन भवतीति च प्रतिपादितमेव तथाप्यलकारचिंताया प्रक्रान्तत्वात् तदपह्नुत्यैवावधारणगर्भमिदमभिहितमत एव तन्मयतयेवोक्तम् । **समाम्नासिपुरिति उद्भटाद्यः** प्रत्यपादयन्निति ज्ञानार्थ । हसाना सरोभि श्री सार्यते सारीक्रियते अथ सरसा हसी अन्योन्यमेवैते आत्मान केवल गरयन्ति गुरुकुर्वन्ति ॥ वाणिजक हस्तिदन्ता कुतोस्माक व्याघ्रकृत्तयश्च । यावद्विलुलितालकमुखी गृहे परिष्वस्ते विलसति स्नुषा ॥ का विषमा दैवगति –किं लब्ध यत्नतो गुणग्राही । किं सौख्य सुकलत्र किं दुग्राह्य खलो लोक ॥ **अतिशयेनेति ।** अतिशय कारणस्य कारणान्तरतो विलक्षणता यस्यैव मणस्तस्यैव वेदना भणति तज्जनोलीकम् । दन्तक्षत कपोले वध्वा वेदना सपत्नीनाम् ॥ उदीर्णमुद्गतम् । कुकूल तुषाग्नि । सिंहिकासुत सिंहो राहुश्च । अत्र न परं शशेनात्मरक्षा समासादिता यावदेव स्वयमेवाधिगतमहाबाध स्वाश्रयबाधेनाश्रयणक्रियाध्वसात् । **विपुलेति ।** अत्र हीनेन गुरुकार्यं कृतमिति विषमत्वम् । एवमधिकेपि य स्वल्पमपि प्रयोजन न विदधाति तदपि विषम यथा–किं ददातु किमधातु भर्तव्यमरणाकुल । उदारमतिरात्मोपि जगन्नितयमात्रके ॥ इति । **माति** वर्तते । अनेनाश्रयस्य महीयस्त्वमुक्तमन्यथा मानस्यासभवात् । **सवधीति ।** सवधि वक्त्र तेनेंदो सवध समत्वात् । **अपांगेति ।** अत्रागमेन मदोदयस्य न धर्मसाम्यादैकात्म्यमतिशयाय विवक्षितमिति त्वनासादितत्स्वभावमिद वस्तुत एव बलीयस्त्वात् तस्य तिरोधानहेतु । सामान्ये तु यदैकात्म्य तदसदेव प्रस्तुततिरोधानयातिशयोक्तया विवक्षितमिति सिद्धोस्य ततो व्यतिरेक । **दृष्ट इति ।** दृशिरत्रोपलब्धिमात्रवचन । स्मारिता इति घटादिपु पठितस्य स्मरतेर्मित्त्वेपि मिता ह्रस्व इति न ह्रस्व तद्विधौ वेत्यस्यानुवृत्तस्य व्यवस्थितविभाषात्वात् । करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य । सस्मृतपाचजन्यस्य नमत कृष्णस्य रोमाञ्चम् । **अनयैव रीत्येति ।** अनेन बहुप्रकार वैचित्र्यमस्य दर्शितम् । तेनोपमानस्योपमेयतानुकल्प्यतामात्रप्रतिपादनमपि प्रतीपम् । यथा वदनमिद समर्मिदो सुदरमपि ते कियच्चिर न भवेत् । मलिनाश्च कपोले लोचनसलिले हि कज्जलवदिति ॥ गुण प्रधानगुण शुक्लादिको धर्म । **अपरित्यक्तेति ।** तद्गुणादस्य विशेष दर्शयति । तत्रैरस्य गुणपरिहारात् । **प्रतीतेश्चेति ।** न हि मातमभात भवतीति । सा वसति तव हृदये सैवाक्ष्णो सा च श्रवणयो । अस्मादृशीना सुदर अवकाश कुत्र पापानाम् ॥ गङ्गाम्भस्त अरुण । करीरमकुर । धवलोसि यद्यपि सुदर तथापि त्वया मम रंजित हृदयम् । रागभृतेपि हृदये सुभग निहितो न रक्तोसि ॥ धवल कामुकोपि रंजित जनिताभिषगमपि ।

राग प्रसक्तिरपि । अत्र पूर्वार्धे विरोधो न तूत्तरत्र भिन्नाधारतयैव रक्ता रक्तत्वयो प्रतीते । **किंचेति** । स्फीततमेपि गुणो गुणान्तरसंपर्केण किंचिदन्यथात्वं गतो दृष्ट । यदा तु न गच्छति तदाप्यतद्गुण इति प्रकारान्तराश्रयणम् । **अंगेत्यभीष्टामन्त्रणे** । सैवेनान्यादृशी या न चीयत इत्यध्याहृतेन यदा समन्वय । **यथासंभवमिति** । न सर्वेषामेव लक्षितानामपि तु केषांचित् । तत्रापि तेषां मध्ये क्वचिद्द्वयो क्वचित्त्रिचतुराणामिति यथा योगम् । सन्देहेथ विषयभेदेन त्रिरूपाया अपि संसृष्टेश्चैकरूपत्वेति प्राग्युक्तमभिधान न विरुध्यते नैरपेक्ष्यलक्षणस्य रूपस्याभिन्नत्वात् । संकरस्तु स्वरूपेणैव नानात्वेनावभासत इति युक्तस्तत्र निरूपतया व्यवहार । स नास्त्यत्र ग्रामे य एता सर्वत. प्रसरत्प्रत्यूषाम् । तरुणाना हृदयलुंठिं परिष्वष्कमाना निवारयति ॥ न विश्रान्तिजुष अविश्रान्तिजुष । ताटंक कर्णाभरणभेद । तुलाकोटिर्नूपुरम् । **लूनायामिति**–लूञ् छेदने । छिन्नायामित्यर्थ । गुंजा रक्तिका । करा रश्मय करश्च पाणि । वैराग्य लौहित्यापगम विषयवैतृष्ण्य च । **पूर्ववदिति** । तथाह्यत्रोपमा श्लेषस्योत्थापकतयोपकारिणी । श्लेषोपि तथैव । रूपकोत्प्रेक्षयो तैस्तु समस्तै साक्षात्सपर्संर्ग न यथासंभवमुपमोपकृतता तदुपकृततया एव तस्या सचेतसा प्रचुर चमत्कृतिहेतुत्वात् । **मुख्येपीति** । उपमापक्षे कलके उपचार एवेति । न च सदाश्रयणं युक्तम् । तस्यागतिकगतित्वात् । **अतिपातिनो** जवेन व्रजन्त सारावाः सशब्दा नदा यत्र तादृशीयं तटी भ्राजते । अभिहतो दानवानां रास सिंहनादो येनेति शम्भो संबोधनम्। सा चेयं गजसहति यूथमतिपाति विशेषेण परित्रायते । अविरतेन सततेन दानेन मदेन वरा श्रेष्ठा सारा स्थिरा वन दयते रक्षति । यदा देङ् रक्षणे । अवन वा रक्षण ददाति या । **परस्परापेक्षे** इति इतरेतरविवेकेन द्वयोरिह वृत्तेरसंभवात् । अपेक्षैव च परस्परमनुग्राह्यानुग्राहकभाव तद्वशेन तयोर्विदग्धाना चेतसि परं चमत्करणात् । द्वितीय संकर इति न त्वनिश्चयाख्य पृथगलंकार । समुच्चयेन समुच्चयद्योतिना च शब्देन । यथा गभीरो यथा रत्ननिर्भरो यथा च निर्मलच्छाय । तथा किं विधिना सरसपानीय सरसवाणीकश्च जलनिधिर्न कृत ॥ तह इति तथेत्यस्यार्थे निपात । आशा दिश आस्थाश्च तमस्तिमिर मोहश्च । **दीपकमिति**–ययेकस्य प्रकृतत्वमपरस्य चाप्रकृतत्वम् । **तुल्ययोगितेति** । यदि द्वयोरपि प्राकरणिकत्वमप्राकरणिकत्वं वा । **अभिधीयत** इति । यद्यपि साधकत्वं बाधकत्वं चोभयमस्यास्ति तथापि प्रधानेन व्यपदेशा भवन्तीति न्यायाद्बाधकत्वेनैवास्य व्यपदेशो न्याय्यो बाधकस्य बलीयस्त्वेनोत्कटतया प्रतीते । प्राधान्यात् रूपक प्रति च बाधक यत्तदेवोपमाविषयमिह साधकत्वं पर्यवस्यति प्रकरणान्तराभावात् । **स्पष्टेति** । यद्यपि सांगमिदं रूपकमखिलवाक्यव्यापि तथापि प्रत्यवयवं रूपकस्य सद्भावात्तया व्यपदेश इत्येकं पदानुप्रवेशोस्य न विरुध्यते । **तत्प्रभेदेति** । तस्य प्रभेदा त्रय प्रकारा तेषां भेदा तत्तदलंकारयोगेनावान्तरविशेषा उत्प्रेक्षावयवादय । **विशिष्टस्येति** । यत्राश्रयस्य नित्यता नास्ति नित्यत्वेपि तस्य न तस्यान्वयव्यतिरेकौ निबंधन

नित्यस्य व्यतिरेकाभावात् । **रमणमदिरं** रतिवेश्म् । रमणस्य प्रेयसो मदिरमिति तु व्याख्यायाम**कारण**मित्यसगत स्यात् । सदम्भा सत्रभ । ये च दम्भेन सह वर्तन्ते । पात प्रवाह **एकतरस्येति** । यदि तु विपरिणामेन लिंगवचसो परस्याभिसवध तदाभ्या सलक्षणो वाक्यभेद स्यात् । एव चाव्यवधानेन प्रकृताया न प्रतीयते । असदृश इति क्यतत्वादेकवचनान्त लिंग क्विबन्तत्वाद्बहुवचनान्त च । मधुरतया भृतो धृत ता च बिभ्रति । दधत इति दध धारणे इत्यस्य च दधातेश्च यथाक्रममात्मनेपदैकवचनबहुवचनरूपम् । मकर मज्जन स्नान घुश्न च । स्फुरनशुकस्यान्तो यस्या स्फुरद्भि अशुभिश्च कान्ता । मकर केतन काम समुद्रश्च । **उच्चारितमिति** । शब्दत प्रादुर्भूत यथा प्रत्यमेस्यन्न विविक्त कान्तत्वादि । **केवलस्येति** असमासस्थस्य । समासत्वेसौ योग्यताद्यपि प्रतिपादयति । करा पाणयोपि । ताप खेदोपि । मान परिमाणमभिमानश्च । चिरयायिदिनो दीर्घाहो निदाघ । व्यक्तेर्लिंगस्य विशेष पुस्त्व स्त्रीत्व च । नायकनायिकत्तयेति नायकश्च नायिकाचे त्येकशेष । भास्वन्तौ करौ दीप्यमानौ पाणी भास्वतश्च करा घृणय । अस्वाप दुर्लभ यत्फल तत्र लुब्धानामीहित प्रददाति । स्वापस्य फले विश्रातो यो न लुब्ध तत्र हित प्रददाति च । **न कपते** न बिभेतीत्यर्थ । **अन्येपीति** । तद्यथा विरोधस्यासभव यथा । या घर्मभासस्तनयापि शीतलै स्वसा यमस्यापि जनस्य जीवनै । कृष्णापि शुद्धेरधिक विधात्रुभि विहन्तुमहासि जलै पटीयसी ॥ इति । अत्र घर्मभासस्तनयात्वादीना शीतलत्वादीना च धर्माणा भिन्नाधारतया विरोध उक्त स च न समवतीत्येकाश्रयतयैव तस्यो पपत्ते अन्यथातिप्रसग स्यात् । यद्यपि च तस्या सरितो जलाना च तात्त्विकमेकत्व तथापि शब्दसमर्पितमेषा नानात्वमनुभूयते । अय च विरोध शब्द एवेष्यते । तथा च तेषा भिन्ना श्रयतया तदवस्थस्य एव तस्यासभवात् स चाभिहितवाच्यत्व एव पर्यवस्यति । एकाश्रयतया विवक्षिताना तेषाममुना वाक्येनाभिधानादिति । **इतीति** । विदुषा ध्वनिकृत्प्रभृतीना [illegible] एवैष मार्गे स्वसिद्धान्तस्तत्तत्प्रथगतत्वेन पृथक् पृथगवस्थितोप्येकरूपतया प्रतिभाति तत्र सघटना एव निमित्तम् । विक्षिप्तस्य सुखावबोधार्थमेकत्र समहण या सघटना तद्वशादेवैकान्तताप्रतिभासात् । एतेन च महामतीना प्रसरणहेतुरेष प्रयो प्रथकृतानेन कथमप्यसमासत्वात् परेण च पूरितावशेषत्वाद्विखण्डोप्यखण्डतया यदवभासते तत्र सघटनैव साध्वी हेतु । न हि सुघटि तस्य संदिग्धत्वं कदाचिल्लक्ष्यत इत्यर्थशक्त्या ध्वन्यते ॥ **इति काव्यप्रकाशसकेते दशम उल्लासः ॥ समाप्तश्चाय काव्यप्रकाशसकेत. ॥ कृती राजानकरुचकस्य ॥ इति समाप्त काव्यप्रकाशसकेतम् ॥**

---

# APPENDIX—B

## बालचित्तानुरञ्जनी of नरहरि सरस्वतीतीर्थ

## ॥ दशम उल्लासः ॥

अथ शाब्दानलङ्कारानुक्त्वा आर्थान्वक्तुमुपक्रमत इत्युल्लासयो सगतिमाह–**अर्थेति**। नतु किं–सवधि तत्रापि अनेकालङ्कारबीजभूतत्वात्पूर्वमुपमालङ्कारलक्षणमिति भाव । ननु किमेतत्साधर्म्यमित्यपेक्षायामाह–**उपमानेति**। एवकारव्यावर्त्यमाह–**नेति**। साधर्म्यस्वभावादेव उपमानोपमेयभावयो सिद्धत्वादुपमानोपमेययो साधर्म्यमुपमेत्यर्थ । साधर्म्यस्य अनेकविषयत्वात् भेदग्रहणमतिरिच्यत इत्याशङ्क्याह–**भेदेति**। विभागमाह–**पूर्णेति**। उपमान उपमेय साधारणो धर्म उपमाप्रतिपादका इवादयश्चेति चतुर्णां कथोक्तौ पूर्णोपमा । तेषा एकद्व्यादे शास्त्रीये स्वारसिके वा लोपे लुप्तोपमेत्यर्थ । पूर्णाया पुनरपि द्वैविध्यमाह–**साग्रिमेति**। ननु यथेववादिशब्दाना तुल्यादिशब्दाना च उपमानविशेषणत्वस्य अविशिष्टत्वादिय श्रौती इयमार्थीति व्यवस्था कथमित्याशङ्क्याह–**यथेति**। यथेववादिशब्दानमौभयिकसबधप्रत्यायकत्वे दृष्टान्तमाह–**षष्ठीयदिति**। यथा राज्ञ पुरुष इति राज्ञि तिष्ठती षष्ठी पुरुषमप्याक्षिपती तदुभयनिष्ठ सबध समर्पयति एव यथेववादयोपि । यथा च तत्र शब्दशक्तेर्महिमा न पर्यनुयोगमर्हतीति एवमत्रापीत्यर्थ । एव वाक्ये श्रौतीमभिधाय तद्धितेपि ता योजयति **तथैवेति**। यथा इवप्रयोगे वाक्ये श्रौती उपमा तथैव इवार्थे तत्र तस्येवेत्यनेन सूत्रेण विहितस्य वतिप्रत्ययस्य तद्धितस्य उपादानेऽविशेषात् श्रौती उपमेत्यथ । तुल्यादिशब्दोपादाने आर्थी प्रतिपादयितुमाह–**तेनेति**। तुल्यादिशब्दाना तेन तुल्यमित्यादौ उपमेय एव विश्रान्ति तत्तुल्यमस्येत्यादौ उपमान एव इद तच्च तुल्यमित्युभयत्रापि विश्रान्तिरिति सबध । इवादीनामेकत्र श्रूयमाणत्वेपि न तत्रैव विश्रान्ति किं तु प्रतियोगिगतसबधाभिधाने । तुल्यादीना न तथा किं तु तुल्यत्वनिर्वाहाय साम्यमपेक्षणीयमित्यार्थी उपमेत्यर्थ । एव तद्धितेऽप्यार्थीमाह **तद्वदिति**। स्थितावित्यत्र आर्थीत्यनुषज्यते । समासे श्रौतीमाह–**इवेनेति**। अत्र आर्था प्रसिद्धा। तथा च वाक्यगा समासगा तद्धितगा चेति श्रौती त्रेधा । एवमार्थ्यपि त्रेधेति पूर्णा षड्विधा भवति । तत्र वाक्ये श्रौतीमुदाहरति–**चकितेति**। चकितहरिणलोललोचनायास्तस्या नायिकाया क्रुधि कोपे सति तरुणारुणवत् तारा निर्मला हारिणी कान्तिर्यस्य तत् इदमानन सरोज च सममिति नायक समद विधत्ते । अत्र समशब्दप्रयोगाद्वाक्य एवार्थी उपमा । समासे श्रौतीमुदाहरति–**अत्यायतैरिति**। शौरि कृष्ण चतुर्भिर्भुजैरिव यो राजा अत्यायतै उद्धताना नियमकारिभि दिव्यै प्रभाभि अनपायमयै लक्ष्मीविलासस्थानै चतुर्भिरुपायै सामादिभि सदा भुवन बभार।

अत्र भुजैरिवेति समासे श्रौती उपमा । विभक्त्यलोप इत्यनेन विशेषणविशेष्यभावस बधक्षमत्वस्य ज्ञापितत्वात् । समासे आर्थीमुदाहरति—**अवितर्येति** । हे क्षितीश्वर सफलमनोरथमार्गप्रतिद्धिषु गुणगरिम्णा गीता श्री यस्य । कल्पवृक्षसदृश स प्रसिद्धो भवान्कस्य नाभिलषणीय अपि तु सर्वस्य ( अपि ) । अत्र सुरतरुसदृश, इति समासे आर्थी उपमा । तद्धिते श्रौतीमार्थी च उदाहरति—**गांभीर्येति** । तस्य राज्ञो गाभीर्यगरिमा गगा भुजंगवत् समुद्रवत् । सग्रामे निदाघावरत्नवत् ग्रीष्मकालतरणिवत् दुरालोक । अत्र गगा भुजगवदिति श्रौती तद्धितगा । अवररत्नवदित्यत्रार्थी तद्धितगा । नन्वेतत्पूर्वापरग्रथविरुद्ध यदुत पचमादौ व्यग्यस्योदाहृतमेव इदानीमलकारस्य उदाह्रियते । येन व्यजनाभिधयोरलका र्यालकारयो व्यापार्यव्यापारयो ध्वनिवाच्यालकारस्योथ स्पष्टो विरोधश्चमत्कारस्थान ध्वनिना गुणीभूतव्यग्येन वा प्रयुज्यते । तदधीनत्वादुक्तिवैचित्र्यस्य तल्लक्षणत्वाचालकाराणामित्या शक्याह—**स्वाधीनेति** । **वैचित्र्य चेति** । उक्तिवैचित्र्यमलकार इति निश्चयात् । तदुक्त "रसस्याग विभावाद्या साक्षान्निष्पादकत्वत । तद्वैचित्र्योक्तवपुषोलकारास्तु तदाश्रया" इति । **ध्वनीति** शृगारादिरसापेक्षया । **गुणीभूतव्यग्येति** अवातरवस्तुध्वन्यपेक्षया । **न खलु इति** । निरलकारे व्यग्ये तस्य व्यग्यत्वादेव चारुता। निर्व्यग्ये चालकारे चारुत्व नास्ति। रसध्वनिर्न यत्रास्ति तत्र षष्ठ्य विभूषणम् । मृतायामेणशावाक्ष्या किं फल हारसपदेत्युक्तत्वात् । अत्र तु व्यग्यालकार युगलमलकारातराले व्यग्योल्लेखात् न चारुत्वप्रतीक्षा । यावदुक्तिद्वारा वाच्यवैचित्र्यहृदयालकार स्यास्फुरणात् । नन्वन रसादिलक्षणो व्यग्य किमसत्कल्प नेत्याह—**रसेति** । सर्वनाव्य-भिचारि सर्वकाव्यार्थानुवृत्तम् । अलकारातर चेत्यनेन दृष्टात उत्थाप्यते । यथा बहुलकारे काव्ये कस्यचिदलकारस्योद्रेक एव व्यग्यालकारोभयशालिनि अलकारस्योद्रेक इत्यर्थ । तस्मात केवल एतद्व्यग्ये यावदलकारे समानपातायेपि क्वचित्कस्यचिदुद्रिक्ततया विवक्षा यामन्यस्मिन्नन्यस्यानौल्वण्यात् । तर्हि तादृग्व्यग्यप्रयुक्तोप्यस्ति चमत्कार इत्यत्राह—**अगण यित्वेति** । अगणनमुपेक्षा न त्वनवधानम् । व्यग्यस्याप्यत्र सद्भावात् उदाहृता इति सामान्येन उल्लासार्थं सिद्धप्राय इत्याशयेनोक्तम् । ननु व्यग्यरहिता उदाह्रियतामलकारा येन विषयविवेक इत्यत आह—**तद्रहितत्वेनेति** । विषयविभागमात्रलोभात् उदाह्रियमाण न चमत्काराय । यथा गौरिव गवय इत्युपमा, खलेवाली द्विज ( ४ । यूप ) इति रूपक, स्थाणु पुरुषो वेति सदेह , नेद रजतमित्यपहुति , पीनो दिवा न भुक्ते इति पर्यायोक्ति , समुद्र ( ४ । ▪ ) कुडिकेत्यतिशयोक्ति , अद्रिरग्निमानित्यनुमान, आयतौ टिप्पितावित यथासख्य, पुत्रेण सहागत पितेति सहोक्ति , श्वेतो धावतीति श्लेष इत्यादावित्यर्थ । यद्यपि पचमादावव्यग्य चित्रमि त्युक्त तथापि स्वाधीनभर्तृकेत्यादौ विद्यमानमपि व्यग्य उपेक्ष्य उदाहृत इति न पूर्वोत्तर विरोध इति पूर्वापरविरुद्धाभिधानमिति न शकनीयमित्युपसहरति—**इतीति** । एव पूर्णोपमा मभिधाय लुप्तोपमा विभजते—**तद्वदिति** । तद्वत् पूर्णोपमावत् । वाक्यगा समासगा तद्धितगा च । तत्र श्रौतार्थभेदेन द्वैविध्यम् । तद्धिते (आर्थी) न सभवतीति पचप्रकारेत्याह—**तद्धित इति**। आदिशब्देन देश्यदेशीयवद्बोग्राह्या । वाक्ये श्रौतीमुदाहरति—**धन्यस्येति** । हे चेत ,

धन्यस्य अनन्यसामान्यो य सौजन्योत्कर्षं तेन शाल्ते तस्य राज्ञ अमृतं यथा अमृतवन्मधुरं सत्यं वच करणीयम्। अत्र माधुर्यस्य साधारणधर्मस्य लोपे यथाश्रुत्या धौतत्वम्। वाक्ये आर्थीमुदाहरति-**आरूढकरवालेति**। असौ प्रभु सपराये युद्धे आरूढकरवाल धेमन् शत्रुसेनया दृष्ट सन् कृतान्तेन यमेन सम। कृतान्तेन सम इत्यत्र शौर्यादि साधारणधर्मस्यानुपादानाल्लुप्तोपमा। तथा कृतान्तेन सम इत्यत्र प्रभुरूपे उपमेय एव सदृशत्वलक्षणस्यार्थस्य श्रुत्या विश्रान्तिरिति समसद्भावात् आर्थी। न च करवालारूढि समानधर्म इति वाच्यम्। यमस्य दण्डधारणेन करवालानुगतत्वाभावात्। समासे थौतामुदाहरति-**करवाल इति**। हे सखे, तस्य प्रकृतस्य आचार करवाल (इव?) दारु अमृतोपमा मनो विपक्षस्य तदेतत् चेत्सि यदि जीवसि। तत्समीपावस्थाने तव जीवनमेव दुर्लभमिति भाव। अत्र करवाल इवाचार इत्यत्र इवशब्दयोगे नित्यसमासे इवश्रुत्या धौतत्वम्। अमृतोपमेति समासे आर्थी। विपक्षस्येति तद्धिते आर्थी। वाक्ये समासे च उपमितिकरणस्यानुपादाने धौती नास्तीत्याह-**उपमानेति**। यथेववादिशब्दाना तदर्थं विहितस्य वतेश्च उपमानोपादानमन्तरेण प्रयोगाभावात् धौती न सभवति। आर्थ्यैवेति भाव। वाक्यगामुदाहरति-**सअलेति**। सरसकाव्यस्य सरसकाव्यस्य सअलकरणपरलीसामसिरिविअरण सकलकरणपरमविश्रामश्रीवितरण सरिसिअ सदृश वस्तु असासमेत्तेण अशाशमानेण ण दीसइ न दृश्यते अहवा अथवा ण सुम्मइ न श्रूयते। सरसकाव्यमेवैवविधं नान्यदित्यर्थ। अत्र उपमानस्य कस्यचिद्विशिष्टस्यानुपादानाद्वाक्ये आर्थी उपमा। एतदेव समासगोदाहरणत्वेनोदाहार्यमित्याह **कव्वस्सेति**। कव्वस्सेत्यत्र कव्वस्समिति पाठे आर्थ्येव समासगा। नन्वस्मिन् पादे सरिसिअमित्यनेन पौनरुक्त्यं स्यादित्यत आह-**णूणमिति**। सरिसिअमिति पद दूरीकृत्य णूणपदप्रयोगात्र दोष इत्यर्थ। अपरा पदप्रकारामाह-**धादेरिति**। श इव इत्याद्युपमाद्योतकस्य लोपे सा आर्थी उपमा समासे। उपमानादाचारे अधिकरणाच्चेति कर्माधिकरणयोर्विहिते क्यचि। कर्तु क्यङ् सलोपश्चेति कर्तरि विहिते क्यङि। उपमाने कर्मणि च चकारात्कर्तरि चेति कर्मकर्त्रोर्विहिते णमुलि चेति पट् प्रकारा भवन्तीति श्लोक व्याचष्टे-**धादेरिति**। समास उदाहरति-**तत इति**। तत कुमुदप्रकाशकेन कामिनी कपोलवत्पाण्डुवर्णेन नेत्रानन्दकरेण चन्द्रेण एन्द्री दिक् अलङ्कृता। अत्र कामिनीगण्डपाण्डुनेत्यत्र उपमाद्योतकइवशब्दलोपात् समासगा आर्थी उपमा। तत्रैवोदाहरणान्तरमाह-**असितेति**। प्रतिभटविक्रमदर्शनेऽस्य एवविध आसीत् कृष्णसर्पवत् भीषणखड्गपत्र ग्रहणहिकया उत्कण्ठया आहित स्थापित चित्ते तूर्णचार शीघ्रगमन यस्य स रोमाञ्चितशरीर उद्धता कपोलकान्तिर्यस्य स। अत्र असितभुजगभीषणासिपत्र इत्यत्र इवशब्दलोपात् समासगा आर्थी उपमा। कर्माधिकरणयो क्यचि कर्तरि क्यङि चार्थीमुदाहरति-**पौरमिति**। अयं पौरजन सुतीयति सुतमिवाचरति। कर्मणि क्यच्। विचित्रचरित्रेण प्रसिद्ध असौ सग्रामे अत पुरीयति अत पुर इवाचरति। अधिकरणे क्यच्। सपत्नसेना सग्रामे खड्गहस्तस्य तस्य ललितानि विलोक्य नारीयते नारीव आचरति। कर्तरि क्यङ्। कर्मणि कर्तरि च णमुलि आर्थीमुदाहरति-**मृध**

इति । परे शत्रव त राजान युद्धे ग्रीष्मर्तुसूर्यमिव पश्यति । दर्शमिति कर्मणि णमुल् । स राजा पुन पार्थ अर्जुन इव सचरति अत्र कर्तरि णमुल् । उभयत्र क्यचादिषु यथाविध्यनु प्रयोग इत्यनुप्रयोग । पुनरपि द्वैविध्य पद्यांशमुपादाय व्याकरोति–**एतद्द्विति** । क्विप्-ना समासगाचेति आर्थी द्विधेत्यर्थ । तत्र धर्मलोपे क्विप्गामुदाहरति–**सवितेति** । सविता सूर्य, विधुवति चद्र इवाचरति चद्रोपि सवितरति सवितेवाचरति । तथा यामिन्यो दिनति दिनानी वाचरति दिनानि च यामिनयति यामिन्य इवाचरति । कस्मिन्सति । मनसि सुखदु खवशीकृते सति । अत्र सर्वत्र सर्वप्रातिपदिकेभ्य क्विप् वा वक्तव्य इति आचारे क्विप् । अत्र शीतलत्वादिरो न समानधर्म न च द्योतक इति द्विलोप(क) । ननु आचारे क्विपो विधाना-दाचाररूपस्य समानधर्मस्य सद्भावात्कथ धर्मलोप इत्युच्यते इति चेन्नैवम् । लुप्तप्रत्यया प्रकृति प्रत्ययार्थमपि यद्यपि ब्रूते तथापि वाचकप्रत्ययलोपाद्धान्यलोप इत्युच्यते । यद्वा प्रकृतिव्यतिरिक्तस्य धर्मवाचकस्याप्रयोगाद्धर्मलोप इत्युच्यते इत्यदोष । वादिलोपे समास गामुदाहरति **परिपथीति** । परिपथिना शत्रूणा मनोराज्यशतैरपि दुरतिक्रम युद्धप्रवृत्त असौ राजश्रेष्ठ राजते । अत्र राजा कुजर इव राजत इति उपमित व्याघ्रादिभि सामान्या प्रयोग इति समास । अत्र इवलोपे समासगा । अपमानासहत्वादिसाधर्म्यात् । पुनरपि द्वैविध्य प्रतिपादयति **धर्मेति** । वृत्तौ समासे । दृश्यते आर्थीति शेष । धर्मलोपवती उपमानस्य लोपवती चेति द्विविधा इत्यथ । धमलोपे उपमानलोपे च समासे उदाहरणमाह-**कुडुलेति** । पुष्पोपचये भ्रमरमालोक्य कस्यचिदुक्ति । भ्रमन्मरिष्यसि कटकफलितानि केतकीवनानि मालतीकुसुमसदृश भ्रमर भ्रमन प्राप्स्यसि । अत्र मालतीत्यादि-समासे सौरभादिधर्मस्य तदुपमानस्य अन्यस्योत्कृष्टतरस्य चाऽदर्शने आर्थी उपमा । समासोदाहरणमेव पाठातरे वाक्योदाहरण स्यादित्याह **कुसुमेन सममिति** । प्रकारातरप्रतिपादक पद्यांशमुपादाय अप्रसिद्ध व्याकरोति–**कयचीति** । व्यजने(के?)-वादेर्द्योतकस्य उपमेयस्य च लोपे आर्थी उपमेत्यर्थ । तामुदाहरति–**अरा-तीति** । शत्रुपराक्रमदर्शनेन विकसनशीले लोचने यस्य । कृपाणेन उदग्रौ दोर्दण्डौ यस्य । स राजा सहस्रायुधीयति सहस्रार्जुन कार्तवीर्यार्जुनमिव आत्मान आचरति । उपमानादाचार इति वा क्यच् । वादयो न सति । उपमेय आत्मापि नास्ति । आचारो नाम साधारणो धर्मास्ति इति आर्थी उपमेयाह–**अत्रेति** । उपमानसाधारणधर्मवादीनां लोपे समासगा आर्थीति प्रकारातरमाह–**त्रिलोपेति** । तामुदाहरति–**तरुणिमनीति** । तरुणत्वविषये कृतमदरोत्कन यस्या । रतिविलासे स्वीकृत विभ्रमो यस्या । कामशरै दूरीकृत तारतम्य यस्या । मृगनयना काना मुनेमन हरति । ननु मृगनयनेत्यत्र अवयवावयविनोरभेदविवक्षया यदा मृग एव नयनतया रूपयते तदा रूपकानुगुण समासा-न्तरमिति कथमिदं त्रिलोपेत्याशङ्क्याह–**अत्रेति** । उपमानलोपमानवाचिनी पूर्वपदे यस्य तस्य बहुव्रीहि उत्तरपदस्य च लोप इति येषां पक्ष तेषां मते मृगस्य नयने इव नयने यस्या इति विग्रह । तत्र नयने इव विशाले इति उपमानेवशब्दविशालशब्दानां लोप इति

निरोपा उपमेत्यर्थः । अन्येषां मते निरोपा माभूदित्यत्र तात्पर्यम् । केचिदाय-शलिव इत्युपमेयसाधारणधर्मवाचकलोपे निरोपवतीमुपमामुदाहरति तन्मतं दर्शयितुमाह **–क्रूरस्येति** । अय शलेनान्विच्छतीत्यत्राथ अय शूलदशाजिनीभ्या ठक् । अर्थार्जनोपायरूपस्य क्रूराचारस्य उपमेयस्य अय शूललक्षणेनोपमानेन निगीर्याध्यवसानादतिशयोक्तिरलंकार । ननु क्रूराचारस्योपमेयस्य तैक्ष्ण्यलक्षणस्य धर्मस्य चाक्षुषे लोपे इति **चिरंतनविवक्षिता** निरोपवती उपमेत्यर्थ । उक्तमुपमाप्रपञ्चं संकल्य्य दर्शयति–**एवमिति** । धर्मलोपे पञ्च उपमानानुपादाने वाक्यगा समासगा चेति द्वे इति सप्त । वाद्येलोपे समासे कर्मक्यचि आधारक्यचि क्यङि कर्तृणमुलि कर्मणमुलि चेति पञ्च । इति षोडश । धर्मवाद्योर्लोपे क्विपा समासगा चेति द्वे इति पञ्चदश । धर्मोपमानयोर्लोपे समासगा वाक्यगा चेति सप्तदश । क्यचि वाद्युपमेयलोपे एकेत्यष्टादश । निरोपे च समासगा एकेति एकोनविंशतिर्लुप्ताभेदा । पूर्णाभेदा षडिति पंचविंशतिरुपमाभेदा इत्यर्थ । मालोपमा दर्शयति–**अनेयति** । अनीहया राजश्रीरिव दैन्येन मनस्वितेव हिमागमेन पद्मिनीव सा कामिनी विषादेन मम्लौ । अत्र सर्वत्र म्लानिलक्षणो धर्मो न भिद्यत इत्यभिन्न इति । धर्मभेदे मालोपमामुदाहरति–**ज्योत्स्नेति** । नितम्बिनी नारी चन्द्रिकेव नयनानन्दभूता । सुरेव मदकारणम् । प्रभुतेव समाकृष्ट सर्वलोको यया । अत्र नयनानन्दकरत्वमदकारणत्वादिधर्म प्रत्येकं भिद्यत इत्याह–**भिन्ने वा तस्मिन्निति** । साधारणे धर्मे । मालोपमाया लक्षणमाह–**एकस्येति** । एकस्यैवोपमेयस्य बहूपमेयोपादाने मालोपमेत्यर्थ । धर्मभेदे रशनोपमाया लक्षणमाह–**यथोत्तरमिति** । पूर्वपूर्वस्यैव उपमेयभूतस्योत्तरोत्तरस्याया उपमानतया उपादाने पूर्ववत् मालोपमावत् अभिन्नधर्मत्वे रशनोपमा भवतीत्यर्थ । तामुदाहरति **अनवरतेति** । हे राजन् अनवरतपरकरवितरण सुवर्णदानं तत्र ये जलबिन्दव तैर्भृतो य कर तेन तोषिता अर्थिततिर्येन तस्य तव भणतिरिव मति मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला । अत्र वैमल्य सर्वत्र समानो धर्म । धर्मभेदेन चैनामुदाहरति–**मतिरिवेति** । तस्य नृपस्य मतिरिव मधुरा मूर्ति मूर्तिरिव प्रभावचिता सभा सभेव जयश्री परेषा जेतु शक्या न । अत्र प्रत्येकं माधुर्यादिको धर्मो भिद्यते । धारिराया इत्यादिका न लक्षितेत्याह **इत्यादिकेति** । किमिति न लक्षितेत्यत आह–**एवमिधेति** । दंडिभोजादिभिर्यासां अपरिमितस्य वैचित्र्यस्य प्रकाशयितुमशक्यत्वादित्यर्थ । तर्हि कथं न न्यूनत्वदोषस्तेत्यत्राह–**उक्तभेदेति** । सामान्यलक्षणेन गोडीकाराधिति भाव । एवमुपमालंकारं लक्षयित्वा अनन्वयालंकारं लक्षयति–**उपमानेति** । एकस्यैवेति उक्ताया उपमाया व्यपोह । एकवाक्यग इति वक्ष्यमाणाया उपमेयोपमाया व्यावृत्ति । व्याचष्टे–**उपमेति** । तथा चोक्त 'यत्र तेनैव तस्य स्यादुपमानोपमेयता । असादृश्यविवक्षातस्तमित्याहुरनन्वयमिति' । उदाहरति–**न केवलमिति** । नितान्तधवलेति रैव निर्विलो केवलं निर्विलीव ■ भाति चासर विश्वमायुध धाम तस्य स्पर्श नृत्य तस्य यागा निशाभूता ते प्रसिद्धा तस्या निगमा सद्विग्गमा इव भाति । निर्विनी निर्विनीव सद्विग्गमास्तद्विगमा इवेति एकस्यैव द्वितीयसदृशासम्भवनिवारणम् चमत्कारातिशयस्वबोधनमुभयथा विवक्षा

यतो न विरुद्धधर्माशका। श्रौतश्चायमनन्वय । गगन गगनाकार सागर सागरोपम इत्यादौ द्रष्टव्य ।उपमेयोपमा लक्षयति-**विपर्यास** इत्यादि। तयोरित्यस्य व्याख्यान-**उपमेति**। विपर्यास इत्यस्य व्याख्यान **परिवृत्तिरिति**। अनन्वयत्वस्य व्यावृत्त्यर्थमाह-**अर्थातिति**। महत्या सज्ञाया फलमाह-**इतरेति**। अथाहु 'अन्योन्यमेव यत्र स्यादुपमानोपमेयता। उपमेयोपमामाहुस्ता पक्षान्तरहानिगामिति । साधारणधर्मोपादाने वस्तुप्रतिवस्तुनिर्देशे च द्विप्रकारेयम्। तत्राद्यामुदाहरति-**कमलेति**। हे राजन् यस्य तव मति कमला लक्ष्मीरिव सापि कमला मतिरिव भाति विभा कांति तनुरिव तनुर्विभेव भाति। धृति धरणीव धरणी धृतिरिव सतत विभाति यत। द्वितीयोदाहरण यथा-सच्छायाभोजवदना स च्छायवदनाबुजो। वाप्योंगना इवाभाति यत्र वाप्यगना इव इति। उत्प्रेक्षा लक्ष्यति-**सभावनमित्यादि**। सभावन अध्यवसाय अभिमान तर्क ऊह उत्प्रेक्षेति नार्थातरम्। प्रकृतस्य उपमेयस्य असतो ये धर्मा गुणक्रियारूपास्तेषा प्रत्येक भावाभावाभ्या सभावनयोत्प्रेक्षणमुत्प्रेक्षा । सा च मन्ये प्रभृतिना घोत्यते । तथा चोक्त मन्ये शके ध्रुव प्रायो नूनमित्येवमादिभि । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोपि तादृश । सा च वाच्या इवादिभि प्रदर्श्यते । प्रतीयमानायां पुनरिवाद्यनुपयोग । सा च जातिगुणक्रियाद्रव्याणामप्रकृतानामध्यवसायत्वेन चतुर्धा । प्रत्येक विधिनिषेधाध्यवसायरूपतयाष्टधा । भेदाष्टकस्य च प्रत्येकनिमित्तस्य गुणक्रियारूपत्वे षोडश। तेषा च निमित्तस्योपादानानुपादानाभ्या ३२ भेदा । तेषु च प्रत्येक हेतुस्वरूपफलोत्प्रेक्षारूपत्वे ( भेदा ) षण्णवति वाच्योत्प्रेक्षाया । प्रतीयमानाया अपि भेदा ज्ञातव्या । इति दिग्मात्रम् उदाहरति-**उन्मेषमिति**। हे ललिततनु सुदरि कमलशोभा इति हर्षात् ते पादयो लभेति मन्ये । इतीति किम्। जातिवैरी य चद्र रात्रौ मम उन्मेष न सहते, तस्य इदो सौदर्यदर्प इदीवरदलदृशा अनया प्रसभ शांति नीत । अत्र पादशोभाया उपमेयभूताया उपमानभूतपद्मसौंदर्यात्मना सभावनम्। सौदर्य च गुण । तत्र हर्षादित्युक्तो गुण एव निमित्तम्। क्रियामुदाहरति-**लिंपतीति**। अत्र तमोविषयतया लेपन नभोवर्षण च उत्प्रेक्ष्यत इत्याह-**व्यापनादीति**। आद्यस्य श्लक्ष्णता द्वितीयस्य नीलिमाधिक्यं गुणो निमित्तम्। एवं जात्युत्प्रेक्षादिरुदाहर्तव्यम्। सदेहालकारं लक्षयति-**स सदेहस्त्विति**। भेदो व्यावर्तको धर्म तत्सहितस्तद्रहितश्चेति द्विविध इत्यर्थ । आद्यमुदाहरति-**अयमिति**। अय सूर्य किं स सूर्य खलु सप्तभि तुरगैरेव । एकेनाश्वेन युक्त्त्वात्सूर्यो न भवतीत्यर्थ । तर्हि कृशानु किम्। एष कृशानु सदा दिशो नियत न प्रसरति। सर्वदिक्प्रसरणशीलत्वादयं अग्निर्न भवतीत्यर्थ तर्हि साम्प्रतम् किम्। असौ यम महिषवाहन । महिषवाहनत्वाभावादयं यमोपि न भवति । इति प्रतिभट युद्धे त्वां चिरं समालोक्य विकल्पान् सशयान् कुर्वंति । अत्र वर्णनीयस्य मार्तंडादीना च सशये सति साश्वकसप्तत्वादिर्भेद उत्कृष्यते। कविप्रतिभोत्थापितसशयग्रहणात् स्थाणुर्वापुरुषोवेत्यादिसारतिकसंशयस्यानलकारतेति द्रष्टव्यम् । भेदोक्ताविन्यत्र विवक्षितमर्थमाह-**भेदोक्तावित्ति** । आद्यतयो सशयग्रहण मध्ये निश्चय इत्येव कोटि । आदिमध्ययो सशय अते च निश्चय

इत्यन्या । तदुभयमपि विवक्षितमित्यर्थ । निश्चयातमुदाहरति-**यथेति** । हे हरिणाक्षि एतत् इंदु किं कलङ्क च । कलङ्काभावाच्चन्द्रो न भवतीत्यर्थ । सरसिज किं उदर कुत्र गत । उदकाभावात सरसिजम् । स्मितानि मनोहराणि सविलासानि वचनानि तै परत पश्चात् मुखमिति निश्चितम् । अत्र कलङ्कादिको भेदको धर्म । पर्यन्ते मुखमिति निश्चितमित्युक्तत्वान्निश्चयातत्व च । रुद्रटेनोक्तोयं विभाग कस्मादुद्भटेनोपेक्षित इत्यत आह-**किंत्विति** । व्यज्यमानव्यतिरेकादुच्यमाने निश्चये कश्चमत्कारातिशय इत्युद्भटाभिप्राय इति यावत् । भेदकधर्मानुक्तावुदाहरति-**तदिति** । अस्या सृष्टिविधौ कान्तिप्रदश्चन्द्रो नु । शृङ्गारैकरस स्वय मदनो नु । पुष्पाकरो मासो नु । वेदाभ्यासजड विषयव्यावृत्तकौतूहल- पुराणो मुनि इद मनोहरं रूप कथं नु निर्मातु प्रभवेत् । न प्रभवेदित्यर्थ । अत्र नायिकारूपस्रष्टौ प्रकृतत्व चन्द्रस्य मन्मथस्य मधुमासस्य वेति सदेहे भेदको न कश्चिदुक्त । वेदाभ्यासजडत्वादिस्तु चन्द्रमदनमधुमासेभ्य प्रसिद्धब्रह्मणो वैलक्षण्यम् । न पुनरेतेषामन्योन्यमिति भ्रमितव्यम् । अतश्च सशयावस्थैवात चारुतामुत्पादयति । इतरथा नायिकारूपवर्णने कान्तिप्रभा(द १)त्वादेरनुगमविपर्यासापत्ते । रूपकालङ्कारं लक्षयति-**तद्रूपकमिति** । नन्वपह्नुत्यलङ्कारे अतिव्याप्तिरित्यत आह-**अतीति** । मुख चन्द्र इति सहप्रयुज्यमानयोरनपह्नुतभेदयो साम्योत्कर्षात् अभेदो रूपकमिति विवक्षितत्वान्नातिव्याप्तिरित्यर्थ । एतन्निरवयव सावयव परपरित चेति त्रिधा । आद्य केवल मालालङ्कार चेति द्विधा । द्वितीय च समस्तवस्तुविषय एकदेशविवर्तीति द्विधैव । तृतीय च श्लिष्टभिन्नशब्द- निबन्धनत्वेन द्विविध सत् केवलं मालालंकार चेति चतुर्विधम् । तदेवमष्टावेतद्भेदा । तत्र द्वितीये आद्यभेदप्रतिपादक भेदमुपादाय व्याकरोति-**समस्तेति** । समस्तवस्तुविषय रूपकमिति भेद (१० । शेष) । द्विवचनस्याप्यणीरार्थत्वाद्बहुवचनमविवक्षितम् । तेन आरोपितौ आरोपिता इति च द्रष्टव्य इत्याह-**आरोपिता इति** । उदाहरति-**यथेति** । ज्योत्स्नैव भस्म तच्छुभ्रधवलतारका एवास्थीनि तानि बिभ्रती अन्तर्धानव्यसनाङ्कुरसा । मुद्राशब्द प्रशसार्थं । चन्द्रमुदैव कपाल तस्मिन् लाञ्छन व्याजेन न्यस्तम् । परिमलशब्द प्रशसार्थं । सिद्धाञ्जनपरिमल दधती इव रात्रिरेव कापालिकी योगिनी द्वीपाद् द्वीपान्तर भ्रमति । अत्र आरोप्यमाणा भस्मादय आरोपविषया ज्योत्स्नादय लाञ्छनच्छलेनेत्य पह्नुतेर्विद्यमानत्वात्कथमनेनोदाहरणमित्यत आह-**अत्रेति** । ननु ज्योत्स्ना भस्मेवेत्युपमीयते उत ज्योत्स्नैव भस्मेति निरूप्यते । व्याघ्रादित्वेन वा मयूरव्यसकादित्वेन वा समास उभयोरप्याकृतिगणत्वादिति सदेहसकर न शुद्ध रूपकमिति अत आह-**अंतर्धानेति** । अन्तर्धानरसिकत्व चेतनधर्मत्वात्कापालिक्यामेव मुख्य न रात्रौ । रात्राविवेत्युपमासदेहाभावान शङ्का कार्येति निगमयति-**तदिति** । अथवा पाठान्तराश्रयेण सर्वत्र रूपकेणैव निर्वाह कार्य इत्याह-**अथवेति** । द्वितीये द्वितीयभेदोपपादक सूत्रमुपादाय व्याकरोति-**यौला इति** । आरोप्यमाण । एकदेशे वर्तनात् । उदाहरति- रिउसेणा रिपुसेना । रणतेउरे रणान्तःपुरे । मङ्गलमरअ मङ्गलाम्लता करे कृणतस्स

कुर्वंत । जस्स यस्य । रससमुहीवि रससामुख्येपि । सहसा परमुही पराङ्मुखी होइ भवति । अत्र सर्वविषयत्वप्रतीतिरेकदेशवर्तित्वं कथमित्यत आह–**अत्रेति** । सभामात पुररूपणेन नायिकात्वप्रतिनायिकात्वप्रतीतेरेकदेशवर्तित्वमित्यर्थ । इतोपि विभाग वक्तुकाम उक्तमेकत्र सकलयति–**सांगमिति** । व्याकरोति–**उक्तमिति** । द्विभेद समस्तवस्तुविषयैकदेशवर्तिरूपम् । निरवयवमाह–**निरंगं त्विति** । अगविकल तावत् शुद्ध तदुदाहरति–**कुरंगीति** । अहो सखि यत् इय गीतध्वनिषु कुरगीव अगानि स्तिमितयति यच्च सखीश्रुतमपि कातोदत सखीं पुन प्रश्नयति । प्रश्नवत करोति । चिन्मतोर्लुगितिमतुपो लुक् । क्तपूर्वोक्ट इति न्यायेन द्वितीया । यच्च अनिद्र यथा भवति तथा अत स्वपिति तत् तस्मात्कारणात् अस्या हृदि अभिनवा प्रेमैव लतिका ता प्रेमलतिका सेक्तु मनसिज प्रवृत्त इति वेद्मि । अत्र लतिकालक्षण अवयवी निरूपितो नत्वन्यत्किमपि विशेषणमुक्तमिति निरवयवमिद रूपकम् । आद्यस्य द्वितीय भेदमाह–**मालेति** । यद्यपि कारिकाकारेण मालोपमा पृथङ्नोक्ता तथापि कारिकाद्वयोरेककर्तृकतया अभेदविवक्षया उक्त पूर्ववदिति । उदाहरति–**सौदर्येति** । सौदर्यस्य तरगिणी नदी । तरगिमोत्कर्षस्य हर्षोद्गम धाते कार्मणकर्म । नर्मरहसामुल्लासनामासभू । विद्या वक्रगिराम् । विधे अनवधिप्रावीण्यसाक्षात्क्रिया । पचशिलीमुखस्य बाणा । ललनाचूडामणि सा प्रिया वर्तत इत्यर्थ । अत्रैकस्या प्रियाया तरगिणीत्वादयो बहव आरोप्यते । [ अत्र मुखाद्यवयवानिरूपणानिरवय(व)त्वम् । ] तृतीयस्य लक्षणमाह–**नियतेति** । नियत व्यवस्थितमारोपणमुपायो यस्यारोपस्य एवविध परस्य उत्तरस्य य आरोप तत्परपरित, तद्द्विविध वाचके श्लिष्टे वाचके भेदभाजि वा । तत्राद्यमुदाहरति–**विद्वन्मानसेति** । विद्वन्मानसहस वैरिकमलासकोचदीप्तद्युते दुर्गामार्गणनीललोहित समित्स्वीकार-वैश्वानर । सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो । प्राग्भाव पूर्वभाव । वरवीर वैरिंच वत्सरशत उच्चै राज्य क्रिया । अत्र मानसमेव चित्तमेव सरोविशेष इत्यारोपो हसारोपे निमित्तम् । एवमुत्तरत्रापि वैरिणा कमलाया लक्ष्म्या सकोच एव पद्माना असकोच तत्र सूर्य । दुर्गाणा नगराणाममार्गण लिब्धत्वमेव दुर्गाया देव्या अन्वेषण तत्र महेश । समिता युद्धाना स्वीकार एव समिधा ईधनाना स्वीकार तत्र वह्नि । सत्ये वचने प्रीतिरेव सत्या गौर्य्या अप्रीति तद्विधान दक्षप्रजापते । विजयस्य युद्धोत्कर्षस्य प्राग्भाव प्रथमिकत्वमेव विजयात् अर्जुनात्पूर्वभवत्व तादृश । ननूभयालकारोय श्लिष्टपरपरित नाम । कथमयमर्थालकारेषु गण्यते इत्यत आह–**यद्यपीति** । मानसशब्दस्य पर्याये निक्षिप्ते न भवत्येव रूपकप्रतीतिरिति शब्दालकारता हसशब्दस्य पर्यायेपि क्षिप्ते भवति रूपकमित्यर्थालकारता । अत शब्दार्थालकाररूपमिद रूपक स्यादुभयालकार इत्यत्र कथन उचित न भवति यद्यपि तथापि प्रसिध्द्यनुरोधादत्रोक्तमिति भाव । अथ न केनचिदेतत्परंपरितसदकमुक्तमित्यत आह–**एकदेशेति** । अन्यै-रुद्रटादिभिरेकदेशविवर्तीत्येतदभिधीयते । द्वितीयं प्रकारमुदाहरति–**भेदभाजीति** । हे राजन् जय एव कुजर तस्य आलान गजबधनस्थानम् । विपदेव वारिधि तस्य द्वयदी सेतु । दरवार एव चडमहा सूर्य तस्य पूर्वाद्रि । श्रिय लालोपधानम् । समाम एवामृतसागर

तस्य प्रमथनमेव क्रीडाविधिः तस्मिन्मन्दरः । वीरवैरिवनितावैधव्यदस्ते भुजः राजति । ( जय एव कुञ्जरः ) ननु मानसशब्दवत् एकशब्दोऽत्र उभयार्थोऽस्तीति भेदभाक्त्वम् । लीलोपधानमित्यत्र उपधानपदे श्लिष्टोऽवाचकः इत्यनन्तरोक्तमेव रूपकमत्र ननु यदिदं प्रस्तुतश्रियो वनितात्वमपि निरूप्यत इत्याह—**अत्रेति** । श्लिष्टमालारूपकमुदाहरति—**अलौकिकेति** । हे देव अलौकिकश्वासौ महाश्वासावालोकश्च ज्ञानं तेन प्रकाशितं जगत्त्रयं येन । सद्वंशस्य मुक्तारत्नं भवान् कैर्न स्तूयते । सर्वैः स्तूयत इत्यर्थः । अत्र वंशोऽन्वय एव वेणुः तस्य मुक्तारत्नमिति श्लेषः । कुलस्य वेणुत्वारोपः वर्णनीयस्य मुक्तामणित्वारोपे निमित्तम् । अश्लिष्टमालारूपकमुदाहरति—**निरवधीति** । अनिवर्तितः कौतुकप्रपञ्चो येन एवंविधं यस्य स्थितं स्थितिः निरवधि निराश्रयं च । इह प्रथमः कूर्ममूर्तिः चतुर्दशलोका एव वलयं तासां कन्दः, स भवान् जयति । आदिकूर्मठस्य कन्दत्वे लोकानां धारीत्वं हेतुः । वाचकश्चात्र न श्लिष्टः । मालाप्रस्तावात् रशनामुदाहरति—**किसलयेति** । मदनं लतानां किसलयकरैः कामिनीकरकमलैः कमलिनीनां कमलमुखैः योषितां मुखेन्दुभिः जगतां सन्धि मनो जयति । किसलयान्येव कराः कराः एव कमलानि कमलान्येव मुखानि मुखान्येव इन्दवः इति सर्वेषां परस्परसंघटनाद्रशना । कारिकायामेवंविधस्य लक्षणं किमिति नोक्तमित्यत आह—**नेति** । उक्तिकस्य वैचित्र्यस्याभावात् एवंविधं न लक्षितमित्यर्थः । अपह्नुतिं लक्षयति—**प्रकृतमिति** । प्रकृतस्य उपमेयतायाः । अन्यत् उपमानम् । निषेधशब्दार्थमाह—उपमेयमसत्यं कृत्वेति । अपह्नुतिर्द्विधा अपह्नवपूर्वं आरोपः आरोपपूर्वापह्नवः छलादिशब्दप्रयोगश्चेति । तत्राद्यमुदाहरति । हे शैलतनये पार्वति । परिणतकान्तेः धवस्य वपुषि प्रागल्भ्यं अवाप्त अयं कलङ्को न विलसति । विगलदमृतस्यन्दशिशिरे अमुष्य उरसि गाढं रतिश्रान्ता यामिनीकामिनी शेते इति मन्ये । अत्र वाक्यद्वयेन चन्द्रमसः कलङ्क मुख्यया निषेधवृत्त्या मिथ्यात्वेनावस्थाप्य तत्प्रतिवस्तुभूता हृदयाधिशायिनी निशीथिनी नितम्बिनी सत्यतया अवस्थाप्यते । अथ चापह्नवपूर्वं आरोपः । पूर्वोऽपह्नवो यथा—विरसदमरनारीनेत्रनीलाब्जखण्डान्यधिवसति सदा यः संयमाधः कृतानि । न तु रुचिरकलापे वर्तते यो मयूरे वितरतु स कुमारो ब्रह्मचर्यश्रियं वः—इति । अत्र स्कन्देनाधः क्रियमाणानि नाकनितम्बिनीनेत्रनीलोत्पलानि न पुनरौपवाह्यबर्हिबर्हाणि इति आरोपोत्तरकालोऽपह्नवः । नकारश्रवणान्निषेधस्य मुख्यत्वम् । छलादिप्रयोग उदाहरति—**ददतेति** । हे सखि प्रियविरहकृशो अस्मिन् रागिलोके स्मरस्य कियदेतत् वैरं पश्य । ददतेति दुःखे । सधाट्टि । उपवनेषु ये रसालाः तेषु उद्भासिनो ये मधुकराः तद्व्याजेन कामेन प्रतियामं कालकूटं उद्दीपितम् । अत्र छलप्रयोगस्य निषेधपर्यवसायितामाह—**न सम्भृतानीति** । एकवाक्यं च स्पष्टम् । प्रतीतिरिति । नाभिधेति यावत् । वैचित्र्यान्तरप्रदर्शनाय पुनरुदाहरति—**अमुष्मिन्निति** । शिवदग्धः कामः कुरङ्गाक्ष्याः पृथुस्तनभागे अमुष्मिन् लावण्यामृतसरसि नूनं निपतितः । यस्य नाभ्रस्य अङ्गारकणाः अत्यभिपितुम् नाभिमध्ये रोमावलिव्याजेषु इयं धूमस्य शिखा परिणमति । अत्र प्रकृतस्य तारुण्याभिधायिशब्दाभिधानेऽपह्नव इति पूर्वस्मात् विशेषः । अथ श्लेषं लक्षयति—**श्लेष इति** । एकस्यार्थ-

स्योक्तौ सामान्यसिद्धाया सयोगादिव्यवस्थापकाभावात् उच्चैरनियन्त्रणात् अनेकस्यार्थस्याभिधान अभिधासामर्थ्यं आर्थोपश्लेष इति व्याकरोति—**एकार्थेति** प्रत्यर्थं शब्दनिवेश इति मतमाश्रित्य शाब्दश्लेष उक्त । अय तु एकस्यैव शब्दस्य बह्वर्थत्वमस्तीति मतमाश्रित्योच्यते इति भेद । उदाहरति—**उदयमिति** । विभाना कान्तीना अधिपो राजा उदय समृद्धिं श्रयते प्राप्नोति । दिक् अन्यायमार्गस्तस्य मालिन्य निराकुरुते । निद्रामुद्रां आलस्यस्य प्रकर्ष निधन नाश प्रापयति । क्रिया धर्मक्रिया प्रवर्तयति । स्वैरा अनीतिकारिण । तेपामाचारप्रसूते कर्तन छेदन रचयति । लसत्तेज पुञ्जो विभाति विभाकर सूर्य । अय पक्ष स्पष्ट । नन्वेकस्य शब्दस्य अर्थद्वयवाचकत्व कथमित्याशङ्क्य आह–**अत्रेति** । प्रकरणादेर्नियामकस्याभावात् उभयोर्वाच्यत्वमुचितमिति भाव । समासोक्तिं लक्षयति–**परोक्तिरिति** । श्लिष्टै समानैर्भेदकैर्विशेषणै परस्य अप्रस्तुतस्योक्ति प्रतिपादन समासोक्तिरित्यर्थ । व्याकरोति–**प्रकृतेति** । विशेष्यस्य उपमेयस्य । उदाहरति–**लहीति** । हे राजन् तुह तव । बाहुफंस बाहुस्पर्शम् । लहिऊण लब्ध्वा । जीये यस्या । स रोऽप्युल्लास । सा जयलच्छी जयलक्ष्मी । तुह तव । विरहे । ण होज्जु न भवेत् । सा दुर्बला ननु । बाहुस्पर्शेन पाणिपीडनेन वा दुर्बला निष्प्रभा कृशा च इत्येतानि विशेषणानि कान्तया समानानि । जयलक्ष्मीति विशेष्य तु न सममित्याह–**अत्रेति** । निदर्शनालङ्कारलक्षक सूत्रमुपादाय व्याकरोति–**निदर्शनेति** । उपमाया पर्यवसित सन् स्वार्थनिर्वाहक असभवद्वस्तुसबन्ध निदर्शनालङ्कार । उदाहरति–**क्व सूर्येति** । अत्र वाक्ययो अनुपपद्यमान एव सम्बन्ध । उपमाया पर्यवसितत्वात् उडुपेन सागरतरणमिवेत्ययमर्थो लभ्यते इत्याह–**अत्रेति** । उदाहरणान्तरमाह–**यथेति** । पितनोर्ध्वरश्मिरत्नावहिमरुचौ उदयति सति हिमधाम्नि चास्त याति सति अय गिरि विलम्बितघटाद्वयपरिवारितवारणेन्द्रलीला वहति । अत्र वारणेन्द्रलीला पर्वत कथ वहतीति अनुपपद्यमान एव सबन्ध इति उपमाया पर्यवसानमाह–**अत्रेति** । मालारूपा निदर्शनामुदाहरति–**दोर्भ्यामिति** । भो देव यस्तव गुणान् गदितुमुद्यममादधाति एष पुरुष दोर्भ्यां तरङ्गवतीभुजङ्ग तितीर्षति । करेण हरिणाङ्कबिम्बमादातुमिच्छति । मेरु लिलङ्घयिषति । अत्रापि तत्र तत्रानुपपद्यमान एव सबध इति उपमापर्यवसितत्वान्निदर्शनमालायोगान्मालानिदर्शनालङ्कार इत्यर्थ । सभवद्वस्तुसबन्धानिदर्शनमाह–**स्वस्येति** । व्याकरोति–**क्रिययैवेति** । अवगम्यत इति यत् सा निदर्शनेति सबध । उदाहरति–**उन्नतमिति** । यो लघु पुरुष स उन्नते पदमवाप्य हेलयैव पतेदिति ब्रुवन् पर्वताग्रगत पाषाणकण वायुना कंपित सन् चारु अध पतति । पततीति या पतनक्रिया सा स्व तस्य हेतुलाघवे सति उन्नतपदप्राप्ति तयोरन्वय अर्थ पदमवाप्य यो लघु स पतेदिति विधिक्रियैव बुद्धयाम्यास्य इत्याह–**अत्रेति** । ध्रुवमिति ( १ स ) तत्त्वाननप्रयोगोऽस्ति यत्तुर्जय । इत्यत्र इव सता लोके पतन्तीति उपमाविधानात । उक्तं च–अभवन्वस्तुसबन्धो भवन्या यत्र कल्पयेत् । उपमानोपमेयत्वं कथ्यते सा निदर्शना–इति । अप्रस्तुतप्रशसालङ्कारं लक्षयति–**अप्रस्तुतेति** । व्याकरोति–**अप्रकरणिकस्येति** । अस्या प्रथम पञ्चधा विभागमाह–**कार्य इति** । कार्ये प्रस्तुते तदन्यस्य

कारणस्य वच । निमित्ते प्रस्तुते तदन्यस्य कार्यस्य । सामान्ये प्रस्तुते तदन्यस्य विशेषस्य वच । विशेषे प्रस्तुते तदन्यस्य सामान्यस्य वच । तुल्ये प्रस्तुते तदन्यस्य तत्तुल्यस्य वच इति पंचधा विभाग इत्यर्थ । आद्यमुदाहरति–याता इति। हे मुदरी देशान्तरगता पुरुषा पुन किं न मिलन्ति। अत मत्कृते त्वया चिंता न कार्या। सुतरा कृशासि। स्वभावत एव त्व कृशा चिंतया तु सुतरा कृशा भविष्यसि । अतो मुच चिंतामित्यर्थ । एव सखाप्ये मयि कथयति सति श्यामधरतारकेण निपतत्पोताश्रुणा चक्षुषा मा दृष्ट्वा तया नायिकया हसितेन भाविमरणोत्साह सूचित । यदि मां त्यक्त्वा यास्यसि (गमिष्यसि) तदाह मरिष्य इति सूचितमित्यर्थ । प्रश्नद्वारा कार्यप्रस्तावे प्रस्थानस्य निर्णीतत्वात्कारण मरणोपक्रमसूचनाहस्यमभिहितमित्यर्थ । द्वितीयमु दाहरति–राजन्निति । राजन् राजसुता मा न पाठयति । देव्योपि तूष्णीं स्थिता । हे कुब्जे मा भोजय । कुमारसचिवै अद्यापि किं इत्थं न भुज्यते । इत्थं तवारिभवने पंजरा- दप्यगैर्मुक्त राजशुक शून्यवलभौ चित्रस्थानवगोस्य एकैक आभाषते । शत्रुपलायनरूपकारणे प्रस्तुते पञ्जरशुकवृत्तातलक्षणं कार्यमुक्तमित्याह–अत्रेति । तृतीयमुदाहरति–एतदिति । तस्य पुरुषस्य एतल्लिखमाश्चर्य यत्स जड मुग्धान् वाक्यानेनैव कमलिनीपत्रे धारिणं कण मुक्तामणिरित्यमंस्त । अस्मात् अन्यदपि शृणु । शनै आदीयमाने तत्र अगुल्यग्रलघुक्रियया प्रविलयिनि सति अय मणि इ उड्डीय गत इति अत सुधा अनुदिन न निद्राति । अत्र जडाना स्वल्पेपि महत्त्वसंभावना भवतीति सामान्ये प्रस्तुते मुक्ताभ्रान्तिमत्त्वलक्षणे विशेष उक्त इत्याह–अत्रेति । चतुर्थमुदाहरति । विष्णुना नरकासुरे हते कोपि तन्मंत्री कंचन नरकासुरसुहृद प्रतीदमाह । य वैरनियातनेन सुहृद्वधूबाष्पजलप्रमार्जन करोति स एव पूज्य स पुमान् स एव नीतिमान् । तस्य सुजीवित स श्रियो भाजनम् । विशेषे वक्तव्ये सामान्यमुक्तमित्याह–अत्रेति । पंचमस्य श्रैविध्यमाह–तुल्य इति । आद्यमुदाहरति– पुंस्त्वेति । अयं पुरुष यदि पुंस्त्वादपि प्रविचलेत् यदि अधोपि यायात् यदि प्रणयने याचने सति महानपि न स्यात् लघुरपि स्यादित्यर्थ । तदपि तथापि विश्वमुद्धरन् । केनापि पुरुषश्रेष्ठेन इति ईदृशी इयं दिक् प्रकटिता । कृष्णपक्षे पौरुषत् प्रचलन् अर्धरस्त्रीरूपधरे दैत्यावलंबनात् आदिकमठयाकारेण अधोयान बलियाचनोपक्रमे वामनत्वम् । विधाभ्युद्धरणे वराहादिना पृथिव्याद्यभ्युज्जीवनम् । अत्र कस्मिंश्चित्पुरुषे प्रस्तुत तत्तुल्यस्वभावस्य भगवत परमपुरुषस्य प्रशसा श्लेषेण गृह्यते । विशाखे पुरुषोत्तमत्वदपि श्लेषेण श्लेष । द्वितीयमुदाहरति– येनेति । [illegible] चंद्र या अभ्युदितेन शाति गमितास्ति तत्र रात्रौ ते त्वया प्रतिकूलमेव युज्यते । तस्यैव पादप्रह पुनर्न युज्यते । पादप्रह चरणोपसंग्रह किरणप्रहो न । यदि श्रीणैनेदृक्दृष्टा [illegible] गमनं मनागपि किं न रुद्धत इत्यय । [illegible] [illegible] भवतो जडधामता स्फुटमेव निष्पद्यते । [illegible] [illegible] [illegible] [illegible] । [illegible] तु [illegible] भवति । यथा पूर्वोक्तस्य पुरुषोत्तमस्य । तृतीयमुदाहरति आदायेति । रीता मुखेभ्य परित वार धादाय भवन दुर्जन [illegible] तावत् ।

वारि क्षारीकृत वडवानले हुत च पातालकुक्षिमध्ये विनिवेशितम्। आयव्ययकारिणि पुरुषे प्रस्तुते तत्सदृश समुद्रो वर्ण्यते। एव सादृश्यमानरूपामुपमामुदाहृत्य वाच्यस्य सभवासभवा- नुदाहरिष्यन् सभव तावदाह–**इय चेति**। वाच्ये सभवति प्रतीयमानस्यार्थस्यानध्यारोपेण अध्यारोपानपेक्षयेत्यर्थ । जलाच्छादितभुवनविस्तारपातालमध्यस्य समुद्रस्य लघनेमि यद् हि लोके पोतसाधना बहव पुरुष क्रमन्ते प्रवर्तन्ते। आहो उत दैवात् एष कथमपि रिक्तो भवेत् तदानीं अस्य अवटकुहरालोकनेपि को नाम समर्थ स्यात्। अधृष्यस्यापि प्रभो वरं पूर्णत्वमेव। रिक्तत्व महतोनर्थायेति तात्पर्यम्। अत्र वाच्ये समुद्रे सर्वाप्युक्तरूपा प्रक्रिया सगच्छते। वाच्यस्यासभवस्थानमुदाहरति–**क्वचिदिति**। भो वस्त्व कथयामि दैवहतक मा शाखोटक विद्धि। वैराग्यादिव वदसि। साधु ज्ञात इदम्। कस्मात्। कथ्यते। अत्र वामेन वटोस्ति। अध्वगजन सर्वात्मना त सेवते। मार्गस्थितस्यापि मे परोपकारकरणे छायापि न। अत्र अचेतनेन सह प्रश्नोत्तरयोरसभवाद्वाच्यस्यासभव। सभवासभवमुदाहरति–**क्वचिदिति**। अपूर्वे रसनाविपर्ययो जिह्वापरिवृत्ति तस्य विधि प्रकार। तस्य गजस्य कर्णयोश्चापल चपलता। सा दृष्टि विस्मृता स्वपरयो दिक् यया। अथवा भूयसा उक्तेन किम्। हे भ्रात भ्रमर सर्वं विस्मृतवानसि। अत शून्यकर सप्रत्युद्धार वारणो गज अद्यापि त्वया निषेव्यसे इति यत् एष प्रह आग्रह क। अन्यत्र रसनाविपर्यय पैशुन्यम्। कर्णचापल कर्णजापोपजापशुश्रूषा। मद दर्प। वारयतीति वारणो निषेधक। अत शून्यकर रिक्तहस्त। अत्र असभवतमशमाह–**अत्रेति**। रसनाविपर्यासादेरध्यारोपशरणत्वाद्वाच्यत्वा सभवेन हेतुर्न भवतीत्यर्थ। सभवतमशमाह–**कर्णेति**। कर्णचापलरूपो हेतुरनध्यारोपित। तत्र वाच्य सभवतीति यावत्। प्रसगात्सभवतीत्यशे अनौचित्यलेशमुद्गिरयति–**मद** इति। मदविस्मृतेत्यादि विरुद्धमित्याकूतम्। उक्तवैपरीत्येन भ्रमरसेवने तस्य निमित्तत्वात्। इदानीमतिशयोक्त्यलकार लक्षयति–**निगीर्येति**। अत्र पचधा बधच्छाया। भेदे अभेद अभेदे भेद सबधे असबध असबधे सबध कार्यकारणपौर्वापर्यविपर्ययश्चेति। तत्र निगीर्येत्यादिना प्रथमो लक्ष्यते। प्रस्तुतस्येत्यादिना द्वितीय। तृतीयो यद्यर्थोक्तावित्यनेन चतुर्थो लक्ष्यते। कार्यकारणयोरित्यादिना पचम। तत्राद्य प्रकार व्याक- रोति–**उपमानेति**। प्रकृतस्य तदन्येन उपमानेन विषयिणा सर्वग्तिस्य विषयरूपतया अध्यवसान एका अतिशयोक्तिरित्यर्थ। तामुदाहरति–**कमलमिति**। स्त्री वर्ण्यते। अनभ्रि कमल कमले च कुवलये नीलोत्पले तानि कमलकुवलयानि कनकलतिकाया सा च कनकलतिका मृदुसुभगा इतीय उत्पातपरपरा का। अत्र मुखादीना कमलादिभिर्भेदेपि अभेदाध्यवसाय इत्याह–**अत्रेति**। द्वितीयमाह–**यच्चेति**। तच्छब्देन प्रस्तुतमुच्यते। सापरा अभेद भेदरूपा अतिशयोक्तिरित्यर्थ। तामुदाहरति–**अण्णमिति**। सामा श्यामा। सामण्णपयावइणो सामान्य प्रजापते रेहव्विअ रेखैव न होइ न भवति। यत अस्या अर्ण अन्यत् एकहस्त स्ट(र)भर्त्य विनास अणार्यिअ अर्न्यैव वत्तगच्छाया वत्तनच्छाया। अत्र स्ट(र)भत्वादीनां अभेदेपि अन्यत्वे नाध्यवसानात् भेद इत्यर्थ। सबधेप्यसबधो द्वितीयो यथा–अस्या सर्गविधौ प्रजापतिरभू-

चद्रो नु कातिप्रद शृंगारैकरस स्वय नु मदनो मासो नु पुष्पाकर । वेदाभ्यासजड कथं नु विषयव्यावृत्तकौतूहलो निर्मातु प्रभवेन्मनोहरमिद रूप पुराणो मुनि ॥ अत्र पुराणब्रह्मनिर्मो- णसबधेप्यसबध उक्त इति पुरा (v l चिर) तना । अस्य तु तदप्यभेद एवातर्भूतमित्याशय । असबधेपि सबधमाह-**यदीति** । अर्थात्सामर्थ्यादसंभविनो यत्कल्पनमिति सबध । उदाहरति-**राकेति**। *राकाया पूर्णिमाया अमृतांशोश्चद्रस्य वपुरकलङ्क चेत् तदा तस्या मुख साम्यपरा- भवमवाप्नुयात् । अत्र वास्तवेप्यसबधे संभावनया सबध ।* अतिमभेदमाह-**कारणस्येति**।उदा- हरति-**हृदयमिति**। आदौ प्रथम मल्लत्या हृदय कुसुमचापबाणेन अधिष्ठितम् । भो रमणी- वल्लभ चरम पश्चाल्लोचनविषय भजता त्वयाधिष्ठितम्। कारणस्य कातेनाधिष्ठितत्वस्य शीघ्र- कारित्व वक्तु कार्यस्य कदर्पाधिष्ठितत्वस्य प्रथममुक्तिरित्यर्थ । प्रतिवस्तूपमालकार लक्षयति- **प्रतीति** । नैक पद द्वि प्रयोक्तव्यमिति कथितपदत्वस्य दुष्टतयाभिहितत्वात् शब्दभेदेन साधारणो धर्म उपमेयवाक्ये उपमानवाक्ये च उपादीयते । वस्तुनो वाक्यार्थस्य उपमान- त्वात् सा प्रतिवस्तूपमेत्यन्वय । उदाहरति-**यथेति** । देवीभाव गमिता देवताल प्रापिता एषा परिवारपद कुटुबत्व कथ भजति खलु । यत देवतरूपांकित रत्न परिभोगयोग्य न भवति । *अत्र परिवारपदयोग्यत्वानौचित्य परिभोगयोग्यत्वाभावश्चेत्येकमेव सामान्य वाक्यद्वयेपि* पृथक् निर्दिश्यते । अस्यैव मालामुदाहरति-**यदीति** । अनलो यदि दहति अत्र किमद्भुतम् । अद्रिषु यदि गौरव तत किम् । महोदधेरेवु सदैव लवणम् । सता प्रकृतिरेवाविषादिता दु खराहितता । अत्र पर्यायातरेण अद्भुताभाव एव प्रतिपाद्यत इति साधारणधर्मोक्तिरिति *मालारूपत्वम् । एवमन्यत्रापि मालावैचित्र्यमूह्यमित्याह*-**एवमिति** । दृष्टातालकार लक्षयति- **दृष्टांत** इति । *साधारणधर्मादीनामित्यत्रादिशब्देनोपमानोपमेययोर्ग्रहणम् ।* उदाहरति-**त्वयीति** । मनोभवज्वलित तस्या मन त्वयि दृष्ट एव निर्वाति निर्वृत भवति । हि यत कुमुद्वत्या कुमुद हिमाशो आलोके विकसति । अत्र निर्वाणस्य विकासेनालना प्रतिबिंबनम् । न केवलमेव साधर्म्येणैव यावद्वैधर्म्येणापीत्याह-**वैधर्म्येणेति** । उदाहरति-**तवेति** । साहसकर्मणि शर्मे सुख यस्य तस्य कर कृपाणातिक आनिनीषत तव आहवे परेषा शत्रूणा भटा योद्धार विशरारवा आहिंसकत्व अगु । हि यत । पासव अवाते स्थिरता दधति । उक्तदार्ष्टांतिकवैलक्षण्येन दृष्टाताभिधानाद्वैधर्म्योदाहरणम् । दीपकालकार लक्षयति-**सकृदिति** । प्रकृताप्रकृतात्मना उपमानोपमेयाना धर्मस्य क्रियादे बहुषु कारकेषु सकृद्वृत्ति क्रियादीपकम् । कारकस्य च बह्वीषु क्रियासु सैव सकृद्वृत्ति कारकदीपकमित्यर्थ । क्रियादिरित्यादिशब्दाद्गुणस्वीकार । तत्राद्यमुदा हरति-**यथेति** । किवणाण कृपणाना धण धन णायाणं नागाना फणामणि सीहाण सिंहाना केसराइ केसरा । कुलवालिआण कुलपा (वा) लिकाना च थणा स्तना अमुआण अमृताना कुदो कुत्त छिप्पति स्पृश्यते । अस्या गाथाया छिप्पति इति क्रिया बहुषु कर्मकारकेषु धनमणिकेसरस्तन- लक्षणेषु वृत्ता दीप्यत इति क्रियादीपकम् । तच्चादिमध्यातभेदात् त्रिविधम् । तत्रातविषयमुदाहृतम् । चरति चतुरभोधिवेलोद्यानेषु इत्यादिकमादिविषयम् । सचारपूतानि दिगतराणीत्यादिक मध्यवि-

षय च स्वयमूहनीयम् । द्वितीयमुदाहरति—**स्विद्यतीति** । नवविवाहा वधू शयने स्विद्यति कूणति वेल्लति विचलति निमिषति तिर्यग्विलोकयति अतर्नंदति चुम्बितुमिच्छति । एतासु बह्वीषु क्रियासु वधूलक्षणकर्तृकारकस्यवृत्तिरिति कारकदीपकमित्यर्थ । मालदीपक लक्षयति—**मालेति** । गुणावहमुत्कर्षहेतु । व्याकरोति—**पूर्वेति** । उदाहरति—**संग्रामेति** । भो राजन् सग्रामागणमागतेन भवता चापे समारोपिते सति परिपन्थियोधनिवहे सामुख्य सप्राप्ते सति त्वया एतै एतत्समासादितम् । कै किम् । कोदण्डेन शरा शरै अरिशिरस्तेनापि भूमण्डल तेन त्व त्वयापि यशोराशि तेनापि लोकत्रयम् । अत्र कोदण्डादिना पूर्वेण क्रमात् शरादीनामुत्तरेषामुत्कर्षो विहित । सामुख्यासादनक्रियानिबधन च दीपन द्वितीयपादस्य पृथक्क्रियायामनौचित्यात् । तुल्ययोगितामाह—**नियतानामिति** । प्रस्तुताप्रस्तुताना स-मासे दीपक व्यासे तुल्ययोगितेत्यभिप्रेत्य व्याकरोति—**नियतानामिति** । प्राकरणिकानामेव तुल्ययोगितामुदाहरति—**पाण्डिति** । हे सखि तव पाण्डु क्षाम वदन सरस हृदय अलस वपुश्च हृदयमध्ये नितात क्षेत्रियरोग आवेदयति । क्षेत्रे परशरीरे चिकित्स्य असाध्य इत्यर्थ । अत्र वदनहृदयवपूंषि प्राकरणिकानि । नायिकावयवभूतत्वात् । तेषा रोगावेदनरूपो धर्म सकृदुपादीयत इति तुल्ययोगितालकार इत्यर्थ । अप्राकरणिकाना तुल्ययोगितामुदाहरति—**कुमुदेति** । तस्या कान्ताया ललितविलासजुषो दृशो पुर कुमुदकमलनीलोत्पलावली का । तदाननस्य पुर अमृत चद्र कमल च युगपत्प्रतिहतम् । अत्र कुमुदादीन्यप्राकरणिकानि नायिका-लोचनाद्युपमानत्वात्सर्वेषा तेषा च निवृत्तेन क्षिप्यमाणत्व धर्म सकृदुपादीयते । कुमुदस्य लोचनोपमानत्वमन्यैर्दूषितमपि प्रसिध्द्यनुरोधादुक्तम् । एवममृतादीना तन्मुखोपमानभूताना प्रतिहतत्व नाम धर्म सकृन्निर्दिष्ट इत्येव तुल्ययोगितेत्यर्थ । व्यतिरेकालकार लक्षयति—**उपमानादिति** । स एव इति व्यतिरेक इत्येव व्यवह्रियते । न्यूनताया अपि व्यतिरेकत्वात् तद्व्यावृत्त्यर्थमाह—**आधिक्यमिति** । चिरतना खलु भेदप्राधान्ये उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेक इत्यसूत्रयन् । आधिक्यमधिकगुण (त्व) लक्षण यथायोगमुदाहृत्य न्यूनगु-णत्वरूप विपर्यय क्षीण इत्यादावुदाजह्रु । व्याचचक्षिर चद्रापेक्षया यौवनस्य क्षीणगुणत्वं शाश्वि-लक्षण्येन तस्य अपुनरागमनादिति । तत्र विप्रतिपद्यमान आह—**क्षीणक्षीण इति** । हे सुंदरि क्षीण क्षीणश्चद्र भूयो भूयोभिवर्धत इति (सत्यम्) यात यौवन अनिवृत्ति तु अतो विरम कोपं मुच प्रसीद । येनचित् गगननिमीलिताशाली नेत्यर्थ । वाक्यार्थस्य यावत्तात्पर्यमपर्यालोचितत्वादित्याह—**तदयुक्तमिति** । यतोऽत्रापि उपमानादुपमेयस्याधिक्य न विपर्यय इत्याह—**यौवनेति** । चंद्रा-पेक्षया तारुण्यस्य गुणो यदस्थैर्यं तस्याधिक्य अन्यथा वाक्यार्थशक्तिव्याकोप स्यादिति भाव । इत्थं विप्रतिपत्तिं निराकृत्य विभागमाह—**हेत्वोरिति** । त्रिरष्टेति चतुर्विंशति । उपमेयविषयं उत्कर्षनिमित्त न विपर्यय । उपमानविषयं [illegible] निकर्षकारण न विपर्यय । **एकतरस्येति** हेत्वो-रनुक्ती द्वे हेतुद्वयस्य अनुक्तिरेकेति अनुक्तित्रयम् । एतदुक्त भवति । आधिक्यस्य हेतुरुप-मेयगतमुत्कर्षनिमित्त उपमानगत निकर्षकारण अनयोर्हेत्वोरुक्त्यावेको भेद । द्वयोर्हेत्वोरनुक्त्यापर । उत्कर्षहेतोरुक्तौ अपकर्षहेतोरनुक्त्यापर । उत्कर्षहेतोरनुक्तौ अपकर्षहेतोरुक्त्यापर एवं चत्वारो

भेदा । एत एव शब्देन इवादिना अर्थेन तुल्यादिना आक्षेपेण च साम्ये प्रतिपादिते द्वादश भेदा । एते द्वादशभेदा श्लेषेणापि भवंतीति चतुर्विंशति भेदा इति । आद्यमुदाहरति–**असीति ।** बहूना शत्रूणा निरासरणे खड्गमात्रसहायस्य महाधृते अस्य राज्ञ अन्यतुच्छजनस्येव (वि) स्मयो न । अत्र उपमाने तुच्छत्वमपकर्षनिमित्त उपमेये महाधृतित्वमुत्कर्षहेतु अतो हेत्वोरुक्ति । अन्यदप्यनोदाहर्तुं शक्यमित्याह–**अत्रैवेति** । पर्यायेण व्यत्ययेन कदाचिदेकस्य अनुक्ति कदाचिदपरस्येत्यर्थ । नूनमन्यजनस्येव न स्मयोस्य महाधृते–इति पाठे उपमानापकर्ष-हेतोरनुक्ति । अन्यतुच्छजनस्येव न स्मयोस्य महीपतेरिति पाठे उपमेयोत्कर्षहेतोरनुक्ति । नूनमन्यजनस्येव न स्मयोस्य महीपतेरिनि पाठे युगपद्धेत्वोरनुक्ति । उत्तरत्राप्येषारीति-रनुसरणीयेत्याह–**पद्यमिति** । उक्तसाम्यस्य शाब्दत्वमाह–**अत्रेति** । एव श (? शा) ब्देन साम्येन चतुरो भेदानभिधाय पाठभेदेन आर्थेनापि चतुरो भेदानाह–**असीसि ।** तेन तुल्य क्रिया चेद्वतिरिति तुल्यार्थे वतेर्विधानादार्थमौपम्यमित्याह–**तुल्येति** । वतिप्रयोगे हेत्वोरुक्तिरेक तुच्छपदानुपादानेऽपर धृतिपदानुपादानेऽन्य उभयानुपादाने एक इति चत्वारो भेदा इत्यर्थ. । आक्षेपे अपरान् चतुरो भेदानुदाहरति–**इयमिति ।** सुनयना इय दासीकृततामरसश्रिया अकल-केन आननेन कलंकिनमिंदु जयति । अकलंकेनेति उत्कर्षहेतु । कलंकिनमित्यपकर्षहेतु । उभयोरुक्ती एक । आननेन मनोज्ञेन जयतीन्दु कलंकिन इति पाठे (?) उत्कर्षहेत्वनुक्तौ द्वितीय । आननेनाकलंकेन जयत्यमृतदीधितिमिति पाठे उत्कर्षहेत्वनुक्तौ तृतीय । आननेन मनोज्ञेन जयत्यमृतदीधितिमित्युभयानुक्तौ चतुर्थ । एव द्वादशभेदानुदाहृत्य शाब्देन श्लिष्टा-नपरान् चतुरो भेदानुदाहरति–**जितेति** जितेंद्रियतया सम्यक् विद्यावृद्धनिषेविण अतिगा-ढगुणस्यास्य गुणा अब्जवद्भंगुरा न भवति । अत्र तत्र तस्येवेति इवार्थ वतिविधानात् शाब्दमौ-पम्यम् । गुणा सौजन्यादय मृणालसूत्राणि चेति गुणशब्द श्लिष्ट । विद्यावृद्धनिषेवण गाढगु-णोत्कर्षे हेतु । भंगुरगुणनिकर्षहेतुर्नोपात्त इति उपमानगतनिकर्षहेत्वनुपादाने शाब्दौपम्ये श्लेष-व्यतिरेकस्य तृतीयो भेदो दर्शित । अवशिष्ट त्रय स्वयमूह्यम् । तुल्यादिना अर्थेनापि चतुरो भेदानुदाहरति–**अखंडेति ।** यस्य श्रीमानखडमंडल एष पृथिवीपति जातु कदा चित् निशाकरवत् कलावैकल्य नागत । अत्र तुल्यार्थे वति तेनतुल्यक्रियाचेद्वति-रित्यनेन । कला विद्याभागश्च । अत्र उपमेये अखडमडलत्वे श्रीमत्त्व हेतु । कलावैकल्यहेतु-र्नोक्त इति उपमानगतनिकर्षकारणानुपादाने आर्थौपम्ये श्लेषव्यतिरिक्तस्य तृतीयो भेदो दर्शित । उभयानुक्त्याद्युदाहरणमाह–**हरवदिति ।** भो विभो त्व कदाचित् हरवत् विषमदृष्टि र्नासि । हरिवद्विधूतविततभूपथनासि । रविरिव दु सहकरतापितभू कदापि नासि । हरेण तुल्य वर्तत इत्यादि तुल्यार्थ वतेर्विधानादार्थौपम्यम् । विषमादय श्लिष्टा इति उपमानोपमेयगतात्कर्षापकर्षहेत्वोरनुपादाने आर्थौपम्ये श्लेषव्यतिरेकस्य चतुर्थो भेदो दर्शित । उत्कर्षापकर्षहेत्वोरन्यतरस्यानुक्तौ उदाहरणद्वय स्वयमूह्यम् श्लेषव्यतिरेकस्याक्षेपे उभयोपादानरूप प्रथम भेदमाह–**नित्योदितेति ।** नित्योदितप्रतापेन भास्वतानेन भूपेन नियामामीलितप्रभ एष भास्वान्विनिर्जित । अत्र वर्णनीये भास्वत्त्व परपरिभवासहत्व अन्यत्र

सूर्यत्वमिति श्लिष्ट इति उपमेयोपमानोत्कर्षनिकर्षहेत्वोरुपादाने आक्षेपौपम्ये श्लेषव्यतिरिक्तस्य प्रथमो भेदो दर्शित । हेत्वोरनुपादाने चतुर्थ भेदमुदाहरति—**यथेति** । यत्र नगर्यां स्वच्छात्मतागुणसमुल्लसितेन्दुबिंब बिंबप्रभाधर अकृत्रिमहृद्यगध अगनानामानन रजनीषु अतीव पिबता यूना तृष्णा जहार मधु न हार । अत्र मधुपक्षे आननशब्दे च समुल्लसितशब्द प्रतिबिंबार्थ । अत्राक्षिप्तोपमात्व कथमित्यत्राह—**अनेति** । अत्र तृष्णाया हरणे हेतुर्नोपात्त इति आक्षेपौपम्ये श्लेषव्यतिरेकस्य चतुर्थो भेदो दर्शित । द्वितीयतृतीयौ स्वयमूहनीयौ । एव श्लिष्टभेदेषु द्वादशेषु श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादाने अन्ये द्वादश भेदा भवति तेष्वुदाहार्यां इत्याह—**इत्थमेवमिति** । या शैशिरी श्रीस्तपसा मासनैकेन विश्रुता । तपसा त्वा सुदीर्घेण दूराद्विदधतीमध ॥ एकत्र तपो माघमास अन्यत्र कृच्छ्रादि अभ्युद यहेतु । इवादयश्चानुपात्ता अपि सामर्थ्यगम्या । अत्र तप इति श्लिष्टोक्तियोग्य पद पृथगुपात्त अतोयमपि श्लेषव्यतिरेक । आक्षिप्तौपम्ये उभयोपादाने सति एवमन्येप्येकादशोप्यूहनीया । आक्षेपालकार लक्षयति—**निषेध** इति । व्याकरोति—**विवक्षितस्येति** । वक्ष्यमाणविषयमुदाहरति—**ए एहीति** । ए अयि सखि एहि गच्छाव कीयेवि वस्या अपि कए कृते किं किमपि णिष्किं निष्कृप ण भणामि न भणामि । अहवा अथवा अल अविआरिअकज्जारंभआरिणी अविचारित-कार्यारंभिणी मरउ म्रियता न भणिस्स न भणिष्यामि । अत्र नि कृप न भणामीत्युक्ते अर्थात्सम्यग्भणामीति प्रतिज्ञा । न भणिष्यामीति निषेधात् वक्ष्यमाणविषयोयमाक्षेप । उक्तविषयमुदाहरति—**ज्योत्स्नेति** । भो विभो । आ खेदे । तस्या अतर्मानस प्रभवता त्वया ज्योत्स्ना मौक्तिकदाम चदनरस शीतांशुकांतद्रव कर्पूर कदली मृणालवलयानि अभोजिनीपल्लवा स्फुलिंगोत्करव्यापाराय भवति । हत इति खेदे । अनेनोक्तेन किम् । न ब्रूमहे । अत्र ज्योत्स्नादीनि तस्यास्तापाय भवतीति सामान्येनोक्तस्य क्वचिदशे निषेध इति उक्तविषयो यमाक्षेप । विभावनालकार लक्षयति—**क्रियाया इति** । व्याकरोति—**हेत्विति** । उदाहरति—**यथेति** । सा नलिनी कुसुमितलताभिरहतापि रुजमधत्त । अभिकुलैर-दष्टापि परिवृत्त [illegible] । लहरीभिरलोलितोप्यघूर्णत । अत्र लताहननादिरूपे हेतुक्रिया-निषेधेपि रुगादिकार्यस्य विशेषेणाभिव्यक्तिर्विभावना । विशेषोक्ति लक्षयति—**विशेषोक्तिरिति** । व्याकरोति—**मिलितेष्विति** । अनुक्तोपाधिन्यनिमित्तभेदान्मा त्रिविधेत्याह—**अनुक्तेति** । आद्यामुदाहरति—**निद्रेति** । निद्रानिवृत्तौ धुरले उदिते सरसिजले द्वारपदे परासे भुजगे श्लथीकृताश्लेषरसे सत्यपि सा स्वमना आलिंगनतो न चचार । अत्र निद्रानाशादिकारणसमग्र्या सत्यामपि आलिंगनपरित्यागरूपं कार्यं न दृश्यत इति विशेषोक्ति । अत्र संभोगलालुप्यरूपं निमित्तं नोक्तमित्यर्थ । उक्तनिमित्तमुदाहरति—**कर्पूर इवेति** । कर्पूर इव दग्धोपि य काम जने जने शक्तिमान् अवार्यवीर्याय तस्मै मकरध्वज नमोस्तु । दाहलक्षणे कारणे सत्यपि अवार्यस्य चास्य कार्यस्याभाव । अवार्यवीर्यत्व न निमित्त मुक्तं । अचिन्त्यनिमित्तमुदाहरति—**स एष इति** । एष कुसुमायुध स श्रीणि लोकानि जयति । यस्य तनु हरतापि शंभुना बल न हृतम् । अत्र तनुहरणे सत्यपि बलहरणस्य कार्यस्याभाव । तत्र

च निमित्तमचिन्त्य पारमेश्वरस्य प्रभावस्य पर्यनुयोगानर्हत्वात् । यथासंख्यालङ्कारं लक्षयति–**यथासंख्यमिति।** प्रथमनिर्दिष्टाः पश्चान्निर्दिष्टाश्चेति द्विविधाः । तेषां मध्ये आद्यैः पश्चान्निर्दिष्टानां क्रमेणान्वयो यथासंख्यालङ्कार इत्यर्थः । तमुदाहरति–**एक इति।** हे देव एकस्त्वं द्विषां विदुषां मृगीदृशां चेतसि क्रमेण शौर्योष्मणा तापं च विनयेन समदरसं च लीलया रतिं च पुष्णन् त्रिधा वससि। चित्रम्। अर्थान्तरन्यासालङ्कारं लक्षयति–**सामान्यमिति।** यत्र सामान्यं विशेषेण समर्थ्यते विशेषो वा सामान्येनेति भेदद्वयम्। तदपि साधर्म्यवैधर्म्याभ्यां द्विविधमिति चत्वारो भेदा इत्याह–**साधर्म्येणेति।** साधर्म्येणाद्यमुदाहरति–**निजेति।** निजदोषेण आच्छादितचेतसां पुरुषाणां सुन्दरमेव वस्तु विपरीतं भाति। पित्तोपहतः पुरुषः शशिशुभ्रमपि शङ्खं पीतं पश्यति। अत्र दुष्टचित्तत्वलक्षणं सामान्यं पित्तोपहतत्वेन विशेषेण समर्थ्यते। **सुसितेति।** सुसिते कौमुदीमहसि कदाचन सुसितवसनालङ्कारायाः स्वैरं यात्या सुदृशि चन्द्रो अस्तंगतोऽभूत्। तदस्तु भवतः कीर्तिः केनापि अभीयत येन यशोगानेन मुक्ताहारा सती इह जगान् अतस्त्वं क शुभप्रदो नासि। अपि तु सर्वत्र। अभिसारिकाकारो विशेषः केति सर्वाक्षेपिणा सामान्येन साधर्म्यद्वारा समर्थ्यते। वैधर्म्येणाद्यमुदाहरति–**गुणानामिति।** धुर्यं पुरुषं गुणानामेव धीरात्म्यात् धुरि नियुज्यते। अनुपजातकिणस्कन्धो गली कुत्सितो गलोऽस्यास्तीति गली यो बलीवर्दः गले बलादासजितं युगं पातयति स गली गौः सुखं स्वपिति। अत्र गुणानामिति सामान्यं गलीति विशेषेण सुखमिति वैधर्म्यद्वारा समर्थ्यते। वैधर्म्येण द्वितीयमुदाहरति–**अहो हि मे इति।** कश्चिदप्रियं दैवोपहतः विवक्षन्नाह–मे आयुषा बह्वपराद्धं अहो यदस्मान्मया ईदृशमप्रियं श्राव्यम्। ये पुरुषाः सुहृदः पराभवमदृष्ट्वैव विनाशं गतास्त एव जगति धन्याः। अत्र सुहृदं प्रति अप्रियं विवक्षन् विशेषरूपः धन्या इति सामान्येन अहमधन्य इति वैधर्म्येण समर्थ्यते। विरोधालङ्कारं लक्षयति–**विरोध इति।** जातेर्जात्यादिभिः सह चत्वारो विरोधाः। गुणस्य गुणादिभिस्त्रयः। क्रियायाः क्रियाद्रव्याभ्यां द्वौ। द्रव्यस्य द्रव्येणैकः। इति दश भेदा इत्याह–**जातिरिति।** जात्या विरुद्धां जातिमुदाहरति–**अभिनवेति।** हे सुभग विधिवशात् त्वद्विरहाशनिपाते अस्याः मृगदृशः नूतननलिनीपल्लवमृणालस्वरूपादिकं दावानलराशिः। अत्र नलिनीत्यादिजात्या दवदहनजातिर्विरुद्धा विरुद्धगुणत्वात्। सा च विरहवेदनया परिह्रियते। जात्या विरुद्धं गुणमुदाहरति–**गिरय इति।** हे नरनाथ तव समीपे गिरयोऽपि नियतं अनुन्नतिगुणाः। महदपि च बलरहितं। अब्धयोऽपि अगभीराः। भूमिरप्यस्थिरा। अत्र अनुन्नत्यादिर्गुणो गिर्यादिजात्या विरुध्यते। वर्णनीयस्य महाप्रभावतया परिह्रियते। जात्या विरुद्धां क्रियामुदाहरति–**येषामिति।** हे राजन् तीक्ष्णः स प्रसिद्धः सर्पोऽपि येषां राज्ञां कटपरिमर्दनक्षिप्तां अन्य अनुरज्यते अनुरक्तो भवति संगरभूमिषु मनःसु तेषां विपुलं पांसुना पदं त्वया प्रगाढन विधिर्निष्पादितं पांसुरम्। अत्र तीक्ष्णस्य सर्पजात्या सानुरञ्जनक्रिया विरुध्यते। पांसुलत्वस्य मेदनक्रिया विरुध्यते राजारिविनयेन समाधीयते। श्लेषच्छाया वा( ? / वा )ऽस्य छत्रधारिणी। जात्या विरुद्धं द्रव्यमुदाहरति–**सृजतीति।** य इदं जगदेकदेव सृजति अवति च संहरति च

सोपि जनार्दन अवसरवशान्मत्स्यो जात इद चित्रम् । अत्र शफरत्वजातेर्भगवता जनार्दनद्रव्येण सह विरोध । स जगद्रक्षणेन परिह्रियते । गुणेन विरुद्धं गुणमुदाहरति—**सततमिति** । हे नृपते त्वयि सति द्विजपत्नीना सरोजसुकुमारा करा सतत मुसलासगात् बहुतरगृहकार्यघटनया कठिना भवति । अत्र सौकुमार्यस्य गुणस्य काठिन्यगुणेन विरोध । । राजौदार्यो-त्कर्षमाधीयते । गुणेन विरुद्धा क्रियामुदाहरति—**पेशलमिति** । कोमलमपि दुर्जनवचन *अतत्त्वविदा तत्त्वज्ञाना पुरुषाणा मानस दहतितराम् । कर्कशमपि सुजनवाक्य चदनरसव-* त्प्रमोदयति । अत्र पेशलत्वस्य गुणस्य दाहलक्षणक्रियया पारुष्यस्य प्रमोदरूपया च विरोध । स खलवचनस्य दु सहत्वात् सुजनवाक्यस्य हृद्यत्वाच्च परिहरणीय । गुणेन विरुद्ध द्रव्यमुदाहरति—**क्रौञ्चेति** । यन्मार्गणानर्गलशातपाते सति उद्दामदृपद्दृढ असौ क्रौंचाद्रि नवाम्भोजदलाभिजात अभूत् स भार्गव अपूर्वसृष्टि सत्यम् । शातो वक्रम् । अत्र कमलदलवत्सौकुमार्यस्य गुणस्य पर्वतविशेषरूपद्रव्येण विरोध । स च भार्गवस्य गाढप्रहारितया समाधीयते । क्रियया विरुद्धा क्रियामुदाहरति—**परिच्छेदेति** । परिच्छेदरहित सरस्वचनानामगोचर । पुन अस्मिन् जन्मनि य अनुभवपथ न गतवान् । विवेकनाशात् उपचितमहामोहगहन कोपि विकार अतर्जडयति च ताप च कुरुते । अत्र जडीकरणतापकरणयो क्रिययोर्विरोध । औत्सुक्योत्कर्षात् परिह्रियते । क्रियाविरुद्ध द्रव्यमुदाहरति—**अयमिति** । तृष्णातरलितमनोभि अस्माभिरयमेको जलनिधि वारा उद-काना निलय रत्नाकर इति च श्रित । निजकरपुटीकोटरगत ताम्यत तिमय मत्स्या मकराश्च यस्मिन् । एत समुद्र मुनि अगस्त्यमुनि आपास्यतीति क एव जानीते । अत्र जलधिपानक्रियाया अगस्त्यरूपद्रव्येण सह विरोध । स अगस्त्यमहिम्ना परिह्रियते । द्रव्येण विरुद्ध द्रव्यमुदाहरति—**समदेति** । हे क्षितितिलक राजन् त्वयि तटभुवि सति शबर-चूडापगापि समदमनगजमदजलनिष्यदतरंगिणीपरिष्वगात् कालिंदी भवति । अत्र गगाकालिंदीद्रव्ययोर्विरोध मदजलकृतनीलिमसत्त्वेन परिह्रियते । स्वभावोक्त्यलङ्कार लक्ष-यति—**स्वभावोक्तिरिति** । द्वयो क्रियारूपयोर्वर्णन स्वभावोक्ति । रूप च द्विधा वर्ण सस्थान च । ननु डिंभादेरिति पष्ठ्यैव क्रियारूपयोस्तत्संबंधित्वावगमात्किं स्वशब्दोपादानेनेत्याशङ्क्याह—**स्वयोरिति** । उदाहरति—**पश्चादिति** । शयनादुत्थित अश्व पश्चादघ्री प्रसार्य त्रिनततिविततन अग सर्वं द्राघयित्वा दीर्घीकृत्य आभुग्नकठ सन् उरसि मुखमासज्य धूलिधूम्रा सटा विधूय घासग्रासाभिलाषादनवरतचलत्प्रोथतुंडो मंदं शब्दायमान खुरेण क्ष्मां लिखति । अत्राघ्रिप्रसरणागदीर्घीकरणमुखासक्तोत्क्षालनानि सटाधू-नोत्तय धूलिधूम्रा इति वर्णस्योक्ति चलत्प्रोथतुड इति सस्थानोक्ति शब्दायमानो विलिख-तीति च पदद्वये क्रियाया उक्ति । व्याजस्तुत्यलङ्कार लक्षयति—**व्याजस्तुतिरिति** । मुखे प्रारंभे निंदा श्रूयमाणा निंद्यर्थ । रूढि अन्यथा स्तुतौ वाक्यतात्पर्यमित्यर्थ । प्रारंभे स्तुति श्रूयमाणा स्तुति रूढि अन्यथा निंदायामेव तात्पर्यमित्यर्थ । यत्र स्तुतिरभि-धीयमाना प्रमाणातराद्बाधितस्वरूपा निंदायां पर्यवस्यति तत्र व्याजरूपा स्तुति । यत्र गु

निंदा अभिधीयमाना पूर्ववद्बाधितस्वरूपा स्तुतौ पर्यवस्यति तत्र व्याजेन स्तुति । व्याजनिंदामुदाहरति—**हत्वेति** । उपरोपेन दाक्षिण्येन वध्य मनो येषा तेषा मौलि अग्रणी त्वा हित्वा पर अन्यो न । हे राजन् त्वद्विध कोपि निर्दाक्षिण्यो नास्तीत्यर्थः । रूपावर्जन रमामतरेणान्यत्र न दृश्यते । लक्ष्मीसदृश निर्गुण किमपि नास्तीत्यर्थः । यो भवान्सुरशतैरेत्याश्रिताया श्रिय त्याग तनुते त्यागकृतावमानन प्राप्यापि यस्या रमाया॰ स्थितिस्त्वय्येव । व्याजस्तुतिमुदाहरति—**हे इति** । हेलाजितबोधिसत्व हे तोयधे वचसा निस्तारै निम् । परहिताधाने गृहीतव्रत त्वत्सदृश परो नास्ति । यत् यस्मात्कारणात् तृष्यत पाथस्य जनस्य या सलिलप्रदानरूपोपकारघटना तत्र वैमुख्यमनादर तेन लब्धस्य दुष्कीर्तिपुञ्जस्य प्रोद्वहने मरुस्थलस्य साहायक करोषि क्षारोदरत्वात्। सहोक्त्यलङ्कार लक्षयति—**सा सहोक्तिरित्यादि** । अर्थग्रहण पर्यायस्वीकाराय । यत्सहित्वनुच्यमाने कस्यचिदेव वाचकत्वादिवाचकत्वसिद्धे । वाचकत्व च विविच्यमान क्वचिदभिधायकत्व क्वचिदवबोधकत्व-मित्याह–**उभयस्येति** । उदाहरति–**सहेति** हे सुहअ सुभग तुह तव विउए वियोगे उव्वेरीए (प्र. 1 उव्वेविरीए) उद्वेजनशीलाया तीए तस्या सासदंडा श्वासदंडा दिअहणिसाहि दिवसनिशाभि सह दीहरा दीर्घा वाहधारा बाष्पधारा मणिवलएहि मणिवलयै सह गलति, तणुलदाए चसह तनुलतया च सह जीविदासा जीविताशा दुर्बला । अत्र श्वासदण्डादिविषयस्य दैर्घ्यादे शाब्दत्वम् । यत्र 'सह युक्ते प्रधान' इति तृतीया तत्र नियमेन गुणभावादार्थत्वमित्याह–**श्वासेति** । औपम्यविवक्षाव्यतिरेकेण सहोक्तिमात्र नालङ्कार । यथा अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेष्विति । अस्या माला वैचित्र्य यथा, उत्क्षिप्त सह कौशिकस्य पुलकै सार्धं मुखैर्नामित, भूपाना जनकस्य सशय धिया साक समास्फालित, वैदेह्या मनसा सम तदधुनाकृष्ट ततो भार्गवप्रौढाहकृतिश दलेन च सम भग्न तदैश धनुरिति । अत्र कार्मुक (? कर्म) साहित्यात् सहोक्ति पूर्वेन कर्तृसा-हित्यादित्यपि भेद उन्नेय ॥ विनोक्त्यलङ्कार लक्षयति–**विनोक्तिरिति** । यत्र अन्येन विना अन्य मनु न भवति अशोभन इत्यर्थ । इतर अशोभन इत्यर्थ । आद्यमुदाहरति–**अरु-चिरिति** । शशी निशया विना अरुचि रुचिरहित अशोभन इत्यर्थ । महत्तम इति रूपक समोत्था सा निशा सापि शशिना विना अरुचि । उभयेन विना कामिनो मनो-भवस्फुरित नैव चकास्ति । द्वितीयमुदाहरति–**मृगेति** । अय राजसूनु मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भ । पूर्वं स्त्रीमोहितो व्यवहारज्ञो नासीत् इदानीं तया विना व्यवहारज्ञ शोभन इत्यर्थ । अय तेन दुष्टसुहृदा विना अमृतद्युतिसुन्दराशय । पूर्वं दुष्टसुहृदा दुष्टबुद्धि इदानीं तद्विरहित (? न) शोभनचित्त ॥ परिवृत्त्यलङ्कार लक्षयति–**परिवृत्तिरिति** । अर्थाना समैरसमैश्च वस्तुभिर्विनिमय परिवृत्ति । न्यूनाधिकभावे द्विविधमसम एव द्विधा परिवृत्ति । अत्र किं लक्ष्य किं लक्षणमिति सन्देहे निर्णयायमाह–**परिवृत्तिरिति** । आद्य प्रकारद्वयमुदाहरति । अय मरुत् उदितकुसुमाना तासा लताना मत अभिमत लास्य नृत्य दत्वा असम अधिक आमोद आश्रयति आश्रयते लतासु

अध्वन्याना पाथाना दृशा सहसा आदाय अधिव्याधिभ्रमिरदितमोहव्यतिकर ददति । अहह ! अत्र प्रकारद्वय कथमुक्तमित्यत आह–**अत्रेति** । समेन लास्येन समस्य परिमलस्यादान परिवृत्ति । उत्तमेन दृगादानलक्षणेन व्याध्यादे न्यूनस्य परिवृत्ति । तृतीयमुदाहरति–**नानेति** । हे नृप सप्रहारे युद्धे दृप्तशत्रुसमूहेन कर्त्रा नानाविधे शस्त्रै कृतान् प्रहारान् स्वीकृत्यापीय भू निर्विप्रलम्भ विगतविरह परिरम्भविधिर्यस्या तथा वितीर्णा दत्ता । यथा भूमिस्त्वा न मुञ्चति तथा दत्तेत्यर्थ । अत्र न्यूनेन प्रहाररूपेण उत्तमभूताया वसुधराया परिवृत्तिरित्याह–**अत्रेति** ॥ भाविकालङ्कार लक्षयति–**प्रत्यक्षा इति** । लोकोत्तरतया अत्यद्भुततया वास्तवसनिधव्यतिरेकेण शब्दसबधसमर्थितत्वाच्च प्रत्यक्षा इवेत्युक्तम् । समासातरव्यावृत्त्यर्थमाह–**द्वन्द्वं** इति । भावश्च भावना पुन पुन चेतसि निवेशनम् । उदाहरति–**आसीदिति** । कोऽपि पुरुष स्वनायिका प्रति कथयति । हे कामिनि अत्र ते लोचन अजनमासीत् इति पश्यामि स्वभावेनैव नीलयोस्तव लोचनयो किमजनेन । क्षिप्ताजने इव लोचने प्रतिभासेते इत्यर्थ । तवाकृतिं भाविभूषणसंभारा साक्षात्कुर्वे । तवाकृतिरपि भूषणाभावेपि रामणीयक पुष्णाति अतो भूषणमपि न धारणीयमिति भाव । अत्र पूर्वार्धे भूतस्य लोचनाजनस्य प्रत्यक्षतया प्रतिभास उत्तरत्र भविष्यतो भूषणसभारस्येत्याह–**अत्रेति** । काव्यलिंगालङ्कारं लक्षयति–**काव्येति** । यत्र काव्य (*v. l.* व्योपाय)रूपो हेतु वाक्यार्थस्थित्या विशेषणद्वारेण पदार्थस्थित्या वा लिंगत्वेन निबध्यते तत्काव्यलिंगमित्यर्थ । वाक्यार्थता अनेकपदार्थता एकपदार्थता चेति त्रैविध्यम् । तत्राद्यमुदाहरति–**वपुरिति** । हे पुरारे पूर्वस्मिन् जन्मनि भवत क्षणमपि न प्रणतवानस्मि इतीद वपु प्रादुर्भावान्मया अनुमितं अन्यथा शरीरोत्पत्तिर्न स्यादित्यर्थ । सप्रति नमन्मुक्तः अतनुरह क्षमेप्यनतिभाक् । हे महेश तदिदमपराधद्वयमपि क्षतव्यम् । द्वितीयमुदाहरति–**प्रणयीति** । अघोरघटो मालती प्रत्न् माधवेन सबोधित , हे दुरात्मन् मद्वपु प्रियसखीसलीलपरिहासरसाधिगतै ललितशिरीषपुष्पहननैरपि ताम्यति तत्र वपुषि शस्त्रमुपक्षिपतस्तव शिरसि अकाण्डयमदण्ड इव मदीय एष भुज पततु । तृतीयमुदाहरति–**भस्मेति** । समुत्पन्नशिवप्रसादस्य कस्यचिन्महापुरुषस्य वचनम् । हे भस्मोद्धूलन भवते भद्रमस्तु । हे रुद्राक्षमाले ते शुभमस्तु । महेशगृहालंकारभूतां सोपानपरंपरा हा कष्टम् । अभित इत्यादिना प्रयोगे द्वितीया । हे सोपानपरंपरे त्वमपि स्वस्त्यस्त्विति कष्टम् । अद्य आराधनतोषितेन विभुना महेशेन युष्मत्सपर्यासुखालोकोच्छेदिनि मोक्षनामनि महामोहे निपीयामहे । वपु प्रादुर्भावादिति प्रथम श्लोके पूर्वस्मिन्नम्ये च जन्मनि यदनमनलक्षणमपराधद्वयकारण तदेवापराधनतया परिणत वाक्यार्थो ज्ञान अतो (?s) नमन लक्षणे अपराधहेतुरेव वाक्यार्थं । प्रणयि इत्यादिद्वितीयश्लोके शस्त्रोपक्षेपलक्षणे हेतु पततु भुज इत्येतत्पदद्वयार्थतया परिणत । भस्मोद्धूलनेत्यादितृतीयश्लोके सुखालोकोच्छेदित्व लक्षणे हेतुर्महामोहशब्दैकपदार्थतया परिणत इत्याह–**वाक्येति** । कारकोऽत्र हेतु । ज्ञापक हेतु पुनरनुमानालङ्कारे । अत्र हेतुत्वेनोपनिबद्धस्य हेतुत्वं कर्तव्यं अन्यथाऽर्थान्तरन्यासता पत्तेरिति द्रष्टव्यम् । पर्यायोक्त लक्षयति–**पर्यायेति** । अभिधाव्यापाराभिधेयभावस्पर्शरहितस्य व्यञ्जन-

व्यापारेण यत्प्रतिपादनमभिधानस्य तत्पर्यायोक्तमित्याह—**वाच्येति** । निर्वक्ति—**तदिति**। उदाहरति—**यमिति** । य रावण प्रेक्ष्य मदेन रावणमुखे ऐन्द्रिराल्ढापि निवासप्रीतिरुज्झिता । अत्र कार्यमुखेन रावणस्य स्वर्गजयलक्षण प्रभावो वर्णित । अत्र भङ्ग्यन्तरेण कथन कथमित्यत आह—**अत्रेति** । ननु व्यङ्ग्यमपि शब्देनोच्यत इति व्याहतमित्यत आह—**तेनेति**। व्यङ्ग्यापेक्ष या प्रकारान्तरेणाभिधानसंभवात्। न हि तस्यैव तदैव तथैव विच्छित्त्या गम्यत्व वा वाच्यत्व चेत्याचक्ष्महे। किं तर्हि कार्यादिद्वारेण वाच्यत्व स्वसामर्थ्या व्यङ्ग्यत्वमित्यभिधानान्न व्याहतिरिति भाव ।एतद्दृष्टान्तेन प्रतिपादयति—**यथेति। दृष्ट इति** निर्विकल्पकतयेति शेष ।अविकल्पकतया यदेव गवादिकं दृष्ट तदेव चैत्रादि प्रमाता विकल्पयति न पुनर्यथा दृष्ट तथैव विकल्पयितुमर्हति विकल्पाविकल्पयोरवैलक्षण्यप्रसङ्गादित्यर्थ ।ननु विकल्प्यमानत्वमविकल्प्यमानत्व च कथमेकस्येत्यत आह—**अभिन्नेति** । अविकल्पावस्थाया जात्यादिना यदभिन्नमसंसृष्ट विकल्पानुल्लेखाद्भिन्न च तस्मादेव तद्विकल्पवेलायामभेदेन संसर्गेण च विकल्पयतीति प्रकारभेदात् तत्रापि न व्याहतिरित्यर्थं । उदात्तालंकार लक्षयति—**उदात्तमिति**। कविवर्णनोद्रेकिता समृद्धिरस्य लक्षणमित्याह **संपदिति**।उदाहरति—**मुक्तेति**। केलिविसूनहारगलिता संमार्जनीभिर्हृता प्रात प्राङ्गणसीम्नि मथरचलद्बालाङ्घ्रिलाक्षारुणा मुक्ता दूराद्दाडिमबीजशङ्कितधिय केलीशुका यत्कर्षन्ति तत् भोजनृपते त्यागलीलायितम्। अत्रासंभाव्यमानविभूति त्युक्तस्य वस्तुनो वर्णन कविप्रतिभोत्थापित मनुभूयते।उदात्तस्यैव लक्षणान्तरमाह—**महतामिति**। उपलक्षणपद व्याकरोति—**उपलक्षणमिति**।किंविषयमेतदुपलक्षणमित्यत आह—**अर्थादिति**। अर्थादिति अर्थप्राप्तौ अनर्थपरिहारे च प्रवृत्ता पुरुषा महान्त तेषा रामादीना वर्णनीयेऽर्थे ह्यङ्गभाव उदात्तालंकार इत्यर्थ । उदाहरति **तदिदमिति** । इद तद्दण्डकारण्य यस्मिन् दशरथवचनानुपालनव्यसनी राम बाहु सहाय एकाकी निवसन् रक्ष क्षय चकार । अत्र अरण्ये वर्णनीये राघवचरित अङ्गत्वेन वर्णितम्।नत्वत्र वीररसप्रयुक्तश्चमत्कारोऽस्तीत्यत आह—**न चेति**। अत्र वीररसाश्रयस्य रामस्या प्यङ्गत्व किं पुन रसस्यात न चमत्कार इति भाव । न चास्याङ्गत्वेऽपि रसवदलंकारत्व अस्यो पात्तस्य तदपवादत्वात्। समुच्चयालंकार लक्षयति—**तत्सिद्धिहेताविति** । व्याकरोति—**तस्येति** । उदाहरति—**दुर्वारा इति** । दुर्वारा स्मरमार्गणा । प्रियतमो दूरे। मन अत्युत्सुकम्। गाढ प्रेम। नव वय ।अतिकठिना प्राणा ।निर्मल कुलम्। धैर्यविरोधि स्त्रीत्वम्। मन्मथसुहृत्काल वसत ।कृतान्तो यम अक्षम मारणे समर्थ । सख्य चतुरा नो भवति। इत्थं एव सति विरह कथ नु सोढव्य । अत्र प्रमोपात्ता स्मरमार्गणा एव विरहवैक्लव्य उद्भावयितु प्रगल्भते । तदुपरि वल्लभप्रवासादय समुच्चीयत इत्याह—**अत्रेति** । अत्रान्यै समुच्चयस्यैव सद्योगे असद्योगे सदसद्योगे च अन्यदन्यल्लक्षण कृत तदसंगत एतदुपजीव नेनैव तत्समग्रस्य कर्तु सुकरत्वात् इत्याह—**एष एवेति** । सद्योगे उदाहरति—**कुलमिति** । अमालिन्य कुलं भद्रा मूर्ति श्रुतशालिनी मति अलं भुजबल स्फीता लक्ष्मी अखण्डित प्रभुत्वम्। एते उक्ता भावा प्रकृतिसुभगा स्वभावसुन्दरा । अयं भवल्लक्षणो जन क्षमीभिरेव भावै सुतरा दर्पं भजति । हे राजन् तव त एव अङ्कुशा अपथप्रवृत्तिं न कारयन्तीत्यर्थ ।

अत्र निष्कलङ्कत्वेन शोभनस्य कुलस्य भद्रमूर्त्यादिभिः शोभनान्तरैर्योगः सद्योग इत्याह-**अत्रेति**। असद्योगस्य दुर्वारा इत्युक्तमेवोदाहरणमित्याह-**उक्तेति**। तत्र तु सहत्वादशोभनाना स्मरमार्गणाना अशोभनान्तरैः प्रियप्रवासादिभिर्योगः असद्योग इत्यर्थः। सदसद्योगमुदाहरति-**शशीति**। शशी दिवसधूसरः गलितयौवना कामिनी सरो विगतवारिजं स्वाकृतेर्मुखमनक्षरं प्रभुर्धनपरायणः सज्जनः सततदुर्गतः नृपाङ्गणगतः खलः मे मनसि सप्त शल्यानि। अत्र शोभनस्य शशिनः अशोभनेन दिवसधूसरत्वेन योगः। एवं पदान्तराणां शोभनानां पदान्तरेणाशोभनेन योगो द्रष्टव्यः। ननु दुर्वारा इत्यादावपि सदसद्योगत्वप्रसङ्ग इति वाच्यम्। शश्यादिवत् स्मरमार्गणादिना स्वतःशोभनत्वस्य प्रसिद्ध्यभावात्। समुच्चयस्यैव लक्षणान्तरमाह-**स त्वन्य इति**। अत्र गुणाश्च क्रियाश्चेति द्वन्द्वे गुणयोः गुणानां क्रिययोः क्रियाणां च समुच्चयो न स्यादिति कृतैकशेषाणां द्वन्द्व इत्याह-**गुणौ च क्रिये च गुणक्रिये चेति**। तत्रेणोक्तिरिति यावत्। गुणयोर्यौगपद्यमुदाहरति-**विदलितेति**। भो राजन् विदलितसकलारिकुल इदं घलं आशु विमलं चाभवत्। तानि प्रसलानां मुखानि मलिनानि च जातानि। अत्र वैमल्यमालिन्ययोर्गुणयोर्यौगपद्यम्। क्रिययोर्यौगपद्यमुदाहरति-**अयमिति**। एकपदे तया प्रियया सुदु सह अयं वियोगश्चोपनतः नववारिधरोदयात् अहोभिश्च निरातपत्वरम्यैर्भवितव्यम्। अत्र वियोगोपनतिक्रियाया अह्नामुक्तविशेषणतया भवनक्रियायाश्च योगः। गुणक्रियायोगमुदाहरति-**कलुषमिति**। भो महीपतीन्द्र सितपक्षेहङ्गोदरश्रि तव चक्षुः अहितेषु अकस्मात्कलुषं च तेषां वपुषि आपदां कटाक्षैः पतितं च। अत्र कलुषगुणस्य आपत्कटाक्षपातक्रियायाश्च यौगपद्यम्। अत्र वैयधिकरण्येनैव एकस्मिन्नेव देशे समुच्चयो नान्यत्रेति कश्चित् तदसङ्गतमित्याह-**धुनोतीति**। अत्र क्रिययोरेकाधिकरणयोः समुच्चयदर्शनादसङ्गतमित्यर्थः। पर्यायालङ्कारं लक्षयति-**एकमिति**। व्याकरोति-**एकं वस्त्विति**। स्वत सिद्धिरिति भावः। अन्येन प्रयोजकेनोत्पादनं करणम्। एवं च यदेकं तद्भवति क्रियते चेति द्विधा। तत्राद्यमुदाहरति-**श्रोणीति**। श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः सेवते, पद्भ्यां तरलगतयः मुक्ताः लोचनाभ्यां श्रिताः, वक्षः कुचसचिवतां घत्ते यत्र [ ] अद्वितीयम्। यौवनेन तद्गात्राणां गुणविनिमयः कल्पितः। अनेकस्य तनुतादेरभयत्र भवनम्। एकस्य वस्तुषु भवनमुदाहरति-**नन्विति**। ननु भो कालकूट उत्तरोत्तरविशिष्टपदा इव स्थितिस्तव केनोपदिष्टा। प्राक् अर्णवस्य हृदये अथ अनन्तरं वृषलक्ष्मणो हरस्य कण्ठे, अधुना पुनः खलाना वचसि वससि। अत्र एकस्य कालकूटस्य हृदादिष्वनेकेषु भवनम्। एकस्य पूर्वाश्रयमन्यजता एवानेकस्य भवनमुदाहरति-**बिम्बोष्ठ इति**। हे तन्वि पूर्वं बिम्बोष्ठ एव रागः अदृश्यत। हे मृगशावाक्षि अधुना एव रागः हृदयेपि लक्ष्यते। अत्र एकस्य रागस्य पूर्वमाश्रयं बिम्बोष्ठमत्यजत एव हृदये भवनं प्रदर्शितम्। ननु रागः एकत्र्यस्यमत्र भावविशेष इति कथमेकत्वमित्यत आह-**रागस्येति**। एवंरूपः अवान्तरभेदमन्यस्य एकस्यानेकत्र भवने उदाहरणप्रदर्शनम्। इदानीं द्वितीयं उदाहरति-**संतापेति**। तत्र

तेपा सुराणा तं तत् हिअअ हृदय सिरिसहोअररअणाहरणम्मि श्रीसहोदररत्नाभरणे श्रीकृष्णे एक्करस एक्करस कुसुमवाणेण कुसुमवाणेन पिआण प्रियाणा विंवाधरे णिवेसिअ निवेशितम्। अत्र एकस्य हृदयस्य यथोक्तरत्नाभरणविंवाधरयो असहृतयो वित्ते कुसुमवाणेनेत्युक्त्वा-त्करणरूपत्वम्। पर्यायस्यैव लक्षणांतरमाह—**अन्य** इति। व्याकरोति—**अनेकमिति**। तत्राद्य-मुदाहरति—**मधुरिमेति**। अहो आश्चर्य खलाना मधुरिमरुचिर वच प्रथम पृथु अमृत व्यनक्ति। अथ मोहहेतु तदेव अतागत हालाहल विपमिव कथयति। अत्रानेकममृत विप च एकस्मिन्नाधारभूते खलवचसि भवति। द्वितीयमुदाहरति—**तद्गेहमिति**। नतभित्ति तद्गेह दिव हेतोर्लब्धावकाश इद मदिर, जरती सा धेनु एता घनाभा करिणा घटाश्चरति। क्षुद्र स मुसलध्वनि हद योपिता कल सगीतकम्। आश्चर्य अय द्विज दिवसै इयतीं परा भूमि प्रापित। अत्र एकस्मिन् द्विजे दिवसै अनेक गेहादिक कृतम्। अस्य परिवृत्त्यलङ्कारभ्रम निरस्यस्यति—**अत्रेति**। एकस्यैव कर्तुरिति यावत्। अनुमानालङ्कार लक्षयति—**अनुमानमिति**। व्याकरोति—**पक्षेति**। पक्षधर्मत्व पक्षे व्याप्यवृत्तित्व अन्वय सपक्षे सत्त्व व्यतिरेको विपक्षाद्व्यावृत्ति। अबाधितविषयवादे पक्षधर्मत्वादावतर्भावात् त्रैरूप्यमुक्तम्। अयोगव्यवच्छेद इति अन्यव्यवच्छेदे पक्षादपि व्यावृत्त्यापत्तेरुक्तम्। उदाहरति—**यत्रेति**। यत् लहरीचलाचलदृश एता यत्र भ्रुव व्यापारयति तत्रैव मर्मस्पृश अमी मार्गणा सतत पतति तत्तस्मात्कारणात् चक्रीकृतचाप यथा तथा अञ्चितशरप्रेखत्कर क्रोधन आसा शासनधर स्मर सत्य सदा अग्रत एव धावति। अत्र मार्गणपतन साधन स्मरस्य शासनधरत्व साध्य भ्रूव्यापारो वा साधन स्मरशासनधरत्व साध्यम्। एतदुभयमेकत्रैव धर्मिणि योपित्क्षणे घटते। अत्र साध्यसाधननिर्देशादेवालङ्कारत्वम्। ननु क्रमोच्चारणे व्युत्क्रमोच्चारणे वैचित्र्याभावादित्याह—**साध्येति**। परिकरालङ्कार लक्षयति **विशेषणैरिति**। व्याकरोत—**अर्थादिति**। उदाहरति—**महौजस** इति। महौजस मानधना धनार्चिता सयति लब्धकीर्तय न सहता न भिन्नवृत्तय धनुभृत असुभ तस्य प्रियाणि समीहितु वाञ्छति। महौजस बलिष्ठत्वे सति प्रभोर्वाञ्छित पूरयितु शक्यमिति आकूतमस्य विशेषणस्य। एवमन्यविशेषणेष्वपि साकूतत्व विचार्यम्। विशेष्यपद त्वत्र धनुभृत इति। नत्वपुष्टार्थं पद प्रयोक्तव्य इति वचनात् अत्र पुष्टार्थानि विशेषणान्युपात्तानि अतो दोषत्यागमात्रमेतत् कथ मलङ्कारत्वमित्याशङ्क्याह—**यद्यपीति**। व्याजोक्त्यलङ्कार लक्षयति—**व्याजोक्तिरिति**। व्याक-रोति—**निगूढमिति**। अस्यापह्नुतित्वमाशङ्क्य परिहरति—**न चैपेति**। अपह्नुतौ हि उभयनिष्ठ साम्य न तथात्रेति भेद इति भाव। उदाहरति—**शैलेन्द्रेति**। शैलेन्द्रप्रतिपाद्यमानगि रिजाहस्तोपगूढोल्लसद्रोमाचादिविसृष्टुलाखिलविधिव्यासगभगाकुल हा तुहिनाचलस्य करयो शैत्य इत्यूचिवान् शैलात पुरमातृमडलगणै सस्मित दृष्ट शिव व अवतात्। तस्य व्याजोक्तित्व प्रकटयति—**अत्रेति**। परिसख्या लक्षयति—**किंचिदिति**। चतुर्धा परिसख्या प्रश्नस्य वाच्यत्वमुन्नीयमानत्व च अपोह्यस्य वाच्यत्वमुन्नीयमानत्व चेति। ननु

**प्रतीति**। अत्र प्रश्ने असति उत्तरश्रुतिमात्रेण प्रतिवचनोपलम्भेनैव यत्र प्रश्नोन्नयन पूर्ववाक्य परिकल्प्यन तदेकमुत्तरं एक उत्तरालङ्कार प्रथमार्धे उक्त । तमुदाहरति–**वाणिजेति**। हे वाणिअ हे वाणिजक हस्तिदन्ता वग्धकित्तीअ व्याघ्रकृत्तयश्च आह्माण अस्माक कुतो कुत, जावि यावत् लुलिआलअमुही लुलितालकमुखी मुण्हा स्नुपा घरम्मि गृहे परिसक्कए परिसका मति। जरद्व्याधस्योक्तिरेषा। जरद्व्याधपुत्रस्य स्वकान्तायामतिसक्तनया क्षीणत्वेन हस्तिव्याघ्र–हनने शक्त्यभावात्स्वगृहे दन्तकृत्त्यभाव इति भाव । अत्र हस्तिदन्तादेरसत्त्वाभिधानेन तदर्थिनो वणिज तत्सद्भावप्रश्न परिकल्प्यते इत्याह–**हस्तीति**। नन्वेतत्काव्यलिङ्गमस्त्वित्यत आह–**न चेति**। तद्रूप्य प्रश्नरूपस्य प्रश्नोन्नायकस्य तद्रूप्य काव्यलिङ्गकरण (*v l* लक्षण) नैतत्तादृश मिति भेद इति भाव । भेदे हेत्वन्तरमाह–**नहीति**। जनको हि हेतु काव्यलिङ्ग नैवमुत्तरालङ्कार ज्ञापकत्वादिति भाव । तर्हि अनुमानालङ्कारोऽस्त्वित आह–**नापीति**। अनुमानलक्षणाभावादिति भाव । उपसहरति–**इतीति**। उत्तरालङ्कारभेदप्रतिपादक द्वितीयमर्थं व्याकरोति–**प्रश्नादिति**। तत्र प्रश्ने सति प्रस्तुताभिप्रायानुगुण्येन लोकातिशायितया यदनन्यसभाव्य प्रतिवचन तद् द्वितीयमुत्तरमित्यर्थ । असकृद्ग्रहणस्य प्रयोजनमाह–**अनयोश्चेति**। उदाहरति–**केति**। का विसमा [illegible] विषमा, दिव्वगई दैवगति किं लद्द किं लब्ध जणो जन गुणगही गुणग्राही किं सोक्ख किं सौख्य सुकलत्त सुकलत्र किं दुक्ख ज यत् खलो खल लोको लोक । अस्य प्रश्न परिसख्या–अभेदमाशङ्क्याह–**प्रश्नेति**। अत्र ( *v l* अ ) सभाव्योत्तरे वाच्य एव तात्पर्यात् नान्यव्यपोह इति ततोऽस्य भेद इति भाव । सूक्ष्मालङ्कार लक्षयति–**कुतोपीति**। कुतोपीत्यस्यार्थमाह–**आकारादिति**। सूक्ष्मशब्दार्थमाह–**तीक्ष्णेति**। तीक्ष्णमतिभि कुशाग्रमतिभि सलक्ष्य स्थूलबुद्धिभिरसलक्ष्यश्च । उदाहरति–**वक्त्रेति**। कापि वयस्या तन्व्या कण्ठे वदनस्यदिस्वेदबिन्दुप्रबन्धैर्भिन्न कुङ्कुम दृष्ट्वा तस्या पुंस्त्व व्यञ्जयती सती स्थित्वा पाणौ खड्गलेखा लिलेख। लिङ्गेन उपरिसुरतमनया कृतमिति ज्ञात्वा तज्ज्ञापनार्थं पुरुषयोग्यखड्गलेखा लिलेखेत्यभिप्राय । अत्र वदनस्वेदप्रवृत्तकण्ठकुङ्कुमभेदलक्षणामाकृतिमवलोक्य सख्या परिज्ञात पुरुषायित पाणौ पुरुषैकयोग्यखड्गलेखनलक्षणेन धर्मेण प्रकाशितमित्याह–**अत्रेति**। अत्रैवोदाहरणान्तरमाह **सकेतेति**। विदग्धया कयाचित् सकेतकाले ज्ञातव्ये मनो यस्य विटस्तद्रूपा नेत्राभ्यामर्पिताकूत येन, तादृश विट ज्ञात्वा लीलापद्म निमीलितम्। अत्र विटस्य सकेतकालजिज्ञासा तदीयभ्रूभङ्गादिना इङ्गितेनोपलक्ष्य प्रगल्भया कयाचित् सायसमयोचितेन लीलाकमलनिमीलनेन सकेतसमयोऽभिव्यज्यत इत्याह–**अत्रेति** । सारालङ्कार लक्षयति–**उत्तरति** । पूर्वपूर्वापेक्षया उत्तरोत्तरस्य प्रकर्षकल्पन सार इत्यर्थ । उदाहरति–**राज्य** इति । राज्ये भूमि सारभूता भूमौ पुर पुरे सौधं सौधे तल्प तल्पे अनङ्गसर्वस्व वराङ्गना । अत्र राज्यापेक्षया भूमे साधुत्व तदपेक्षया पुरस्येत्यादि पारिपाट्या वराङ्गनायामुत्कर्षो विश्राम्यति। असङ्गत्यलङ्कार लक्षयति–**भिन्नेति**। व्याकरोति–**इहेति**। उदाहरति–**जस्सेति**। जस्सेअ यस्यैव वणो व्रण तस्सेअ तस्यैव वेअणा वेदना तत् जणो जन अलिअ अलीक भणइ भणति। बहूये वध्वा कवोले कपोले दतखद दतक्षत सवत्तीण सपत्नीना वेअणा वेदना। अत्र

